# THE PANDIT

---

## A MONTHLY JOURNAL

OF THE

## BENARES COLLEGE,

DEVOTED TO

# SANSKRIT LITERATURE.

---

## VOLUME I.

---

BENARES:
PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS & CO.

# INDEX TO VOL I.

काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. I. Benares June 1, 1866. Vol. I.

## शालिकनाथीयप्रकरणपंचिकावर्णनम्॥

एषु दिनेषु मीमांसासूत्रं जैमिनिकृतं शबरस्वामिकृतं तद्भाष्यं भट्टकुमारिलकृतं तद्वार्तिकं पार्थसारथिमिश्रकृता तद्व्याख्या शास्त्रदीपिका माधवाचार्यकृतो जैमिनीयन्यायमालाविस्तर आपदेवीयं लौगाक्षिभास्करो मीमांसापरिभाषेत्यादयो मीमांसाप्रक्रियाग्रन्थाः क्वचित् साकल्येन खंडशो वोपलभ्यन्ते परन्तु मीमांसकमतवादग्रन्था मीमांसासूत्रीयश्लोकवार्तिकयुक्तप्रथमपादस्य लुप्तप्रायतया तत्रत्यविषयविवेचनपरा भाट्टमतस्य गुरुमतस्य प्रभाकरमतस्यचोपपादका भाट्टमीमांसाप्रभृतयो नामतएव श्रूयन्ते तत्रापि प्राभाकरमतस्य ग्रन्थोऽद्यावधि नास्माभिः कोऽपि दृष्ट इत्ययं शालिकनाथमिश्रकृतः प्रकरणपञ्जिकानामकः प्राभाकरमतग्रन्थो मया पंचदशवर्षेभ्यः पूर्वं संगृहीतो ऽस्ति। सच ग्रन्थलेखदृष्ट्या ऽर्वाचीनचिन्तामणिप्रभृतिनैयायिकग्रन्थेभ्यः प्राचीन इत्यनुमीयते यच्चपुस्तकं मया संगृहीतं तदपि प्रायेणातीतवर्षशतकद्वयात् पूर्वं लिखितमस्तीति तस्य जरया लिप्याचानुमीयते। अस्मिंश्चग्रन्थे प्रथमं सर्वमीमांसकग्रन्थरीत्यनुसारेण मीमांसाशास्त्रारंभसार्थक्यबोधकं शास्त्रमुखं नाम प्रकरणं। द्वितीयं शब्दस्य किमनुमानविधया प्रामाण्यमुत स्वातन्त्र्येणेति चिन्तनपरं नीतिपथो नाम। तृतीयं जातिर्द्रव्याद्भिन्ना प्रत्यक्षग्राह्येति व्यवस्थापनपरं जातिनिर्णयो नाम। चतुर्थं सर्वज्ञानानां यथार्थत्वव्यवस्थापनपरं नयवीथी नाम। पंचमं प्रत्यक्षानुमानोपमानशब्दार्थापत्तिरूपप्रमाणपंचकनिरूपणपरैः पंचभिर्मीमांसकान्तराभ्युपगताभावाख्यप्रमाणखंडनपरेणैकेनेति षड्भिरवान्तरप्रकरणैर्घटितं प्रमाणपारायणं नाम। षष्ठं पंचमप्रकरणस्यातिविस्तृतस्य समसनभूतममृतकला नाम। सप्तमं शब्दार्थसंबंधस्यापौरुषेयत्वव्यवस्थापनपरं निर्मलांजनं नाम। अष्टममात्मस्वरूपनिर्णयपरं तत्त्वालोको नाम। नवमं शब्दनित्यतास्थापनपरं न्यायशुद्धिर्नाम। एतानि नव प्रकरणान्यखंडितानि (७८) पत्रैरशुद्धिरहितैः (२२००) श्लोकमितग्रन्थयुतैर्गतानि। दशमंतु मीमांसाजीवरक्षा नाम क्षणिकतावादिबौद्धनिराकरणपरं मम समीपे पंक्तिदशकमितमेव वर्तते।

अथायं ग्रन्थः कियानवशिष्टः स्यादिति चिन्त्यते तथाहि पुस्तके ऽस्मिन् क्वचित् प्रकरणपंचिकेति क्वचिच्च प्रकरणपंजिकेति नाम लिखितमस्ति तत्र प्रथमनामानुसारेणात्र पंचभिरेव प्रकरणैर्भाव्यमुपलभ्यन्तेचात्रोक्तरीत्या दश प्रकरणानि। यदि च प्रथमस्य द्वितीयं। तृतीयस्य चतुर्थं। पंचमस्य षष्ठं सप्तमंच। अष्टमस्य नवमंचांगानि कथंचिदर्थानुरोधात् कल्प्यन्ते तर्हि दशमप्रकरणं सांगं दशवा पंचदशवा पत्राणि स्यादिति संभावयितुं शक्यते। द्वितीयनामानुसारेणतु प्रकरणसंख्या न निश्चीयते पंजिकाशब्दस्य संग्रहमात्रार्थत्वात्। यदितु पंजिकाशब्दस्य पंचानां संग्रहएवार्थोऽतएव तिथिवासरनक्षत्रयोगकरणानां पंचानां संग्रहस्तिथिपंजीत्युच्यत इति तर्हि प्रकृतेऽपि पंचैव प्रकरणान्यत्र सिद्ध्यन्तीति। एतत्पुस्तकारम्भपृष्ठेऽर्वाचीनपश्चिमदेशीयलिप्या (शालीनाथप्रकरणपंचिका १०२६) इतिलिखितमस्ति तेन प्राप्ता षड्विंशत्युत्तरसहस्ररूपा संख्या न

ग्रन्थश्लोकानां नवा ग्रन्थपत्राणां किन्तु पुस्तकवेष्टनस्य यतो ये महान्तं पुस्तकगणं दधति ते सौकर्येण पुस्तकानां प्राप्तये व्यवस्थायैव वेष्टनं तदंतर्गतपुस्तकानिच समानैनै-वांकैनांकयन्ति ।

सोऽयमतिप्राचीन उत्तमो ग्रन्थः केनचिदंशेनान्ति-मेन रहितोऽपि लोके प्रकाशमर्हति सुविचारमयत्वात् साधुसंस्कृतनिबद्धत्वाच्चेति काशीविद्यासुधानिधिनामके पत्रे प्रकरणशो विद्यारसिकजनानांविचारगोचरः करिष्यत इति शम् ॥

काशीस्थराजकीयपाठालये सांख्यशास्त्राचार्यः विट्ठ-लशास्त्री ॥

## ॥ शालिकनाथीयप्रकरणपञ्जिकायाम् ॥

ॐ ॥ श्रीगणेशाय नमः ॥ श्रीभट्टरामेश्वरचरणाभ्यां नमः ॥

श्रीसीताम्बायै नमः ॥ श्रीरामचंद्राय नमः ॥

स्वाध्यायविधिवाक्यार्थविचारे प्रयतामहे ।

प्रभाकरगुरोर्दृष्ट्या मीमांसारंभसिद्धये ॥ १ ॥

अत्र केचिदाचक्षते न मीमांसाशास्त्रमारंभणीयमिति । तद्धि वेदवाक्यार्थविचारोपायभूतन्यायनिबंधनं नच वेदवाक्यार्थो विचार्यो विचारस्य विषयभूतो ऽस्ति नाप्यसौ विचार्य निर्णीतः प्रयोजनमवकल्पते ऽपुरुषार्थत्वात् पुरुषार्थत्वेहि तस्य नोदनैव प्रमाणं स्यात् । नचाविवक्षितार्था सा प्रमाणं भवितुमर्हति । ननु शब्दानामौत्पत्तिकत्वादर्थपरत्वस्य नाविवक्षितार्थता युक्ता । सत्यमेवं वेदैनैवत्वन्यपरतामवगमयता ऽविवक्षितार्थतापाद्यमाना न शक्या वारयितुं । तथाहि । स्वाध्यायो ऽध्येतव्य इति परप्रेरणात्मकविध्यवरुद्धा भावना तव्यप्रत्ययवाच्या प्रतीयते । साच स्वभावतो भाव्यं करणमितिकर्त्तव्यतां चापेक्षते । तत्र न तावदध्ययनमेव समानपदोपात्तं भाव्यतया संबंधमर्हति अपुरुषार्थत्वात् तस्मिन्हि भाव्यतया स्वीक्रियमाणे पुरुषप्रवृत्त्यनुपपत्तेः परप्रेरणात्मकविधिव्यापारभंगप्रसंगात् । नाप्यकवाक्यतया समभिव्याहृियमाणस्य स्वाध्यायस्य भाव्यतया संबंधो ऽवकल्पते विध्यानर्थक्यप्रसंगात् । अंतरेणापिहि विधिं प्रतीयत एवाध्ययनेन स्वाध्यायोऽवाप्यतइति । नच व्रीहीनवहंतीतिवत्नियमार्थो विधिरिति शक्यते वक्तुं अक्रत्वर्थत्वादध्ययनस्य । न खल्वध्ययनस्य क्रत्वर्थत्वे किंचन प्रमाणमस्ति अक्रत्वर्थश्च न नियमस्य विषयः । अवघातादयोहि क्रतावेव नियम्यंते न तंडुलादिस्वरूपे । अवघातेनैव संपादितैस्तंडुलैः

क्रतुफलभावनासिद्धिरिति । प्रमाणांतरस्याविषयत्वात्तेनैव सि-
द्धिरिति न किंचिद्विरुद्धं । स्वाध्यायस्वरूपग्रहणंत्वध्ययनेनैव
सिद्ध्यतीति नियम्यमानं मानांतरविरुद्धं स्वयमनधीयानस्यापि
परपुरुषाधीयमानस्वाध्यायग्रहणदर्शनात् । नचाध्ययनस्वीकृते-
नैव स्वाध्यायेन क्रतुफलभावनासिद्धिरिति अक्रत्वर्थतय
क्रतुसंस्पर्शाभावेन नियमानुपपत्तेरिति । एतेनैवार्थावबोधस्यापि
भाव्यतया संबंधो निरस्तो वेदितव्यः । तथाहि । यद्यप्यधीत
स्वाध्यायात्फलवत्कर्मावबोधो दृश्यत इतितस्यैव भाव्यता
ऽवसीयते तथापि विनापि विधिनाऽन्वयव्यतिरेकाभ्यामध्ययन
स्यार्थावबोधसाधनत्वावगमाद्विधिरनर्थकएव । नचाध्ययनेनै
वार्थावबोधो भावयितव्यइति नियमविधेरर्थवत्ता । प्रकारांत
रेणापि तत्संभवान्नियमानुपपत्तेः । नचाध्ययनेनैवार्थमवबुध्य
नुतिष्ठतां क्रतुफलभावनासिद्धिरिति नियमः संभवति अक्र
त्वर्थत्वादध्ययनस्य । तस्माद्विश्वजिन्न्यायेन स्वर्गएव भाव्यतय
कल्पयितव्ये प्राप्ते फलमात्रे यो निर्देशादित्यार्थवादिव
मधुघृतकुल्यादितृप्तपित्रादिप्रसादलभ्यसर्वकामफलावाप्तिरेः
भाव्यतया ऽवसीयते । नन्वाद्याध्ययने न किंचिदार्थवादिकं फः
श्रूयते तत्रैषामर्थवादानामश्रवणात् । धारणजपयज्ञविध्यर्थव
दाम्नेते तदाहुर्वार्त्तिककारमिश्राः । आद्येत्वध्ययनेनैव काचि
दस्ति फलश्रुतिः । धारणे जपयज्ञेच या साप्येवं निवारितेति
सत्यमेवं । तथापि तेषामतिदेशतोऽपि लब्धेर्युक्तैव तदीयफ
लस्य भाव्यता तथाहि लिङादियुक्तेषु वाक्येषु द्वे भाव
अवगम्येते शब्दभावना ऽर्थभावनाचेति । तत्र शब्दभावन
परप्रेरणात्मिका तस्याः पुरुषप्रवृत्तिर्भाव्या । तयाच प्रेरण
यासह यो लिङादीनां वाच्यवाचकभावः संबंधः स त
योग्यतया करणं । तदाहुर्वार्त्तिककारमिश्राः । लिङादयोहि
प्रेरणां कुर्वंत्यभिदधतिचेति । प्रवर्त्त्यरुच्युत्पादनयोग्यतय
चार्थवादिकी स्तुतिरितिकर्त्तव्यता । तदेवमध्ययनविधौ स
वादश्रुतार्थवादके शब्दभावनायामितिकर्त्तव्यताभूतार्थवादक
ल्पियां जपयज्ञाध्ययनातिदेशेनार्थवादाः स्वीक्रियंते । तदाहु
र्वार्त्तिककारमिश्राः । अनुषंगानुमानाद्वैर्लभ्यंते न्यतिदेशतइति
तेचातिदिष्टा अर्थवादा अर्थभावनायां फलं समर्पयंति रात्रि
सत्रवत् एवमार्थवादिके फले भाव्यतयावसिते ऽध्ययनं समान
पदोपात्तं करणाकांक्षापरिपूरकत्वेन समर्प्यते । एवंच यद
कस्मादपूर्वं तदेतरत्तदर्थमितिन्यायेन स्वाध्यायशब्दवाच्य
क्षरराशिरप्यध्ययननिर्वृत्त्यर्थएवावसीयते । एवंचान्यपरत्वाद्वे
राणां तेभ्यो ऽर्थप्रतिपत्तिरेवानुपपन्ना व्युत्पत्तिविरहात् । वृ
व्यवहारेह्यनन्यपराण्येवाक्षराण्यर्थावबोधकतया व्युत्पन्नानि
व्युत्पत्त्यपेक्षश्च शब्दोर्थावबोधकः । यःपुनरन्यपरेभ्यो ऽप्यक्षरेभ्यो
र्थावगमः स सामान्यतोदृष्टनिबंधनानन्यपरत्वभ्रांत्या भ्रां

रेवेति मंतव्यं । अप्रतीयमानस्वार्थो न विचारस्य विषयः । नापि प्रयोजनमिति विचारस्तावदनारब्धव्यः । तदनारंभेच तदुपायभूतन्यायपरिज्ञानमप्यनुपयोगि तदनुपयोगेच तन्निबन्धनं मीमांसाशास्त्रमनारंभणीयमितिपूर्वः पक्षः ॥

राद्धान्तस्तु ॥ स्वाध्यायोऽध्येतव्यइति स्वाध्यायस्य कर्मत्वावगमात्सएव भाव्यतयावसीयते । यद्यपि नित्यत्वान्निर्वर्त्यकर्मता नास्ति स्वाध्यायस्य विकार्यकर्मतावा । अध्ययनेन तस्य विकारानुपपत्तेः तथापि प्राप्यतया तस्य कर्मता नानुपन्ना । अतएव प्राप्यकर्मोदाहरणं वृत्तिकारस्य वेदाध्ययनं यच्च कर्म तदर्थैव क्रिया युक्ता । सोयं श्रौतो विनियोगः । नच स्वाध्यायस्य सक्तुवच्छेषित्वमनुपपन्नं फलवदर्थावबोधोपयोगित्वात् । यद्यपिचार्थावबोधोपयोगित्वमध्ययनात्प्राङ्नावगम्यते तथापि पश्चाद्गम्यमपि भवत्येव प्रयोजनं भाविनापिचोपयोगेन शेषित्वं नानुपपन्नं अग्निवत् । उत्पन्नानांह्यग्नीनां विनियोगावगमो नावगतविनियोगानामुत्पत्तिः आहवनीयादि शब्दानामलौकिकार्थतया प्राग्व्युत्पत्त्यनवगमादर्थानवगतेः होमादिषु विनियोगासंभवात् तथाचोक्तं । भूतभाव्युपयोगंहि द्रव्यं संस्कारमर्हतीति । ननुचार्थावबोधोपयोगितया संस्कारविधिरनर्थकएवेत्युक्तं । नानर्थकोनियमार्थतया ऽर्थवत्वात् ननुच नियमो न संभवति अक्रतुसंस्पर्शित्वादित्युक्तं । न । संभवति स्वाभाविकार्थपरत्वानुसारेण क्रत्वनुप्रवेशेतुल्यतायाएवोचितत्वात् यदिखल्वध्ययनविधेः क्रत्वनुप्रवेशिता नाश्रीयते तदा शब्दानां वृद्धव्यवहारव्युत्पन्नानां स्वाभाविकार्थपरता हीयते । जहत्स्वार्थत्वं च न न्याय्यमिति क्रतुफलभावनानुप्रवेश्यैवाध्ययनसंस्कारो युक्तः । तत्र कर्मविधिष्वेव नियमवर्णना अध्ययनाविर्भावितैरेव कर्मविधिभिरर्थमवबुध्यानुतिष्ठतां क्रतुफलभावनासिद्धिरिति । अर्थवादेषुत्वध्ययनाविर्भावितार्थवादप्ररोचिताः क्रियमाणाः क्रतवः फलभावनाया अलमिति । मंत्रेषु पुनरध्ययनपरिगृहीतैरेव मंत्रैः क्रतुषु स्मरणीयपदार्थस्मरणं फलभावनानुगुणमिति । अध्ययननियमाश्रितश्च कालनियमो व्रतादिनियमश्च श्रावण्यां प्रौष्ठपद्यांवा उपाकृत्य यथाविधि । युक्तश्छंदांस्यधीयीतमासान्विप्रोऽर्धपंचमान् । भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः । भवन्मध्यंतु राजन्यो वैश्यस्तु भवदुत्तरमिति । एवंचान्यपरत्वादक्षराणां फलवत्कर्मावबोधोत्पत्तेर्विचारस्य विषयप्रयोजनलाभाच्छास्त्रस्यारंभणीयत्वं विषयप्रयोजनलाभेच विचारस्याध्ययनानंतरमुपनिपतितत्वाद्गुरुकुलस्थितेरर्थवत्वात्तन्निवृत्तिमध्ययनानंतरप्राप्तां स्मरन्वेदमधीत्य स्नायादिति स्मृतिवचनमपन्यायमूलं दर्शयन्नर्थावबोधपरतया स्वाध्यायस्य विवक्षितार्थतां मन्यमानः सूत्रकारो विचारस्य विषयं प्रयोजनंचाह अथातो धर्मजिज्ञासेति । एतच्च व्याख्यातं अथातोधर्मजिज्ञासासूत्रमात्रमिदं कृतं । धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनमिति ।

तदयुक्तं । नहि लिङादियुक्तवाक्येषु भावना भाव्यांतरमपेक्षते अपूर्वस्य भाव्यस्य स्वशब्देनाभिहितत्वात् लिङादयोहि भाव्यकोटिनिविष्टप्रधानभूतापूर्वोपसर्जनतापन्नामेवभावनामभिदधतीति विषयकरणीयेनिपुणतरमुपपादितं । अतो न पूर्वपक्षेभाव्याकांक्षायामार्थवादिकफलसंबंधः । नापि सिद्धांते स्वाध्यायस्य साध्यतयान्वयः कथं तर्हि विश्वजिदादिषु स्वर्गादिफलकल्पनं । यथातत्तथा निशम्यतां । यदपूर्वं कार्यभूतं प्रतीयते तद्विषयत्वेन संबंधकरणीभूतयागाद्यनुष्ठानाधीनात्मलाभं नच विना कर्त्रा तदनुष्ठानोपपत्तिः । नचाधिकारं विना कर्तृत्वलाभः नच नियोज्यमंतरेणाधिकारसिद्धिः । नचाविशिष्टो नियोज्यो ऽवकल्पतइति विशेषणभावेन स्वर्गकामना परिकल्पते । स्वर्गकामनाचेन्नियोज्यविशेषणं ततो ऽग्निहोत्रादिवत् स्वर्गस्यापि नियोगतः सिद्धिरिति । भवत्वेवं अत्रापितर्हि नियोज्यविशेषणतयैवार्थवादिकं फलं रात्रिसत्रवत्संबध्यतां । न अन्यतो ऽनुष्ठानसिद्धेः । कुतो ऽन्यतः । आचार्यकरणविधिप्रयुक्तेः । कः पुनराचार्यकरणविधिः । उपनीयतु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यंच तमाचार्यं प्रचक्षतइति स्मरणानुमितः शिष्यमुपनीय वेदाध्यापनेनाचार्यकं भावयेदित्येवंरूपः । अलौकिकंचाहवनीयादिवदाचार्यकमिति तन्निष्पत्त्युपायविधानंयुक्तमेव । तत्रार्थाद्याचार्यीबुभूषतएवाधिकारो धनार्जननियमवत् तत्र शिष्यंप्रति विहिततद्धिताचरणदक्षिणादानदर्शनात्तल्लिप्सोरेवाचार्यभवनेच्छा । यथा दीक्षणीयया दीक्षितत्वसिद्धिः तथा वेदाध्यापनेनाचार्यत्वसिद्धिः । उपनयनंच त्वाप्रत्ययेनाध्यापनसमानकर्तृकमवगम्यमानमेकप्रयोगतयाविना समानकर्तृत्वासंभवादंगांगिभावेनचविना एकप्रयोगत्वानुपपत्तेराचार्यकभावनाकरणीभूतमध्यापनंप्रत्यंगत्वेनावतिष्ठते । तदाश्रितश्चाष्टवर्षं ब्राह्मणमुपनयीतेत्येवमादिनियमः । उपनयनंच स्वभावत उपनेयासत्तिप्रयोजनकमितितद्द्वारेणैव तस्यांगत्वं । नचाध्यापनंप्रत्यनुपयोगिन उपनेयस्यासत्तिरध्यापनोपयोगिनीत्युपनेयस्य कर्मापेक्षायामुपनयनं प्रक्रम्य स्वाध्यायो ऽध्येतव्य इति अध्ययनं विधीयमानमुपनेयस्य कर्मेत्यवगम्यते । अध्ययनंचाध्यापनोपयोगीति सिद्धमेतत् । तेनायमध्येष्यमाणस्य माणवकस्योपनयनमध्यापनांगमित्यध्यायनविधिः स्वांगभूतमुपनयनं प्रयुंजानस्तस्यान्यथानुपपत्त्या ऽध्ययनमपि प्रयुंक्ते । तत्प्रयुक्ताध्ययननिष्पत्त्याच लब्धसिद्धिरध्ययननियोगो नाधिकारांतरमपेक्षते अतो नायं विश्वजिन्न्यायस्य विषयः । नापि रात्रिसत्रन्यायस्य अनन्यप्रयुक्तविषयनियोगगोचरत्वात्तयोः । अतएव प्रयाजादिनियोगेषु

नयोरवसरः सिद्धांतेतु काम्यश्रुतिप्रयुक्तमध्ययनमिति विद्यासाध्येष्वपि कर्मसु शूद्रादीनामधिकारः स्यात् । अतो ऽध्यापनविधिप्रयुक्तत्वादध्ययनस्य येषामेवोपनयनं तेषामेव तत्प्रयुक्तमंत्रलाभाच्छूद्रादीनामनधिकारः । एवंच विध्यंतरप्रयुक्ते ऽध्ययने न रात्रिसत्रन्यायेन पूर्वपक्षाशंकोचिता । नचातत्प्रयुक्त्या पूर्वः पक्षः तत्प्रयुक्त्याच राद्धांत इति युक्तं । अतत्प्रयुक्तत्वे कारणाभावात् । यच्चोक्तं नियमार्थो विधिरिति । तदयुक्तं स्वाध्यायाध्ययनस्य नियोगनिष्पत्त्यर्थतया विधानेन वचनस्यार्थवत्त्वात् । स्वाध्यायोऽध्येतव्यइति तव्यप्रत्ययेन विधिरभिधीयते । नचावहंत्यादिष्विव क्रतुविषयनियोगानुवादो यमवकल्पते असंनिधानात्क्रतुनियोगानां । सन्निधानवशेनैव प्रकृतनियोगप्रत्यभिज्ञानात्तत्र क्रतुनियोगानुवादोपगमः । न चेहसंनिधानमस्ति । नापि पर्णमयीजुहूर्भवतीतिवत् पदार्थसंबंधमुखेन क्रतुविनियोगप्रत्यभिज्ञानं स्वाध्यायस्य व्यभिचरितक्रतुसंबंधत्वात् । हुमित्येवमादीनामनर्थकानां स्वाध्यायांतर्गतिदर्शनात् । यतएवात्र नियोगः साध्यतया ऽवगम्यते ऽतएव स्वाध्यायस्य नीप्सितकर्मतया संबंधो ऽवकल्पते एकस्मिन्वाक्ये साध्यद्वयविरोधात् । नच स्वर्गादिवत् स्वाध्यायस्य नियोज्यविशेषणतया ऽन्वयादविरोधः अनियोगफलत्वात्स्वाध्यायग्रहणस्य । यदेवहि नैयोगिकं फलं तदेव साध्यतया नियोज्यविशेषणं नान्यदिति तृतीये दर्शितं अनभिज्ञो भवान्विषयनियोज्यानामित्यत्र । अतोऽध्ययनविषयनियोगप्रतिपादनेनैव तस्यार्थवत्त्वान्न क्रतुप्रवेशकल्पनया नियमार्थता विधेः ।

अन्येपुनरेवंपूर्वपक्षयंति अध्यापनविधिप्रयुक्तमध्ययनमध्यापनांगभूतं तन्निष्पत्त्यर्थतयाच स्वाध्यायस्यान्यपरत्वादविवक्षितार्थतेति । तदयुक्तं । प्रयुक्तिमात्रेण तादर्थ्यानुपपत्तेः । स्यान्मतं यथा प्रजापतिव्रतेषु स्वतंत्रकर्त्रवगमात्तद्धेतुभूताधिकारसिद्ध्यर्थं नियोज्यपरिकल्पनं तथा प्रयुक्तिदर्शनात्तादर्थ्यमिति तन्न । प्रयुक्तेस्तादर्थ्यव्यभिचारात् । असत्यपि तादर्थ्ये केवलोपकारकतामात्रेणाध्ययनस्य क्रतुविधिभिः प्रयुज्यमानत्वात् । कथं तर्हि पश्वेकत्वादीनामंगत्वम् । नतावद्विभक्तिरेव क्रतुसंबंधितयैकत्वमभिधत्ते । येनारुणयवद्वाक्येन विनियोगः स्यात् । विभक्त्योहि प्रातिपदिकार्थगतमेव स्वार्थं श्रुत्याभिदधाति । नापि करणीभूतस्यैकत्वमुच्यते संख्यान्वितस्यवा करणत्वं करणत्वैकत्वयोर्युगपदभिधानात् । अतो न वैनियोगिकं शेषत्वं विभक्त्यभिहितायाः संख्यायाः । उच्यतेच शेषत्वं तच्च प्रयुक्तिकृतमेव । नैवं । न तत्रापिशेषत्वमौपादानिकं किंतु लौकिकमेकवस्तुसामर्थ्यमेव लिंगमुच्यते । संख्याच स्वभावतएव संख्येयावच्छेदिकेति संख्येयार्थैव किंतु संख्येयभूतप्रातिपदिकार्थमात्रसंबंधे ग्राहकान्वयव्याघातापत्तेर्ग्राहकीयभूतपश्वादिसंबंध औपादानिकः । सन्निधिसमाम्नायमात्रेणहि विभक्त्यर्थस्यापि ग्राहकंप्रत्यैदमर्थ्यं नान्वितस्यैवाभिधानं । तदन्यथानुपपत्त्या च केवलाभिधाननिबंधनं स्वरूपसंबंधमतिलंघ्य साधनीभूतसंख्येयसंबंधाध्यवसानमिति नौपादानिकं तत्रापि शेषत्वं । भवतु तर्हि लिंगादेवाध्ययनस्यापि अध्यापने विनियोगः । नैवं भवितुमर्हति सामान्यसंबंधसापेक्षत्वाल्लिंगविनियोगस्य नचास्य सामान्यसंबंधापादकं किंचिदस्ति प्रमाणं । ननु णिच्छ्रुतिः प्रकृत्यर्थभूतस्याध्ययनस्य शेषतामापादयतीति । तन्न । प्रयोजकव्यापारस्य प्रयोज्यव्यवहारोत्पत्तिहेतुत्वात् विपरीतशेषत्वापत्तेः । वाक्यप्रकरणस्थानसमाख्यानानित्वध्ययनस्याध्ययनं प्रति विनियोजकतया नाशंकनीयान्येव । ग्रंथविरोधश्चांगत्ववादिनां । यतएवमाह भगवान्प्रयोज्यत्वादनंगत्वाच्च भवति संशयः इति ।

तस्मादनंगतयैव पूर्वपक्षणीयं । कथंपुनरनंगतयापूर्वपक्षयितुं शक्यते । उच्यते । सर्वोहिविधिरधिकारपर्यवसायी । न चाध्ययनविधौ कस्यचिदधिकारोऽस्तीत्युक्तमेव साक्षादश्रवणात् । अध्यापनविधिप्रयोज्यतया कल्पनानुपपत्तेः तत्र यएवासौ प्रयोजकविधावधिकारः सएव प्रयोजनमिति युक्तं प्रथमोपनिपातित्वात् । यदपि यस्यानंगं तदपि तस्य प्रयोजनं भवत्येव आधानस्येव होमादय इति । ननुचानंतरभाविकर्मविबोधफलकतयाऽध्ययनस्याध्येतुरेवाधिकारोऽध्ययने प्रतीयते इति तत्प्रयोजनतैव स्वाध्यायविधेर्युक्ता अंतरंगत्वात् । न । तस्योत्तरकालभावित्वात् । तुल्यायांहि प्राप्तावंतरंगता बलीयसी । नचानयोरधिकारयोस्तुल्या प्राप्तिः प्रथमोपनिपातित्वात्प्रयोजकविध्यधिकारस्य उत्तरकालभावित्वाच्चार्थावबोधनिबंधनस्याधिकारस्य । यदाचाध्यापनविध्यधिकारसिद्धिरध्ययनस्य प्रयोजनमित्यध्ययनविधिना बोधितं तदा ऽध्ययननिष्पत्त्यर्थत्वात्स्वाध्यायस्यान्यपरत्वादविवक्षितार्थत्वं । अविवक्षितश्चार्थो न विचारणीय इति वेदाध्ययनमात्रेणैव गुरुकुलस्थितेः कृतार्थत्वादध्ययनोत्तरकालं गुरुकुलनिवृत्तिरेव युक्तेति मत्वा स्मृतं वेदमधीत्य स्नायादिति । अत्रच न स्नानमदृष्टार्थं विधीयते किंतु यो ब्रह्मचारिणो न स्नायादिति अस्नाननियमस्तस्य पर्यवसानमेतदध्ययनांगतया नियमानां तन्निवृत्तौ प्राप्तमुच्यते । अस्नाननियमतुल्यतयाच गुरुकुलवासादीनामपि निवृत्तिः प्राप्तैवेति सकलब्रह्मचारिधर्मनिवृत्तिरेवाध्ययनानंतरमुच्यते । एवंचाध्ययनविधिना विचारस्यानाक्षिप्तत्वात्तदुपायभूतन्यायनिबंधनं मीमांसाशास्त्रं नारंभणीयमिति पूर्वः पक्षः ।

राद्धान्तस्तु । यद्यपि प्रयोजकविध्यधिकारः प्रथमभावी तथापि तन्निष्पत्तिः प्रयोजनमिति न युक्तं किंतु दृष्टार्थावबोधफलकतयाऽध्ययनोत्तरकालभाव्यप्यध्येतुरेवाधिकारः प्रयोज-

नतया युक्त आश्रयितुं कर्तृसमवायित्वात् । यत्कर्तृकंहि यत्कर्म तस्यैव तत्रैश्वर्यमिति युक्तं । अंतरंगत्वात् । नच सहसैव विधिदर्शनादत्राधिकारपर्यवसानकल्पनाकरणमस्ति । परप्रयुक्त्यैवानुष्ठानस्य सिद्धत्वात् । यत्र खल्वधिकारपर्यवसानकल्पनामंतरेण प्रागनुष्ठानं न लभ्यते तत्रानुष्ठानात्प्रागनवगतो ऽधिकारः तदनुप्रवेशात्साध्यः । इहत्वध्यापनविधिप्रयुक्त्यैवाधिकारपर्यवसानकल्पनामंतरेणानुष्ठानं लब्धमिति प्राथम्यमकिंचित्करं । अंतरंगत्वादध्येतुरेवाधिकारो युक्तइति । तदेवमध्ययनविधेरन्यप्रयुक्त्यैवानुष्ठानसिद्धेर्नियोज्यो नास्ति । अधिकारीतु विद्वानेव । यदर्थंहि यत्कर्म स तत्राधिकारी । अर्थावबोधोपयोगेनचाध्येत्रर्थताध्ययनस्येति स तत्राधिकारी । सचायमधिकारः प्रागध्ययनान्नावगम्यते अध्ययनोत्तरकालेवावगम्यते स्वाध्यायाध्ययनंत्वेवमभिनिर्वर्त्यते । श्रावण्यां प्रौष्ठपद्यांवा उपाकृत्य यथाविधि । युक्तश्छंदांस्यधीयीत मासान्विप्रो ऽर्द्धपंचमान् । ततः परंतु छंदांसि शुक्लेषु नियतः पठेत् । वेदांगानि रहस्यंच कृष्णपक्षेषु संपठेत्इति । इत्थंचाध्ययने क्रियमाणेंगाध्ययनसंस्कृतस्य वेदवाक्यादर्थावगमो जायते । इदानीमध्येता मन्यते मदुपयोगिकर्मावबोधकतया मदर्थमध्ययनमिति । सोयं वेदाध्ययनमीमांसाश्रवणयोर्मध्ये ऽधिकारः सो ऽयं तात्कालिकः शास्त्रार्थः । इममेव तावदधिकारमालोच्य पित्रादयो ऽर्थदानादिना कांश्चिदानमय्य पुत्रादीनुपनाययंति । प्रबुद्धाश्च केचन स्वयमेवात्मानं । अन्यथा ऽध्ययनासंभवात् । अनुपनीतस्याध्ययननिषेधात् । नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते । स शूद्रेण समस्तावद्यावद्वेदान्नजायते इति । एवंतावदध्यापनविधिं स्मृत्यनुमितं कस्यचिदप्यस्वाध्यायभूतमाश्रित्य राद्धांतवर्णना कृता ।

अन्येतु साक्षाच्छ्रुताध्यापनविध्यनुसारेणैवमाहुः यद्यध्यापनविध्यधिकारप्रयोजनता स्वाध्यायाध्ययनविधेः स्यात् तदाध्यापनविधेरपि स्वाध्यायांतर्गतत्वादविवक्षितार्थत्वेन तत्प्रयुक्ततापि न संभवति । स्वशाखाहि स्वाध्यायशब्देनोच्यते साक्षादधीतश्चाध्यापनविधिर्नूनं केषांचिच्छाखिनां स्वशाखांतर्गतो भवेदिति स्वाध्यायस्याविवक्षितार्थत्वेन तस्याप्यविवक्षितार्थत्वान्नप्रयोजकत्वमवकल्पते इति पश्चाद्वाक्यार्थावबोधोपयोगितया ऽध्येतुरेवाधिकारो ऽध्ययनविधेः प्रयोजनमिति ।

ननु स्वाध्यायोध्येतव्यइति नियोगसिद्धेरवगममात्रनिष्पत्त्यर्थत्वादध्ययनस्यान्यपरत्वादर्थविवक्षा दुर्भणैव । मैवं । यदि केवलं नियोगनिष्पत्त्यर्थतैवाध्ययनस्य स्यात्स्यादेतदेवं । यदा त्वर्थावबोधोपि प्रयोजनतया स्वीक्रियते तदार्थपरता ऽप्यस्तीति नाविवक्षितार्थता । कथंपुनरेकस्मिन्वाक्ये प्रयोजनद्वयं । उच्यते । शाब्दं नियोगनिष्पत्तिरेव प्रयोजनं आर्थंत्वर्थावबोधनमिति न विरोधः । यच्च तदर्थावबोधाख्यं प्रयोजनं तच्च केवलाध्ययनसाध्यमिति अध्ययनविधिरेव स्वप्रयोजनसिद्धये विचारमाक्षिपति विचारस्यच न्यायनिबंधनत्वान्न्यायानां मीमांसाज्ञानगम्यत्वान्मीमांसाज्ञानस्य गुर्वायत्तत्वाच्च वेदाध्ययनानंतरं गुरुकुलान्निवर्त्तितव्यमिति मन्यमानो भगवान्सूत्रकारः पूर्वपक्षनयमूलतां स्मृतेर्दर्शयितुं धर्मजिज्ञासोपदेशमुखेनाध्ययनानंतरभाविनीं गुरुकुलनिवृत्तिं प्रतिषेधन्निदमाह अथातो धर्मजिज्ञासेति । वेदवाक्यार्थविचारविरोधिनीच गुरुकुलनिवृत्तिरेव केवला निवार्यते । न सकलेतरभिक्षाचरणब्रह्मचर्यादिधर्मनिवृत्तिः । असमाप्तसकलब्रह्मचारिनियमश्च न स्नातकइति न दाराधिगमे ऽधिक्रियते स्नातकस्य दाराधिगमस्मरणात् । स्नातकः सदृशीं भार्यां विंदेदिति । तस्माद्गुरुकुले स्थित्वा सकलेतरब्रह्मचारिधर्मान्परित्यज्य वेदार्थो विचारयितव्यः अविचारितस्यानिर्णीयमानत्वात् । अनिर्णीतवेदार्थश्चेद्गुरुकुलान्निवर्तेत ततः कृतदारसंग्रहः श्रौताग्निहोत्रादिनित्यनैमित्तिकधर्माधिकारापातात्तदनुष्ठानं कर्तुमसमर्थः प्रत्यवेयात् । तस्मादध्ययनस्यानंतरमेव वेदार्थो विचारयितव्यइति विचारोपायभूतन्यायनिबंधनं मीमांसाशास्त्रमारब्धव्यमिति सिद्धं १ ॥

शास्त्रमुखंनाम गुरोराविष्कर्तुं गभीरमपि भावं ॥
शालिकनाथेन कृतं प्रकरणमेतत्प्रसन्नतरं ॥

॥ इति शास्त्रमुखंनाम प्रकरणं ॥ १ ॥

---

अर्थासंस्पर्शिताशंका यथा शब्दस्य बाध्यते ॥
प्रभाकरगुरोः शिष्यैस्तथा यत्नो विधीयते ॥ १ ॥
अत्र लौकिकवाक्यानां व्यभिचाराभिमानतः ॥
अर्थासंस्पर्शितां केचिदाहुः शब्दस्य वादिनः ॥ २ ॥
निश्चयो ऽर्थस्य संस्पर्शः सचार्थाव्यभिचारिणः ॥
प्रत्यक्षादेरेव भवेच्छब्दस्तु व्यभिचारवान् ॥ ३ ॥
विनाप्यर्थं हि शब्देन प्रतीतिरुपजायते ॥
अंगुल्यग्रे ऽस्ति करिणां यूथमित्येवमादिना ॥ ४ ॥
नचात्र शक्यते वक्तुं शुक्तौ रजतबोधवत् ॥
अग्रहाद् भ्रांतिरेषेति कारणस्याविशेषतः ॥ ५ ॥
दुष्टाहि हेतवः कार्यं संपूर्णं कर्तुमक्षमाः ॥
तेन भेदाग्रहो युक्तः शुक्तिकारजतादिषु ॥ ६ ॥
इह तु ज्ञानहेतुर्यः शब्दः स न विशिष्यते ॥
विशिष्यते यस्तु वक्ता स ज्ञानस्य न कारणं ॥ ७ ॥
वक्तापि यदि विज्ञानहेतुः स्यादिंद्रियादिवत् ॥

ततस्तस्यापि दोषेण भवेदग्रहणं तदा ॥ ८ ॥
वक्ता तु केवलं शब्दव्याक्तवेवोपयुज्यते ॥
ज्ञानं तु शब्दमात्रेण निरपेक्षेण जन्यते ॥ ९ ॥
नच तस्येह दुष्टत्वं किंचिदप्युपलभ्यते ॥
दोषश्चाग्रहणे हेतुस्तदभावे स्फुटो ग्रहः ॥ १० ॥
तेन शब्दोपजनितं ज्ञानमेवेदमीदृशं ॥
अर्थं व्यतिक्रामतीति कुतस्तेनार्थनिश्चयः ॥ ११ ॥
येनापि हि विना यस्य सद्भाव उपपद्यते ॥
निश्चयस्तत्र तेनेति सुभाषितमिदं वचः ॥ १२ ॥
नन्वेवमाप्तवाक्येभ्यः कथं व्यवहृतिर्भवेत् ॥
व्यवहारो हि लोकस्य कथं स्यान्निश्चयं विना ॥ १३ ॥
उच्यते व्यवहारो हि संदेहादपि लौकिकः ॥
प्रायशो दृश्यते तेन न किंचिदिह दुष्यति ॥ १४ ॥
अपिचाप्तत्वमालोच्य वक्तुस्तत्रार्थनिश्चयः ॥
मानांतरवशेनापि कथंचिदुपपद्यते ॥ १५ ॥
वेदस्त्वलौकिकार्थत्वादभावाद्वक्तुरेवच ॥
अहो बत दशां कष्टामुपनीतो ऽतिपंडितैः ॥ १६ ॥
अत्र प्रतिविधानाय यतंते मतिशालिनः ॥
ज्ञानस्य व्यवहारित्वं नयवीथ्यां निवारितं ॥ १७ ॥
श्रूयतामवधानेन गतिर्नरगिरामपि ॥
अनुमानात्पृथग्भावं तासां नेछंति सूरयः ॥ १८ ॥
वाक्यं हि पुरुषाधीनरचनं लौकिकं सदा ॥
शंक्यमानायथार्थत्वं नार्थनिश्चायकं स्वतः ॥ १९ ॥
अन्योन्यानन्विताथानि पदान्यपि हि मानवाः ॥
रचयंतो विलोक्यंते तेन नान्वयनिश्चयः ॥ २० ॥
केचित्तावद्भ्रमेणैव केचिदाशयदोषतः ॥
प्रमादात्के ऽप्यशक्तेश्च केप्यनन्वितवादिनः ॥ २१ ॥
तदुक्तानां पदार्थानां यद्यप्यन्वययोग्यता ॥
तथाप्यनन्वितस्यापि दृष्टेर्नान्वयनिश्चयः ॥ २२ ॥
तत्र निश्चयशब्देन ज्ञानमेवाभिधीयते ॥
अन्वयानिश्चये तेन ज्ञानमेवास्ति नान्वये ॥ २३ ॥
शंक्यमानायथार्थत्वरचनं तेन पुंवचः ॥
श्रुतमात्रकमेवार्थे न तावन्निश्चयावहं ॥ २४ ॥
तावद्वक्तुरविज्ञातं पूर्वभाविप्रमांतरं ॥
विवक्षितार्थविषयमिंद्रियार्थनिबंधनं ॥ २५ ॥

तस्य ज्ञानंच वाक्येन लिंगभूतेन गम्यते ॥
ज्ञात्वैवार्थं ब्रवीतीति य एवमवधारितः ॥ २६ ॥
तस्य ज्ञानेन नियतं वाक्यं ज्ञानानुमापकं ॥
ज्ञानंचार्थाविनाभावि तेनार्थेपि विनिश्चयः ॥ २७ ॥
ततो ऽर्थे निश्चिते पश्चात्सो ऽर्थो वाक्येन गम्यते ॥
तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता ॥ २८ ॥
पूर्वंच लिंगभूतत्वं वक्तुर्ज्ञानावधारणे ॥
वक्तुर्ज्ञानप्रसूतं हि वाक्यं तत्कार्यमिष्यते ॥ २९ ॥
कार्यात्कारणसिद्धिश्च सर्वेषामनुमानतः ॥
पौरुषेयमतो वाक्यं न शास्त्रमभिधीयते ॥ ३० ॥
एवंचसति लिंगस्य व्यभिचारो ऽयमीक्ष्यते ॥
न शास्त्रस्येति तस्य स्यादर्थासंस्पर्शिता कुतः ॥ ३१ ॥
लिंगस्यापि न चैवायं व्यभिचारो ऽस्ति किंतु यः ॥
लिंगालिंगे न शक्नोति विवेक्तुं मूढचेतनः ॥ ३२ ॥
तस्यालिंगे लिंगरूपसाधारण्यनिबंधनः ॥
लिंगसंव्यवहारो ऽयं विपरीतः प्रवर्त्तते ॥ ३३ ॥
श्रुतिलिंगाधिकरणे विस्तरेणैवमीरितं ॥
तेन न व्यभिचारो ऽस्ति द्वयोर्लैंगिकशास्त्रयोः ॥ ३४ ॥
नन्वर्थएव प्रथमं पुंवाक्येभ्यो ऽवगम्यते ॥
अन्यथा हि कथं वक्तुर्धीर्विशिष्टा ऽनुमीयते ॥ ३५ ॥
अर्थेनैव विशेषो हि निराकारतया धियां ॥
नचाप्रतीतेनार्थेन विशेषश्चावकल्पते ॥ ३६ ॥
अत्र ब्रूमो ऽयथार्थत्वशंकया ऽर्थो न निश्चितः ॥
अनिश्चितश्च न ज्ञात इति तावद्व्यवस्थितं ॥ ३७ ॥
किंत्वज्ञातेपि शब्दार्थे पदजाते श्रुते सति ॥
विमर्षो जायते श्रोतुरीदृशो मतिशालिनः ॥ ३८ ॥
अन्योन्यान्वययोग्यार्थं पदजातं ब्रवीत्ययं ॥
आप्तस्तेनामुना नूनं ज्ञातस्तेषां समन्वयः ॥ ३९ ॥
न कदाचिदसंबद्धानर्थानेष विवक्षति ॥
नवा ऽप्रतीतसंबंधानिति दोषो न कश्चन ॥ ४० ॥
नन्वेवं तुरगारूढस्तुरंगं विस्मृतो भवान् ॥
वेदप्रामाण्यसिद्ध्यर्थमुत्थितस्तत्प्रहीणवान् ॥ ४१ ॥
लोकावगतशक्तिर्हि वेदे शब्दो ऽवबोधकः ॥
लोकेच लिंगभावेन प्रतीतिर्भवता श्रिता ॥ ४२ ॥
स्वयंत्विह समाधानमाचार्येणैव दर्शितं ॥

शब्दस्यार्थेन संबंध इति दर्शयता सता ॥ ४३ ॥
अन्विताथाभिधायित्वे पदानां हि स्थिते सति ॥
विशिष्टा वक्तृधीर्ज्ञातुं शक्यते नान्यथा यतः ॥ ४४ ॥
ज्ञातेषु हि पदार्थेषु श्रोता वक्तरि कल्पयेत् ॥
अन्योन्यान्वयविज्ञानं नान्यथेत्युपदर्शितं ॥ ४५ ॥
पदानां तत्पदार्थेषु शक्तिः स्वाभाविकी स्थिता ॥
पुंवाक्येषु विसंवादशंकया सा तिरोहिता ॥ ४६ ॥
वेदेषु त्वस्मर्यमाणकर्तृकेषु स्वरूपतः ॥
प्रमाणांतरसंस्पर्शरहितार्थावबोधिषु ॥ ४७ ॥
न कर्तुरनुमानं स्याद्वाक्यत्वादिति लिंगतः ॥
न कर्ता शक्नुयाद्वाक्यं कर्तुं कार्ये ह्यलौकिके ॥ ४८ ॥
तेन वेदे विसंवादशंका नास्ति कथंचन ॥
अर्थनिश्चयहेतुत्वादर्थसंदर्शिता स्थिता ॥ ४९ ॥
व्यपगतवाङ्मलपंकः प्रोद्धृतपरयुक्तिकंटकप्रकरः ॥
स्पष्टः प्रगुणतरोऽयं शालिकनाथेन नीतिपथः ॥ ५० ॥

इति शालिकनाथमिश्रकृतौ नीतिपथोनाम द्वितीयं प्रकरणं ॥ २ ॥

---

॥ श्री ॥

यस्येच्छयैव प्रकटत्वमाप्तं
ब्रह्माण्डभाण्डोदरवर्ति विश्वम् ।
अवर्गतो मूलमिवास्ति गूढं
कस्मैचिदस्मै महसे नमोऽस्तु ॥ १ ॥

अथ मानमन्दिराभिधवेधालयवर्णनम् ॥

अस्ति श्रीवाराणस्यां भागीरथीतीरे मणिकर्णिकाघट्टाच्चातिदूरे दक्षिणपश्चिमदिग्भागे राजपुतानाख्यप्रसिद्धदेशान्तर्वर्त्यामेरसंज्ञनगर्याः स्वामिना मानसिंहाभिधेयेन राज्ञा विनिर्मितं सदनमेकं मानमन्दिरसंज्ञकं नाम । तत्र तस्य नृपतेर्वंश्येन प्रतापवता जयसिंहभूपेनेतः पूर्वं सार्धशतवर्षासन्नकाले ग्रहनक्षत्रवेधार्थं रचितानि ज्योतिषयन्त्राणि तदुपयोगजिज्ञासूनां सहृदयपुरुषाणां रञ्जनायेदानीमहं संक्षेपतो वर्णयामि ।

तत्र याम्योत्तरभित्तिसंज्ञं यन्त्रं दक्षिणोत्तररेखायां चूर्णेष्टकाप्रस्तरैर्निर्मितं कुड्यरूपं सत्र्यंशसप्तहस्तोच्छ्रायं सत्रिलवद्व्यैकाङ्गुलाधिकषड्ढस्तपरिणाहं सार्धषोडशाङ्गुलपिण्डं समीचीनसुधालेपेन चिक्कणीकृते तत्पूर्वपार्श्वे भूमेरङ्गुलद्वयोननगकरोच्छ्रितयोरन्योन्यं हस्तपञ्चकेन स्वचतुर्विंशांशाधिकेन विप्रकृष्टयोस्तत्पार्श्वोर्ध्वकोणद्वयासन्नदेशयो रोपितौ लोहकीलौ केन्द्रे कृत्वा कीलान्तरमितव्यासार्धेन लिखिताभ्यां मिथः संपातं कुर्वद्भ्यां वृत्तचरणाभ्यां स्वस्वाधोभागे तत्केन्द्रकैरेव क्रमेण पञ्चदशभिर्नवत्या नवशतेन च समं विभक्तैस्त्रिभिस्त्रिभिर्वृत्तचतुर्थांशैः सहिताभ्यामङ्कितं मन्दिरान्तः प्रविशद्भिर्यन्त्रविद्भिः प्रथममेवोपलभ्यते ।

अस्मिंश्च यन्त्रेऽत्र दक्षिणोत्तरमण्डलं याते सहस्रकिरणे वृत्तचरणे पतितां तत्केन्द्रस्थकीलच्छायां यावदपरकीलमूलात् तिग्मरश्मेरुन्नतांशास्ततश्च नतांशः प्रत्यहमहर्दलेऽवगम्यन्ते । परमिह काश्यामक्षलवानां परमक्रान्तितोऽधिकत्वादुष्णगभस्तेः खस्वस्तिकादुदग्भागे संचारासंभवादस्तीह तस्योन्नतनतलवानामवगमाय याम्यकेन्द्रकस्यैव वृत्तचरणस्योपयोगः । यत् पुनरुदग्दक्षिणकेन्द्रकयोर्द्वयोर्वृत्तचरणयोरत्रोल्लेखनं तत्तु खमध्यादुत्तरे दक्षिणे च याम्योत्तरमण्डलं प्रविशतां सर्वेषामुडूनां वेधायेत्यतिरोहितमतिमतिमताम् ।

यन्त्राच्चास्माद्भवति तरणिपरमक्रान्तेरक्षांशानां चावगमः सुगमः । तथाहि । प्रतिदिनं दिनदलेऽर्कस्य नतलवेष्ववलोकितेषु यावन्तः परमाधिका नतांशा यावन्तश्च परमाल्पा अवगम्येरंस्तद्विश्लेषदले परमापमांशा भवेयुः । तांश्च श्रीजयसिंहमहीपतिरष्टाविंशतिकलाधिकत्रयोविंशतिमितान् निरणयत् । एभिश्चोनीकृतेषु परमाधिकनतलवेष्वधिकीकृतेषु परमाल्पनतांशेषु वा संपद्यन्तेऽक्षांशाः ।

एवमवगताक्षांशेऽस्मिन् विषयेऽभीष्टदिने मध्याह्नेऽर्कस्य नतांशानवलोक्य तांश्चाक्षांशैर्विश्लेष्यावशेषमितं तस्मिन् दिने दिनेशस्यापमं पलांशेभ्यो नतांशानामल्पत्वे सौम्यमधिकत्वे च याम्यमवगच्छेत् । ततश्चरस्याहर्निशोः प्रमाणस्यारुणभोगस्य चावगमः सिद्धान्तविदोऽतिस्पष्टतरः ।

अस्ति चास्या दक्षिणोत्तरभित्तेः प्राग्भागे तत्स्थलैव तत्तुल्यविस्तारा दैर्घ्ये सप्तकरा पूर्वं जलवत् समीकृतापीदानीं किंचिदुच्चावचत्वं गता भूमिः । यस्यां तत्पूर्वदिक्कोणासन्नदेशयोर्भित्तिस्थकीलद्वयसंसाधितप्राग्दिशि निखातौ सरन्ध्रौ लोहकीलौ द्वावास्ताम् । तयोरेक उत्तरदिक्क एवाधुनावशिष्यते ।

अस्याश्च भूमेः समीपदेश एव चूर्णेष्टकानिर्मितं साङ्घ्रिनवाङ्गुलाधिकैकहस्तव्यासं समीकृतभूमिकमेकं मण्डलमन्यच्च प्रस्तरमयं समभूमिकं सप्ताङ्गुलाधिकहस्तद्वयव्यासमस्ति । तन्निकट एव चैकं पाषाणघटितं सममहीकमेकादशाङ्गुलोत्तरैकहस्तपरिमितबाहुकं वर्गाकारं चतुरस्रं वर्तते । एतन्मण्डलद्वयं वर्गक्षेत्रं चेदानीं परिमृष्टविभागचिह्नं पूर्वं शङ्कुच्छायां दिगंशांश्चावगन्तुं निरमायीति प्रतिभाति ॥

अस्ति चास्य भित्तियन्त्रस्योत्तरदिशः किंचित् पूर्वदिग्भागे स्वमध्यस्थया संसाधितदक्षिणोत्तरकाष्ठायां चूर्णेष्टकापाषाणैर्निर्मितया हस्तत्रयविस्तारया दैर्घ्ये चतुर्विंशतिकरया प्रस्तरमयध्रुवाभिमुखतिरश्चीनोपरितनभागया दक्षिणदिशि मूलभागे साङ्घ्रिवेदकरैरुत्तरतोऽग्रभागे चाङ्गुलत्रितयोनपञ्चदशहस्तैरुच्छ्रितयान्तर्गतसोपानया शङ्कुसंज्ञिकया भित्त्या विशिष्टं पूर्वपश्चिमभागयोः प्रत्येकमेकैकेन वृत्तपरिधिचतुर्थांशाभ्यधिकदैर्घ्येण किंचिदूनकरचतुष्टयविस्तारेण सार्धनवाङ्गुलपिण्डेन शङ्कुपालिस्थितकेन्द्रेण षड्हस्तपरिमितान्तर्व्यासार्धेन पाषाणमयचापेन सहितं चान्यदेकं यन्त्रसम्राडाख्यं महद्यन्त्रम् । यत्र प्रतिचापमुभयतः पालौ वृत्तचतुर्थांशः समैः पञ्चदशभिर्घटीविभागैरङ्कितः । सोऽप्येकैको विभागस्तुल्यैः किंचिदूनाङ्गुलत्रयायामैः षड्भिर्विभागैश्चिह्नितोऽस्ति । शङ्कुपालौ च प्रतिचापपालिकेन्द्रस्थानमेकैकं लघु लोहमयवलयं वर्त्तते ।

अस्मिंश्च यन्त्रे दिवा चापपालौ शङ्कुमूलात् तत्पालिच्छायां यावद्यावन्तो घटीविभागास्तावत्यो नतघटिकाः शङ्कोः पाश्चात्यभागे छायापाते मध्याह्नात् पूर्वं पौरस्त्ये च ततोऽनन्तरमवगम्याः । एतच्छायापातस्थानस्य समीपतः सम्यगवलोकनाय प्रतिचापमुभयतः प्रस्तरा आरोहणमार्गा निर्मिताः सन्ति । किन्त्वत्रेदानीमुक्तचापयोः स्वाग्रभागे भारातिशयेन वास्तवस्थानादीषन्नमितत्वादत्रत्यच्छायातः कालज्ञानं किंचित् स्थूलं भवति ।

एवमत्रार्कात् पतिता शङ्कुपालिच्छाया यद्वद्व्यक्तमवलोक्यते न तद्वद्धिमांशोः स्पष्टा भवति । भौमादिग्रहनक्षत्रेभ्यस्तु छायैव नोत्पद्यत इत्यस्माद्यन्त्रात् कथं तेषां नतकालावगमः स्यादित्येतदर्थमुच्यते ।

अत्यन्तमृज्वीं धातुमयीं सूक्ष्मां नलिकां निर्माय तस्या एकमग्रं चापपालावपरं च शङ्कुपालौ तथा न्यसेद्यथा यस्य ग्रहस्य नक्षत्रस्य वा नतकालो ज्ञातव्यः स चापाधरपालिगतया दृष्ट्या नलिकासुषिरे दृश्येत । तथा च नलिकासक्तचापपालिस्थानान्नतकालावगमः स्फुटः स्याच्छङ्कुपालौ च यत्र नलिकासंगस्तस्मात् स्थानात् तच्चापपालिकेन्द्रं यावत् तस्य ग्रहस्य नक्षत्रस्य वा क्रान्तेः स्पर्शरेखा स्यात् । एवमस्माद्यन्त्रात् सूर्यादिग्रहाणां नक्षत्राणां च नतकाला अपमाश्च सम्यगवगन्तुं शक्यन्ते । नक्षत्रस्य विषुवकालोऽप्यस्मादवगम्यते । सचैवम् ।

अस्तं जिगमिषोर्भास्करस्य नतकालं विज्ञाय ततो यावता कालेनावगन्तव्यविषुवकालं नक्षत्रमाकाशे सम्यगवलोक्येत तावान् घटीयन्त्रेणावगम्यः । तस्यार्कनतकालस्य च योगस्तात्कालिकोऽहर्पतेर्नतकालो भवति । स च भास्वतस्तात्कालिकेन विषुवकालेन युक्तो दशमलग्नस्य विषुवकालो जायते । सोऽपि तस्य नक्षत्रस्य तत्कालेऽवगतेन नतकालेन प्रागपरकपालक्रमेण युतोनितस्तन्नक्षत्रविषुवकालो भवति ।

अस्मिन्नपि यन्त्रे शङ्कोः पूर्वपार्श्वेऽन्यदेकं भित्तियन्त्रं पूर्वोक्तवदेव विरचितमास्ते । किन्त्वत्र कीलयोर्विप्रकर्षोऽङ्गुलद्वयोनसप्तकरमितोऽस्ति ।

अस्माच्च यन्त्रात् पूर्वस्यां दिशि प्रस्तरमेकं नाडीमण्डलाभिधं यन्त्रं विषुवद्वृत्तक्षेत्रे वर्तते । यस्योत्तरपार्श्वेऽङ्गुलद्वयाधिककरत्रयव्यासमूर्ध्वाधरतिर्यग्रेखाभ्यां विहिततुल्यचतुर्विभागं प्रतिपदं नवत्या भागैरङ्कितं केन्द्रमध्यस्थध्रुवाभिमुखलोहकीलं वृत्तं कृतमस्ति । तस्य च कीलस्य छायया सौम्यगोले स्थितस्य रवेर्नक्षत्रस्य वा नतकालो ज्ञायते । एतद्यन्त्रदक्षिणपार्श्वमपि याम्यगोलस्थस्य भस्य भास्वतो वा नतकालावगमाय त्रयोदशाङ्गुलाधिकैकहस्तव्यासेन पूर्ववदूर्ध्वाधरतिर्यग्रेखाभ्यां भांशैश्चाङ्कितेन मण्डलेन मण्डितं वर्त्तते ।

अस्य च प्राग्भागे यन्त्रसम्राडाकारमेवान्यल्लघु यन्त्रं दैर्घ्ये सप्तदशाङ्गुलोत्तरषड्ढस्तमितेन विंशत्यङ्गुलविस्तारेण याम्यभागे सत्र्यंशकराभ्यां सौम्ये च सार्धपञ्चहस्तैरुच्छ्रितेन शङ्कुना विशिष्टमङ्गुलचतुष्टयाधिकैकहस्तविस्ताराभ्यां पञ्चाङ्गुलपिण्डाभ्यां सत्र्यंशहस्तद्वयविष्कम्भार्धबाह्यपालिभ्यां चापाभ्यां सहितं च वर्त्तते ।

अस्ति चास्य यन्त्रस्य निकट एव भित्तिद्वयमध्यवर्ति लोहमयं चलमण्डलं बाह्यपालौ पित्तलपत्रेणावृतं ध्रुवाभिमुखव्यासकमङ्गुलत्रयविस्तारमर्धाङ्गुलपिण्डं पार्श्वयोर्भांशैः प्रत्यंशं तुल्यैश्चतुर्भिर्विभागैश्चाङ्कितं केन्द्रस्थकीले प्रोतयाङ्गुलत्रयविस्तारया मध्यचिह्नितसूत्रया पित्तलपट्या विशिष्टं चक्रयन्त्रं नाम ।

अस्माच्च यन्त्रात् खेटस्य भस्य वा क्रान्तेरवगमाय चक्रं तन्मध्यगतपट्टीं च तथा चालयेद्यथा यस्य क्रान्तिर्ज्ञातुमिष्यते तत् पट्यधोगतया दृष्ट्या विलोकितं सत् पट्टीमध्यगतसूत्रे दृश्येत । तथा चास्य ध्रुवाभिमुखव्यासे योऽन्यो लम्बरूपो व्यासः स्यात् तस्य पट्याश्च मध्ये यावन्तः परिधावंशास्तावन्तस्तस्य खेटस्य नक्षत्रस्य वा क्रान्त्यंशा वेदितव्याः ।

अत्रैव यन्त्रे ग्रहनक्षत्राणां नतकालाद्यवगमायाधारवृत्तादीन्यन्यान्यपि वलयान्यासन् । परमिदानीं तानि नष्टानीति भाति । या चात्र पट्टी वर्तते तयेदानीं वक्रत्वं गतया प्रोक्तवत् क्रान्तिज्ञानं न भवति ।

अस्ति चास्माद्यन्त्रात् प्राच्यां दिशि विपुलं दिगंशयन्त्रम् । यन्मध्यगतो वृत्ताकारो दशाङ्गुलोत्तरहस्तद्वयव्यासो पादोनहस्तत्रयोत्सेधः स्वकेन्द्रस्थाननिखातसरन्ध्राग्रकीलः स्तम्भः स्वस्मात् चतुरङ्गुलोनकरपञ्चकान्तरे वर्तमानया स्तम्भतुल्योच्छ्रायया रूपहस्तमितविस्तारया भित्त्या वृतस्तद्भित्तेरपि किंचिदधि-

कहस्तद्वयान्तरे बहिर्भागे स्थितयोश्छाये पूर्वभित्तेर्द्विगुणया सच्यंशैकहस्तविस्तारयापरभित्त्या चावेष्टितोऽस्ति । अनयोश्च भित्त्योः प्रत्येकमुपरितनभागो दिग्भिर्भांशैश्चाङ्कितो वर्तते । तस्या बाह्यभित्तेश्चोपरि चतुर्दिक्षु चत्वारो लोहकीला निखाताः सन्ति ।

एवंविधमिदं महायन्त्रं दिगंशज्ञानार्थमुपयुज्यते । तथाहि । बाह्यभित्तेरुपरि रोपितयोः पूर्वपश्चिमकीलयोर्बद्धस्य सूत्रस्य तथाविधयोर्दक्षिणोदक्कीलयोर्बद्धेन सूत्रेण सह संपातो मध्यस्तम्भकेन्द्रस्योपरितनदेश एव वर्तते । ततस्तृतीयस्य प्रगुणस्य सूत्रस्यैकमग्रं स्तम्भकेन्द्रे दृढं बध्वान्यदग्रं बाह्यभित्तिपालौ नीत्वा तथा चालयेद्यथा यस्य ग्रहस्य दिगंशा वेद्यास्तस्मिन् मध्यभित्तिबाह्यपालिगतदृष्ट्या विलोक्यमाने स ग्रहः प्रोक्तसूत्रद्वयसंपातश्च तृतीयसूत्रगतौ स्याताम् । तथा च बाह्यभित्तिपालौ प्राक्चिन्हात् पश्चिमचिन्हाद्वा तृतीयसूत्रपर्यन्तं यावन्तोऽशास्तावन्तस्तस्य ग्रहस्य दिगंशा भवन्ति ।

एवमुक्तेषु यन्त्रेषु विभागचिन्हानि प्रायो लोपमगमन् । क्वचिद्यन्त्राण्यप्येकदेशे भग्नतां नतिं चाप्नुवन् ।

इत्थं संक्षेपतो मानमन्दिरान्तरवर्तिनाम् ।
यन्त्राणां वर्णितानीह स्वरूपाणि फलानि च ॥

॥ इति शिवम् ॥

एतस्य निर्माता

बापूदेवशास्त्री काशिकपाठालयीयज्योतिःशास्त्राध्यापकः ।

---

## REMARKS ON PROF. GOLDSTÜCKER'S ENLARGED EDITION OF WILSON'S SANSKRIT DICTIONARY.

Although but six parts of this great Dictionary have yet appeared, not finishing even the first letter, a cursory glance over the pages is sufficient to strike the reader with the uncommon arduousness of the task which this eminent Sankritist has undertaken. There is scarcely a page in the work that does not bear ample testimony to the vast erudition, profound grammatical knowledge and extensive researches of the author. But the work which the Professor has projected, is, I think, too vast to be accomplished by one man. Instead of contenting himself with giving all the different meanings of words, each illustrated, when necessary, by one or two examples, the Professor often writes under them elaborate articles on subjects connected with history, philosophy, grammar, rhetoric &c. &c., replete with a superabundance of quotations drawn from an infinite variety of sources. The consequence of this attempt to do too much is, that inaccuracies and errors have crept in, which are, not unfrequently, serious and bewildering.

I shall point out a few errors committed in the interpretation of some of the technical terms used in Rhetoric. The Professor writes:—

"अभिधान—A word; e. g. the Tíká on the Sáhityad: अन्विताभिधानवादिनो (i. e. those who argue that the words of a sentence are logically connected) मीमांसकगुरवस्तु क्रियाकारकयोः प्रथमत एवान्वयबोधो जायते ततः शक्तिग्रहः—[इत्याहुः].

The term अभिधान is not used, as the Professor supposes, in the sense of *word* in the compound अन्विताभिधानवादिनः but in that of *expression, or an act of expressing*. अन्विताभिधानवादिनः (those who hold the expression of the logically connected) is the disignation of the Mímánsakas, as contradistinguished from the old Naiyáyikas, the अभिहितान्वयवादिनः (i. e. those who hold the logical connection of the expressed). The former reject the tenet of the latter that the words of a sentence at first severally suggest *distinct* ideas, the *connection* whereof is *afterwards* suggested by the sentence as a whole, through that power belonging to it which is termed Purport. For, according to them, all our notions of agent, action, object, instrument, position and the like being necessarily connected, the words cannot convey distinct notions *to be* connected afterwards, but convey them *already* connected.

"अनुचितार्थ—Having an unknown or an unusual meaning (as a word; in rhetoric considered as one of the पददोष q. v.; e. g. if the word पशु animal, is used in the sense of sacrificial animal in a poetical passage, while it has this sense only in the ritual literature, or with the intention of implying timidity which it does not imply."

The above term means 'Having an *improper* signification.' The passage referred to by the Professor is:—

शूरा अमरतां यान्ति पशुभूता रणाध्वरे ।

पशु is not faulty here because it is used in the sense of sacrificial animal, that meaning being by no means restricted to the ritual literature, but because it *does* imply timidity or wretchedness which was *not* intended to be implied, being inconsistent with the character of a hero शूर.

"अपरोपित—Thrown off, shot off; e. g.

यत्र पतत्यबलानां दृष्टि र्निशिताः पतन्ति तत्र शराः ।
तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये ॥

The above stanza is no exemplification of the present word, for the *sandhi* is तच्चापरोपितशरः is not to be separated thus—तत् + च + अपरोपितशरः, but thus—तत् + चाप-रोपित-शरः, as the former analysis brings in the unmeaning expletive च. Besides, the etymology of the word अपरोपित can not well warrant its use in the sense of *thrown off*, much less in that of *shot off*. The following line of an exactly similar import, occurring in the same book, *viz.*, the Sáhitya-darpaṇa, from which the above couplet is taken, seems to favour the latter analysis:—

ईक्षसे यत् कटाक्षेण तदा धन्वी मनोभवः ।

The Professor's rendering (p. 98, c. 2, l. 9), therefore, should be altered thus: "Wherever falls the look of woman there fall sharpened arrows; I think therefore that the God of love runs before them *with his bow furnished with arrows*."

"अभवन्मतयोग—Not conveying accurately by a sentence the intended sense, (*a*) by connecting syntactically words which have no logical relation to each other, or (*b*) by disconnecting syntactically words which are logically connected, or (*c*) by erring in the mode of connection; e. g. (*a*) in the sentence:—

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि
र्लीलापानभुवश्च चन्दनतरुच्छायासु* यैः कल्पिताः ।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किन्तैस्त्वत्परितोषकारि विहितं किञ्चित्प्रवादोचितम् ॥

There is no logical relation between the words in the relative and those in the correlative sentence.—"

The remark on the example is not correct, as will be evident from the following translation of the stanza :

'They, the flames of whose triumphant energy drank up those streams of juice *flowing from the temples* of the divine elephants, who made the shades of Indra's garden the places of their mirthful carousals, whose—the night-prowlers'—roarings troubled the prince of the gods—what have they done to thy satisfaction and in accordance with the report of their prowess ?'

The blemish of the stranza consists in the use of the word क्षपाचारिन् (night-prowler) in one of the Protatic, or relative, clauses, when, as representing the subject of the sentence, it ought to have been employed in the Apodosis, or correlative clause. The example is exactly similar to the one cited by the Professor to illustrate his second division of the fault, marked *b*.

"अमतपरार्थ—Having another sense (*viz.*, one) what is at variance with (that of) the subject matter (as a sentence)—*Kávyaprak.* * * यथा ॥ राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी । गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा; the erotic character of which sentence, as the *Kávyapra* observes, is at variance with the character of the poem where it occurs."

The above stanza occurs in the 11th canto of the Raghuvanśa. It is scarcely necessary to add that its character is not erotic but disgustful. It is faulty not because its character is at variance with that of the poem in which it occurs (which is not the case, as the Raghuvanśa is of a varied character and devotes more than one canto to erotic descriptions), but because its *second* sense is erotic and is incongruous with the principal meaning.

Such errors are not confined to the explanation of technical terms. Words of common occurrence are also sometimes found misinterpreted. For instance, the word अक्लेद्य,† instead of being rendered 'not to be wet,' is rendered 'not to be distressed.' This error however is Prof. Wilson's and is only retained by the editor. The word अभव्य, besides other interpretations, is explained to mean *deceitful*, and the following śloka of the Mahábhárata is cited to authorize this sense :—

एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत ।
अभव्यो भव्यरूपेण भस्मछन्न इवानलः ॥

अभव्यो भव्यरूपेण is rendered 'deceitful on account of his future appearance,' when it evidently means—'evil, with a good appearance.'

* चन्दनतरुच्छायासु is a mistake of the printed Kávya-prakáśa for चन्दनतरु——

† There is indeed a root क्लिद् given in Wilson and Rádhákánta Deva and interpreted *to lament* or *bewail*. Even if it did mean *to distress*, that would be no ground for setting aside, in the present instance, the far more common meaning of *to wet*. Need I here remind the reader of that well known sublime couplet of the *Bhagavad gítá*?—

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्व्वगतः स्थाणुरचलोऽयं सनातनः ॥

Nowhere however in the pages of the Dictionary, I feel myself bound to observe, is the reader disgusted with any the faintest mark of that presumptuous and perverse pedantry which leads the author, while professing to write a *Sanskrit* Dictionary, outrageously to strip Sanskrit words of their native forms, and capriciously to force upon them foreign and uncouth shapes such as make it difficult even for those to recognize them who bear the most affectionate and natural relation to them—the Hindus. Great indeed would be the work—wondrous as the production of one man—though not entirely to be relied upon as an authority—even with errors such as have been pointed out, were there any chance of its ever being completed. As the case is, it is much to be wished that the Professor would circumscribe the sphere of his work within narrower limits, and secure the chance of soon finishing a comprehensive Sanskrit and English Dictionary, the want of which is daily felt with growing urgency.

PRAMADÁDÁSA MITTRA.
ASSTT. ANGLO-SANSKRIT PROFESSOR.

## EXAMINATION IN SANSKRIT, CALCUTTA UNIVERSITY.

*The following subjects in Sanskrit are appointed for the examination for Honours and M. A. degree in* 1867.

KÁLIDÁSA, ... Śakuntalá and Meghadúta.
BHAVABHÚTI, Víracharita and Uttararámacharitra.
ŚÚDRAKA, ... Mrichchhakatí.
VÁṆA BHAṬṬA, Kádambarí.
BHÁRAVI, ... Kirátárjuníya, I.-III, XI-XIV.
MÁGHA, ... Śiśupálavadha, I.-VI., XII.-XVI.
ŚRÍHARSHA,... Naishadhacharita, I.-V., IX.-XII., XVII.
MAMMAṬA BHAṬṬA. Kávyaprakáśa.
VIŚWANÁTHA PANCHÁNANA, Bháshá parichcheda and Siddhánta Muktávali.
VÁCHASPATI MIŚRA, Tattva Kaumudí.
PÁṆINI, ... Káraka, Samása, as in the Siddhánta Kaumudí of Bhaṭṭoji Díkshita.

## The Pandit.

The PANDIT may be ordered of the Publishers, Medical Hall Press, Benares; or through MESSRS. TRÜBNER and Co. LONDON.

*Annual subscription, in advance, including postage, Indian and English, Rs.* 12-0-0 *per annum.*

PRINTED and PUBLISHED by E. J. LAZARUS and Co., at the MEDICAL HALL PRESS, BENARES.

काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 2. Benares July 2nd, 1866. Vol. I.

## ॥ कुमारसम्भवोत्तरखण्डवर्णनम् ॥

श्रीमद्भारतवर्षीयकवीन्द्रः कालिदासो ऽनतिप्रौढे वयसि खण्डकाव्यं षड्‌ऋतुसंहारं महाकाव्यं कुमारसम्भवं नाटकं मालविकाग्निमित्रमित्येतानि निबबन्ध । ततः प्रौढे बुद्धिप्रतिभाद्यतिशयवति वयसि खण्डकाव्यं मेघदूतं महाकाव्यं रघुवंशं नाटकं शाकुन्तलं जगतो भूषणभूतं प्रकाशयाम्बभूव । अथ परिणामोन्मुखवयाः स एव खण्डकाव्यं राक्षसकाव्यं महाकाव्यं नलोदयं नाटकं विक्रमोर्वशीयं रसवन्त्यपि कष्टग्राह्यरसानि निर्ममे ।

तेषुच काव्येषु मध्ये कुमारसम्भवं सप्तमसर्गावध्येव व्याख्यानाध्ययनाध्यापनकर्मसु प्रवृत्तं न ततः परं । तत्र कारणं साहित्यशास्त्राचार्यैर्मम्मटादिभिः काव्ये दिव्यप्रकृतीनां सम्भोगवर्णनस्यानौचित्यात् प्रतिषेधकरणं ।

एवं स्थिते कालेन तद् विलोपं गन्तुं प्रवृत्तं तदाचैकं पुस्तकं कलिकातानगरे उपलब्धमपरंच वाराणस्यां तयोश्च वाराणसीस्थपुस्तकवर्तिनः पाठा यत्र शुद्धाः सन्ति तत्र तएव परिपालनार्हाः कलिकातापुस्तकं तु यत्र संशयोऽशुद्धिर्वा तत्र दर्शनमर्हति । अथैते सप्तैव सर्गाः कालिदासेन प्रणीता नेतरे दशेति ये वदन्ति तान्प्रति किञ्चिदुच्यते ॥

तथाहि । अष्टमसर्गस्थः षष्ठः श्लोकः सरस्वतीकण्ठाभरणव्याख्यायामुदाहृतोऽस्ति तद्यथा । यदि न वक्ष्यामि तदा ग्राम्यामथ वक्ष्यामि तदा धृष्टामाकलयिष्यतीति जानन्त्या द्वयमुत्तरमौचित्यापन्नं स्यात् । शिरःकम्प एकोत्तरंच । तचाद्यः कालिदासेन प्रयुक्तः । मूर्धकम्पमयमुत्तरं ददाविति ।

अथाष्टमसर्गात् परो यो ग्रन्थः सोऽपि कालिदासेनैव प्रणीत इत्यत्रहेतुः प्रदर्श्यते तथाहि । प्रथमे वयस्यारब्धं कुमारसम्भवनामाङ्कितं काव्यं कुमारोत्पत्तिमवर्णयित्वैव प्रेक्षावतमोऽप्युन्मत्तइवोत्सृजेदिति न सम्भाव्यते यदातु कुमारोत्पत्तिं दशमे सर्गे वर्णयामास तदा तत्प्रयोजनतया सप्तमसर्गाभ्यन्तरएवोपन्यस्तं तारकासुरविजयं सप्तभिः सर्गैरुपन्यस्तवानिति ।

किञ्चकुमारसम्भवे ये श्लोकाः कालिदासेन सप्तमे सर्गे विवाहागतस्य हरस्य दर्शनायोत्सुकानां पौरवनितानामवस्थावर्णनाय विवाहक्रियावर्णनायच विरचितास्तएव रघुवंशे सप्तमे सर्गेऽजस्य तादृशे प्रसङ्गे तयैवानुपूर्व्या प्रकरणानुरोधिविकारमात्रेण भिन्नयोपन्यस्ताः । तथा कुमारसम्भवे षोडशे सर्गे ऽनुष्टुप्छन्दसा निबद्धे ये येऽर्था देवासुरयुद्धवर्णनप्रसङ्ग उपन्यस्तास्तएवाजस्य युद्धप्रस्तावे रघुवंशे सप्तमे सर्गे उपजातिच्छन्दसा तच्छन्दोनिर्वहणमात्रोपयोगिना विकारेणोपदर्शिताः । एवं कुमारसम्भवस्य द्वितीयतृतीयषष्ठदशमसर्गेषु स्थितान्यन्यान्यपि पद्यानि प्रस्तावमात्रोपयोगिविकृतिमन्ति रघुवंशस्य दशमषोडशपञ्चदशसर्गेषु दृश्यन्त इति सम्भाव्यते सप्तदशसर्गमितस्य कुमारसम्भवस्यैकोनविंशतिसर्गपरिमाणेन रघुवंशेन समानकर्तृकत्वमित्यलं बहुनेति शम् ।

काशीस्थराजकीयपाठालये सांख्यशास्त्राचार्यो

विट्ठलशास्त्री

॥ श्रीगणेशायनमः ॥

---

पाणिपीडनविधेरनन्तरं
शैलराजदुहितुर्हरं प्रति ।
भावसाध्वसपरिग्रहादभूत्
कामदोहदसुखं मनोहरम् ॥ १ ॥
व्याहृता प्रतिवचो न सन्दधे
गन्तुमैच्छदवलम्बितांशुका ।
सेवतेस्म शयनं पराङ्मुखी
सा तथापि रतये पिनाकिनः ॥ २ ॥
कैतवेन शयिते कुतूहलात्
पार्वती प्रतिमुखं निपातितम् ।
चक्षुरुन्मिषति सस्मितं प्रिये
विद्युदाहतमिव न्यमीलयत् ॥ ३ ॥
नाभिदेशनिहितः सकम्पया
शङ्करस्य रुरुधे तया करः ।
तन्नितम्बमभवत् तदा स्वयं
दूरमुच्छ्वसितनीविबन्धनम् ॥ ४ ॥
एवमालि निगृहीतसाध्वसं
शङ्करो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला
नास्मरत् प्रमुखवर्त्तिनि प्रिये ॥ ५ ॥
अप्यवस्तुनि कथाप्रवृत्तये
प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिगृह्य पार्वती
मूर्द्धकम्पमयमुत्तरं ददौ ॥ ६ ॥
शूलिनः करतलद्वयेन सा
सन्निरुध्य नयने हृतांशुका ।
तस्य पश्यति ललाटलोचने
मोघयत्नविधुरा रहस्यभूत् ॥ ७ ॥
चुम्बनेष्वधरदानवर्जितं
सन्नहस्तमदयोपगूहने ।
क्लिष्टमन्मथमपि प्रियं प्रभो-
र्दुर्लभप्रतिकृतं वधूरतम् ॥ ८ ॥
यन्मुखग्रहणमक्षताधरं
दत्तमव्रणपदं नखं च यत् ।
यद्रतं च सदयं हरस्य तत्
पार्वती विषहतेस्म नेतरत् ॥ ९ ॥
रात्रिवृत्तमनुयोक्तुमुद्यतं
सा विभातसमये सखीजनम् ।
नाकरोदपकुतूहलं ह्रिया
शंसितुञ्च हृदयेन तत्वरे ॥ १० ॥
दर्पणेच परिभोगदर्शिनी
पृष्ठतः प्रणयिनो निषेदुषः ।
प्रेक्ष्य बिम्बमनु बिम्बमात्मनः
कानिकान्यपि चकार लज्जया ॥ ११ ॥
नीलकण्ठपरिभुक्तयौवनां
तां विलोक्य जननी समाश्वसीत् ।
भर्तृवल्लभतया हि मानसीं
मातुरस्यति शुचं वधूजनः ॥ १२ ॥
वासराणि कतिचित् कथञ्चन
स्थाणुना पदमकार्य्यत प्रिया ।
ज्ञातमन्मथरसा शनैः शनैः
सा मुमोच रतिदुःखशीलताम् ॥ १३ ॥
सस्वजे प्रियमुरोनिपीडिता
प्रार्थितं मुखमनेन नाहरत् ।
मेखलाप्रणयलोलतां गतं
हस्तमस्य शिथिलं रुरोध सा ॥ १४ ॥
भावसूचितमदृष्टविप्रियं
चाटु तत्क्षणवियोगकातरम् ।
कैश्चिदेव दिवसैस्तदा तयोः
प्रेम रूढमितरेतराश्रयम् ॥ १५ ॥
तं यथात्मसदृशं वरं वधू-
रन्वरज्यत वरस्तथैव ताम् ।
सागरादनपगाहि जाह्नवी
सोऽपि तन्मुखरसैकनिर्वृतिः ॥ १६ ॥
शिष्यतां निधुवनोपदेशिनः
शङ्करस्य रहसि प्रपन्नया ।
शिक्षितं युवतिनैपुणं तया
तत् तदेव गुरुदक्षिणीकृतम् ॥ १७ ॥

दष्टमुक्तमधरोष्ठमम्बिका
वेदनाविधुतहस्तपल्लवा ।
शीतलेन निरवापयत्क्षणं
मौलिचन्द्रशकलेन शूलिनः ॥ १८ ॥
चुम्बनादलकचूर्णदूषितं
शङ्करोऽपि नयनं ललाटजम् ।
उच्छ्वसत्कमलगन्धये ददौ
पार्वतीवदनगन्धवाहिने ॥ १९ ॥
एवमिन्द्रियसुखस्य वर्त्मनः
सेवनादनुगृहीतमन्मथः ।
शैलराजभवने सहोमया
मासमात्रमवसद्वृषध्वजः ॥ २० ॥
सोऽनुमन्त्र्य हिमवन्तमात्मभू-
रात्मजाविरहदुःखपीडितम् ।
तत्र तत्र विजहार सम्पत-
न्नप्रमेयगतिना ककुद्मता ॥ २१ ॥
मेरुमेत्य मरुदाशुवाहनः
पार्वतीस्तनपुरस्कृतः कृती ।
हेमपल्लवविभङ्गसंस्तरा-
नन्वभूत् सुरतमर्दनक्षमान् ॥ २२ ॥
पद्मनाभचरणाङ्किताश्मसु
प्राप्तवत्स्वमृतविप्रुषो नवाः ।
मन्दरेषु कटकेषु चावसत्
पार्वतीवदनपद्मषट्पदः ॥ २३ ॥
रावणध्वनितभीतया तया
कण्ठसक्तमृदुबाहुबन्धनः ।
एकपिङ्गलगिरौ जगद्गुरु-
र्निर्विवेश विशदाः शशिप्रभाः ॥ २४ ॥
तस्य जातु मलयस्थलीरते-
र्धूतचन्दनलतः प्रियाक्लमम् ।
आचचाम सलवङ्गकेसर-
श्चाटुकार इव दक्षिणानिलः ॥ २५ ॥
हेमतामरसताडितप्रिया
तत्कराम्बुविनिमीलितेक्षणा ।
खे व्यगाहत तरङ्गिणीमुमा
मीनपङ्क्तिपुनरुक्तमेखला ॥ २६ ॥
तां पुलोमतनयाऽलकोचितैः
पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनः
सस्पृहं सुरवधूभिरैक्ष्यत ॥ २७ ॥
इत्यभौममनुभूय शङ्करः
पार्थिवं च वनितासखः सुखम् ।
लोहितायति कदाचिदातपे
गन्धमादनवनं व्यगाहत ॥ २८ ॥
तत्र काञ्चनशिलातलाश्रयो
नेत्रगम्यमवलोक्य भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां
व्याजहार सहधर्मचारिणीम् ॥ २९ ॥
पद्मकान्तिमरुणत्रिभागयोः
सङ्क्रमय्य तव नेत्रयोरिव ।
सङ्क्षये जगदिव प्रजेश्वरः
संहरत्यहरसावहर्पतिः ॥ ३० ॥
शीकरव्यतिकरं मरीचिभि-
र्दूरयत्यवनते विवस्वति ।
इन्द्रचापपरिवेषशून्यतां
निर्झराः प्रसवितुर्व्रजन्ति ते ॥ ३१ ॥
दष्टतामरसकेसरस्रजोः
क्रन्दतोर्विपरिवृत्तकण्ठयोः ।
निघ्नयोः सरसि चक्रवाकयो-
रल्पमन्तरमनल्पताङ्गतम् ॥ ३२ ॥
स्थानमाह्निकमपास्य दन्तिनः
शल्लकीविटपभङ्गवासितम् ।
आविभातचरणाय गृह्णते
वारि वारिरुहबद्धषट्पदम् ॥ ३३ ॥
पश्य पश्चिमदिगन्तलम्बिना
निर्मितं कथमिदं विवस्वता ।
दीर्घया प्रतिमया सरोऽम्भसां
तापनीयमिव सेतुबन्धनम् ॥ ३४ ॥
उत्तरन्ति विनिकीर्य पल्वलम्
गाढपङ्कमतिवाहितातपाः ।

दंष्ट्रिणो वनवराहयूथपा
दष्टभङ्गुरबिसाङ्कुरा इव ॥ ३५ ॥
एष वृक्षशिखरे कृतास्पदो
जातरूपरसगौरमण्डलः ।
हीयमानमहरत्ययातपम्
पीवरोरु पिबतीव बर्हिणः ॥ ३६ ॥
पूर्वभागतिमिरप्रवृत्तिभि-
र्व्यक्तपङ्कमिव जातमेकतः ।
खं हृतातपजलं विवस्वता
भाति किञ्चिदिव शेषवत् सरः ॥ ३७ ॥
आविशद्भिरुटजाङ्गणं मृगै-
र्मूलसेकसरसैश्च वृक्षकैः ।
आश्रमाः प्रविशदग्निधेनवो
बिभ्रति श्रियमुदीरिताग्नयः ॥ ३८ ॥
बद्धकोशमपि तिष्ठति क्षणम्
सावशेषविवरं कुशेशयम् ।
षट्पदाय वसतिं ग्रहीष्यते
प्रीतिपूर्वमिव दातुमन्तरम् ॥ ३९ ॥
दूरमग्रपरिमेयरश्मिना
वारुणीदिगरुणेन भानुना ।
भाति केसरलतेव मण्डिता
बन्धुजीवकुसुमेन कन्यका ॥ ४० ॥
सामभिः सहचराः सहस्रशः
स्यन्दनाश्वहृदयङ्गमस्वरैः ।
भानुमग्निपरिकीर्णतेजसं
संस्तुवन्ति किरणोष्मपायिनः ॥ ४१ ॥
सोऽयमानतशिरोरुहैर्हयैः
कर्णचामरविघट्टितेक्षणैः ।
अस्तमेति युगभुग्नकेसरैः
सन्निधाय दिवसं महोदधौ ॥ ४२ ॥
खं प्रसुप्तमिव संस्थिते रवौ
तेजसो महत ईदृशी गतिः ।
तत्प्रकाशयति यावदुद्गतं
मीलनाय खलु तावता च्युतम् ॥ ४३ ॥
सन्ध्ययाप्यनुगतं रवेः पदं
घर्ममस्तशिखरे समर्पितम् ।
येन पूर्वमुदये पुरस्कृता
नानुयास्यति कथं तमापदि ॥ ४४ ॥
रक्तपीतकपिशाः पयोमुचाम्
कोटयः कुटिलकेशि भान्त्यमूः ।
द्रक्ष्यसि त्वमिति सन्धिवेलया
वर्तिकाभिरिव साधु मण्डिताः ॥ ४५ ॥
सिंहकेसरसटासु भूभृताम्
पल्लवप्रसविषु द्रुमेषु च ।
पश्य धातुशिखरेषु चात्मनः
संविभक्तमिव सान्ध्यमातपम् ॥ ४६ ॥
पार्ष्णिमुक्तवसुधास्तपस्विनः
पावनाम्बुविहिताञ्जलिक्रियाः ।
ब्रह्म गूढमभिसान्ध्यमादृताः
सिद्धये विधिविदो गृणन्त्यमी ॥ ४७ ॥
तन्मुहूर्तमनुमन्तुमर्हसि
प्रस्तुताय नियमाय मामपि ।
त्वां विनोदनिपुणः सखीजनो
वल्गुवादिनि विनोदयिष्यति ॥ ४८ ॥
निर्विभुज्य दशनच्छदं ततो
वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगा-
माललाप विजयामहेतुकम् ॥ ४९ ॥
ईश्वरोऽपि दिवसात्ययोचितम्
मन्त्रपूर्वमनुतस्थिवान् विधिम् ।
पार्वतीमवचनामसूयया
प्रत्युपेत्य पुनराह सस्मितम् ॥ ५० ॥
मुञ्च कोपमनिमित्तकोपने
सन्ध्यया प्रणमितोऽस्मि नान्यया ।
किं न वेत्सि सहधर्मचारिणं
चक्रवाकसमवृत्तिमात्मनः ॥ ५१ ॥
निर्मितेषु पितृषु स्वयम्भुवा
या तनुः सुतनु पूर्वमुज्झिता ।
सेयमस्तमुदयञ्च सेव्यते
तेन मानिनि ममात्र गौरवम् ॥ ५२ ॥

तामिमां तिमिरवृत्तिपीडिताम्
भूमिलग्नमिव सम्प्रति स्थिताम् ।
एकतस्तटतमालमालिनीम्
पश्य धातुरसनिम्नगामिव ॥ ५३ ॥
सान्ध्यमस्तमितशेषमातपं
रक्तलेखमपरा बिभर्त्ति दिक् ।
सम्परायवसुधा सशोणितम्
मण्डलाग्रमिव तिर्यगुज्झितम् ॥ ५४ ॥
यामिनीदिवससन्धिसम्भवे
तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं निरङ्कुशं
दिक्षु दीर्घनयने विजृम्भते ॥ ५५ ॥
नोर्ध्वमीक्षणगतिर्नचाप्यधो
नाभितो न पुरतो न पृष्ठतः ।
लोक एष तिमिरोल्बवेष्टितो
गर्भवासइव वर्त्तते निशि ॥ ५६ ॥
शुद्धमाविलमवस्थितं चलम्
वक्रमार्जवगुणान्वितञ्च यत् ।
सर्वमेव तमसा समीकृतं
धिङ्महत्त्वमसतां हृतान्तरम् ॥ ५७ ॥
नूनमुन्नयति यज्वनाम्पतिः
शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि पश्य दिङ्मुखं
कैतकैरिव रजोभिरावृतम् ॥ ५८ ॥
मन्दरान्तरितमूर्त्तिना निशा
लक्ष्यते शशभृता सतारका ।
त्वं मया प्रियसखीसमागता
श्रोष्यतेव वचनानि पृष्ठतः ॥ ५९ ॥
रुद्धनिर्गमनमादिनक्षयात्
पूर्वदृष्टतनुचन्द्रिकास्मितम् ।
एतदुद्गिरति रात्रिचोदिता
दिग् रहस्यमिव चन्द्रमण्डलम् । ६० ॥
पश्य पक्वफलिनीफलत्विषा
बिम्बलाञ्छितवियत्सरोऽम्भसा
विप्रकृष्टविरहं हिमांशुना
चक्रवाकमिथुनं विडम्ब्यते ॥ ६१ ॥
शक्यमोषधिपतेर्नवोदयाः
कर्णपूररचनाकृते तव ।
अप्रगल्भयवसूचिकोमलाः
छेत्तुमग्रनखसम्पुटैः कराः ॥ ६२ ॥
अङ्गुलीभिरिव केशसञ्चयं
सन्निगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं
चुम्बतीव रजनीमुखं शशी ॥ ६३ ॥
पश्य पार्वति नवेन्दुरश्मिभि-
र्भिन्नसान्द्रतिमिरं नभस्तलम् ।
लक्ष्यते द्विरदभोगदूषितम्
सम्प्रसादमिव मानसं सरः ॥ ६४ ॥
रक्तभागमपहाय चन्द्रमा
जात एष परिशुद्धमण्डलः ।
विक्रिया न खलु कालदोषजा
निर्मलप्रकृतिषु स्थिरोदया ॥ ६५ ॥
उन्नतेषु शशिनः प्रभा स्थिता
निम्नसंश्रयपरं निशातमः ।
नूनमात्मसदृशी प्रकल्पिता
वेधसेह गुणदोषयोर्गतिः ॥ ६६ ॥
चन्द्रपादजनितप्रवृत्तिभि-
श्चन्द्रकान्तजलबिन्दुभिर्गिरिः ।
मेखलातरुषु निद्रितानिमान्
बोधयत्यसमये शिखण्डिनः ॥ ६७ ॥
कल्पवृक्षशिखरेषु सम्प्रति
प्रस्फुरद्भिरविकल्पसुन्दरि ।
हारयष्टिगणनामिवांशुभिः
कर्त्तुमुद्यतकुतूहलः शशी ॥ ६८ ॥
उन्नतावनतभागवत्तया
चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिता
भाति भूतिरिव मत्तदन्तिनः ॥ ६९ ॥
एतदुच्छ्वसितपीतमैन्दवं
वोढुमक्षममिव प्रभारसम्

मुक्तषट्पदविरावमञ्जसा
भिद्यते कुमुदमानिबन्धनात् ॥ ७० ॥
पश्य कल्पतरुलम्बि शुद्धया
ज्योत्स्नया जनितरूपसंशयम् ।
मारुते चलति चण्डिके चलम्
व्यज्यते विपरिवृत्तमंशुकम् ॥ ७१ ॥
शक्यमङ्गुलिभिरुद्धृतैरधः
शाखिनां पतितपुष्पकोमलैः ।
पत्रजर्जरशशिप्रभालवै-
रेभिरुत्कचयितुं तवालकम् ॥ ७२ ॥
एष चारुमुखि पश्य तारया
युज्यते तरलबिम्बया शशी ।
साध्वसादुपगतप्रकम्पया
कन्ययेव नवदीक्षया वरः ॥ ७३ ॥
पाकपाण्डुशरकाण्डगौरयो-
रुल्लसत्प्रतिकृतिप्रसन्नयोः ।
रोहतीव तव गण्डलेखयो-
श्चन्द्रबिम्बनिहिताक्षि चन्द्रिका ॥ ७४ ॥
लोहितार्कमणिभाजनार्पितम्
कल्पवृक्षमधु बिभ्रती स्वयम् ।
त्वामियं स्थितिमतीमुपस्थिता
गन्धमादनवनाधिदेवता ॥ ७५ ॥
आर्द्रकेसरसुगन्धि ते मुखम्
मत्तमेव नयनं स्वभावतः ।
अत्र लब्धवसतिर्गुणान्तरं
किं विलासिनि मदः करिष्यति ॥ ७६ ॥
मान्यभक्तिरथवा सखीजनः
सेव्यतामिदमनङ्गदीपनम् ।
इत्युदारमभिधाय शङ्करस्-
तामपाययत पानमम्बिकाम् ॥ ७७ ॥
पार्वती तदुपयोगसम्भवाम्
विक्रियामपि सतीं मनोहराम् ।
अप्रतर्क्यविधियोगनिर्मिता-
माम्रतेव सहकारतां ययौ ॥ ७८ ॥
तत्क्षणं विपरिवर्त्तितह्रियो-
र्वाञ्छतोः शयनमिद्धरागयोः ।
सा बभूव वशवर्त्तिनी द्वयोः
शूलिनःसुवदना मदस्य च ॥ ७९ ॥
घूर्णमाननयनं स्खलद्वचः
स्वेदबिन्दुमदकारणस्मितम् ।
आननेन नतु तावदीश्वर-
श्चक्षुषा चिरमुमामुखं पपौ ॥ ८० ॥
तां विलम्बितपनीयमेखला-
मुद्वहन् जघनभारदुर्वहाम् ।
ध्यानसम्भृतिविभूतिगोचरम्
प्राविशन्मणिशिलागृहं हरः ॥ ८१ ॥
तत्र हंसधवलोत्तरच्छदं
जाह्नवीपुलिनचारुदर्शनम् ।
अध्यशेत शयनं प्रियासखः
शारदाभ्रमिव रोहिणीपतिः ॥ ८२ ।
क्लिष्टकेशमवलुप्तचन्दनं
व्यत्ययार्पितनखं समत्सरम् ।
तस्य तच्छिदुरमेखलागुणम्
पार्वतीरतमभून्न तृप्तये ॥ ८३ ॥
केवलं प्रियतमादयालुना
ज्योतिषामवनतासु पङ्क्तिषु ।
तेन तत्परिगृहीतवक्षसा
नेत्रमीलनकुतूहलं कृतम् ॥ ८४ ॥
स व्यबुध्यत तया निशाक्षये
शातकुम्भकमलाकरैः समम् ।
मूर्च्छनापरिगृहीतकैशिकैः
किन्नरैः समुपगीतमङ्गलः ॥ ८५ ॥
तौ क्षणं प्रशिथिलोपगूहनौ
दम्पती रचितमानसोर्मयः ।
पद्मभेदपिशुनाः सिषेविरे
गन्धमादनवनान्तमारुताः ॥ ८६ ॥
ऊरुमूलनखमार्गराजिभि-
स्तत्क्षणं हृतविलोचनो हरः ।
वाससः प्रशिथिलस्य संयमं
कुर्वतीं प्रियतमामवारयत् ॥ ८७ ॥

स प्रजागरकषायलोचनं
गाढदन्तपदताडिताधरम् ।
आकुलालकमरंस्त रागवान्
प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ॥ ८८ ॥

तेन भिन्नविषमोत्तरच्छदम्
मध्यपीडितविसूत्रमेखलम् ।
निर्मलेऽपि शयनं निशात्यये
नोज्झितं चरणरागलाञ्छितम् ॥ ८९ ॥

स प्रियामुखरसं दिवानिशं
हर्षवृद्धिजननं सिषेविषुः ।
दर्शनप्रणयिनामदृश्यता-
माजगाम विजयानिवेदितः ॥ ९० ॥

समदिवसनिशीथं सङ्गिनस्तत्रशम्भोः
शतमगमदृतूनां सार्द्धमेका निशेव ।
नच सुरतसुखेभ्यश्छिन्नतृष्णो बभूव
ज्वलनइव समुद्रान्तर्गतस्तज्जलेषु ॥ ९१ ॥

इतिश्रीकुमारसम्भवे महाकाव्ये क-
वीन्द्रकालिदासकृतौ शिवयोः संभोग-
वर्णनोनामाष्टमः सर्गः ॥ ८ ॥

---

बहुधा जातिविषये विवदन्ते विपश्चितः ।
प्रभाकरमतेनायं तेषां प्रत्यास उच्यते ॥ १ ॥

केचिदाचक्षते जातिरिति विकल्पविलसितमिति । एकेतु सतीमपि जातिमाश्रयेभ्यो ऽभिन्नामनुमन्यन्ते । अन्येतु भिन्नामप्यनुमेयामाहुः । अपरेतु भिन्नाभिन्नामिच्छन्ति । तथाचाजातावपि जातिव्यवहारो बहुलमुपलभ्यते केषाञ्चिदिति तन्निराकरणायेदमारभ्यते ।

जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरः ।
पूर्वाकारावमर्शेन प्रभाकरगुरोर्मता ॥ २ ॥

नन्वाश्रयएव द्रव्यं जातेरसदिति सौगताः । तथाहि । न परमाणुषु चतुर्विधेषु पार्थिवाप्यतैजसवायवीयेषु जातिराश्रिताऽभिमता । अनुवृत्ताकारप्रत्ययवियोगात् । भिन्नेषु यदभिन्ना जातिरूप्यते तत्रानुवृत्ताकारावभासिनी बुद्धिरेव निबन्धनम् । नच कस्यचन जन्तोः परमाणुषु करणपथविदूरवर्त्तिषु निपुणमपि निरूपयतो ऽनुवृत्ताकारानुवर्त्तिनी मतिराविर्भवति । यापिचेयं परमाणुरिति मतिः सापि परिमाणलक्षणगुणकारणिका मीमांसकैरपि सङ्गीर्यते । पृथिवीत्वादिकमपि तत्तदसाधारणगन्धादिगुणसमवायमात्रलब्धात्मलाभायां पृथिव्यादिबुद्धौ निबन्धनम् । नच स्थूलेषु द्रव्येषु जातिः समवेयात् तेषामेव दुरुपगमत्वात् । नखलु स्थूलद्रव्यसम्भवो घटते । तथाहि द्व्यणुकादिप्रक्रमेण स्थूलद्रव्यान्तरारम्भकत्वानुपपत्तेः । नचैवैकैकद्रव्यव्यतिरिक्तमपरमारम्भकमस्ति । संयोगोऽपिच तयोरनुपपन्नएव । सहि नैकैकद्रव्यसमवेतः । नाप्येकद्रव्यसमवेतः । एकैकातिरेकेणानेकस्यानुपपत्तेः । अनेनैव मार्गेण त्र्यणुकस्य त्रिभिर्द्व्यणुकैरारम्भणीयस्य महिमगुणशालिनः सम्भवो निरस्तः । तदेवं दूरीभूता स्थवीयसामवयविनामारम्भसङ्कथा । अपिचावयविनः किमवयवेषु प्रत्येकं कार्त्स्न्येन वृत्तिर्व्यासङ्गेनवेतिचिन्तनीयम् । नतावत् कार्त्स्न्येन वृत्तिमुपलभामहे एकैकावयवगतस्य तस्याप्रतिपत्तेः । एकैकावयवगतेच कम्पे रागेवा सकलस्यावयविनः कम्परागप्रतीतिप्रसङ्गात् । तथावयवान्तरेच कम्परागविरहे कम्परागविरहसमासक्तिः । अवयवीच कम्पेत नकम्पेत रज्येत नरज्येतचेति विषमां दशामाविशेत् । नापि व्यासङ्गेनावयविनो वृत्तिरवयवान्तरविरहात् । अवयवशालिनोहि केनचिदवयवेन क्वचन केनचित् क्वचनेति व्यासङ्गिनी वृत्तिरुपपत्तिमती । किन्त्वेकैकत्रावृत्तेरवृत्तिरेव एकैकातिरिक्तानेकाभावात् । किञ्च सकलावयवग्रहणएव नियमेनावयवी ज्ञायेत । नच तथा सम्भवति । अवयवान्तरेणावयवान्तरतिरस्कारात् । नच प्रकारान्तरेण वृत्तिरिति वदितुं शक्यं अनुपपत्तेः प्रकारान्तरस्य । अवयवेभ्यश्चावयवी व्यतिरिच्यमानो ऽव्यतिरिच्यमानोवा न प्रमाणेन सङ्गच्छते । व्यतिरिक्तोहि तदग्रहेऽपि ग्रहणं कदाचिदनुभवेत् । नखलु भिन्नयोः सहोपलम्भनियमो घटयोरिव । तद्वदवयव्यपि भिद्यमानो नावयवैरेव सहोपलभ्येत । कस्याञ्चिदपि दशायामननुभूयमानेष्वप्यवयवेष्वनुभूयेत । नचावयविनमवयवानुभवमन्तरेण केचिदुपलभन्ते । अव्यतिरिच्यमानस्तु नास्त्येवेति वचनभङ्गिमात्रेणोक्तं भवति । तदेवमवयविद्रव्यमुपपत्तिभिरनुसन्धीयमानमेकान्ततो लीयते । कथंतर्हि स्थूलावभासिनी मनीषा समर्थनीया । इत्थं । उत्तराधरभावेन निरन्तरमुत्पन्नाः परमाणवएव समधिगतैन्द्रियकज्ञानजननयोग्यदशाविशेषाः प्रत्यक्षमीक्ष्यन्ते तांस्तु तथाभूताननुभवतस्तद्बलभावी मानस एव स्थूलविकल्पो विजृम्भते । दूरादिव तरुषु निरन्तरेषु समनुभूयमानेषु वनमिति मतिः । अतः स्थवीयसां द्रव्याणामाश्रयाभिमतानामयोगाज्जातिरपि तदाश्रिता नाभ्युपगममर्हति । अपिच जातिरपि नेन्द्रियज्ञानेन प्रतीयते । तस्या नित्यत्वेनाभ्युपगमात् । नहिनित्यं कस्मैचित् कार्याय पर्याप्तम् । तद्धि न शक्तस्वभावं नित्यं कार्योदयापत्तेः । अशक्तस्वभावंतु नित्यावि-

चिकित्सनायाशक्तिकं न किञ्चित् कुर्यात् । नचाजनकमिन्द्रियज्ञानमनुभवति । योहि विषयः स्वस्यान्वयव्यतिरेकौ ज्ञानमनुकारयति स प्रत्यक्षः । किञ्च । समुन्मिषितचक्षुषश्चिराय विषयान्तरानुसन्धानव्यापृतस्य चित्तस्य पुरोवर्त्तिनीं स्वस्तिमतीं कामाक्षींवा साक्षात्कुर्वाणस्य न जातिरपरा ऽवभासते । अन्यच्च जातिरसौ पिण्डैः सहोत्पद्यते विनश्यतिवा । तथोपगमे स्वरूपहानिप्रसङ्गात् । एकाहि जातिरनेकाधिष्ठाना प्रतिज्ञायते । उत्पत्तिमती विनाशिनीचान्या ऽन्या स्यात् । विरुद्धधर्माध्यासस्य भेदापादकत्वात् । सेयं नित्या जातिरुदितवत्यां व्यक्तौ प्रतीयमाना नान्यत आगता निष्क्रियत्वात् । नचतत्रैवासीत् प्रागप्रतीतेः । नच स्थितिरपि युक्तिमती व्यक्तिरेवहि तस्यादेशो नाकाशादिः । अनुत्पन्नाच व्यक्तिरिति क्वावतिष्ठतामाकृतिः । नचोत्पाद्ये ऽप्यवतिष्ठते । तदेषा जातिरवतिष्ठते नावतिष्ठतेचेति सङ्कटमापतितम् । किञ्च व्यक्तेरभिन्ना भिन्नावोभयरूपावा जातिरास्थेया । तत्र नाभिन्ना । तथाभावे व्यक्त्या सहोत्पादे विनाशेवा स्वरूपापहारापत्तिरिति पुरस्तादुपन्यस्तं व्यक्तिमात्राङ्गीकारेच कोऽस्मत्पक्षस्य भेदइत्यपि चिन्तया ऽन्तः सीदन्तु बहवः । अतो व्यक्तिमात्रमेव तत्त्वमिति वदतां साहायकमेवाचरितमनतिरेकिणींजातिमुररीकुर्वाणैः । भिन्नत्वेऽपि पिण्डग्रहणमन्तरेण ग्रहणापत्तिरुभयप्रतीतौच सम्बन्धप्रतीतिसमासक्तिः । अस्त्येवेति चेत् । महदिदं वैयात्यं । कःखल्विह गवि गोत्वमिति मतिमभ्युपगच्छेदन्यत्र निरस्तत्रपायन्त्रणात् । भिन्नत्वेच वृत्तिप्रकारो दुर्निरूपएव । किं व्यासङ्गिनी वृत्तिरुत प्रत्येकपरिसमाप्तिमतीति । एकत्र परिसमाप्तावन्यत्र न वर्त्ततेति पुनरपि स्वरूपापहारः । अव्यासङ्गोऽपि कालत्रयवर्त्तिनीषु व्यक्तिष्वनुपपन्नएव। प्रत्येकंच गौरिति प्रत्ययो विकल्पमात्रमित्यङ्गीकृतं स्यात् । नचोभयरूपता विरोधात् । नचोपलम्भबलेन विरोधएव नास्तीति चतुरस्रं । तथाविधस्योपलम्भस्यैवासम्भावनीयत्वात् । अभिन्नाकारबुद्धिबोध्यंहि वस्त्वभिन्नमिति लौकिकाः । विलक्षणाकारबोधविषयश्च भिन्नं । तत्र यदि विलक्षणाकारप्रतीतिसमये द्वे वस्तुनी विलक्षणेनाकारेणावभातस्तदा ऽभेदप्रतीतिदशायामेक आकारो ऽनुभवनीयः । स जातिभागस्य पिण्डभागस्यवा तत्रैकद्विरवभासोऽयंस्यान्नतु जातिजातिमतोरभेदावभासः। अथ विलक्षणावप्याकारौ तादात्म्येनावसीयेते इतिमतं तत्रापि पर्यनुयोजनीयः किमिदं तादात्म्यंनामेति । यद्येकाकारतेति ब्रूयात् तर्हि पूर्वोक्तमेवदूषणमात्मसात्कृतं । शब्दयोः सामानाधिकरण्यं तादात्म्यमिति चेत् । अयुक्तमेतत् गौर्वाहीक इत्यादावतादात्म्येऽपि दर्शनात् । उपचारस्तत्रेति चेत् । अत्रापि भिन्नजातिवादिन उपचारमेव मन्यन्ते वयंतु विवक्षामात्रपरतन्त्राः शब्दा न वस्तुव्यवस्थापनायेशतइति सर्वत्र मन्यामहे । कथंतर्हि नानाभूतासु व्यक्तिषु बुद्धिरनुवृत्तमाकारमुल्लिखन्ती समुपजायते । तेनास्याएव बुद्धेर्द्रढिम्नः कारणमनुमास्यामहे अस्ति तद्विशेषणं यदुपरागवशेनेयमभिन्नाकारानुसन्धायिनी धीरुदीयतइति । तदपि न जातिसाधनसमर्थं । कार्यभूताहि बुद्धिरेषा कारणमाक्षिपन्ती यदनंतरमेवोपजायते तदेव कारणं कल्पयति न पुनरप्रतीतमपरमपि किञ्चिदुपस्थापयति । सा चेयं स्वलक्षणविषयदर्शनसमनन्तरभाविनीति ताएव व्यक्तयः स्वनिर्भासा बुद्धीरुपजनय्य तन्मुखेन तामेकाकारानुभासिनीं धियमाविर्भावयन्ति नितान्तभेदवतीनांच व्यक्तीनां कासाञ्चिदेव महिमा न सर्वासामिति किमनुपपन्नं । यथाह्यभिन्नाअपि चक्षुरालोकमनस्काराएव सामग्रीसमनुपतिता एकविज्ञानोदयलक्षणं कार्यमारभन्ते तथा व्यक्तयोऽपि किं नारभन्तइति नेदं प्रतिपत्तिकठिनं । साचेयं स्वाकारेणाभेदेनात्यन्तिकभेदयोगिनीनामपि व्यक्तीनामभेदं सम्पृञ्चन्ती सम्पृक्तिरित्यनुगीयते । एषाच मनीषा न स्वलक्षणं विषयीकरोति तस्य विशदावभासित्वात् । अस्याश्चाभिलापसंसर्गयोग्यार्थप्रतिभासत्वात् । अभिलापानांच विशदाकारमवभासितुमशक्तेः । अभिलापमात्रेण तथाविधप्रतिपत्त्यभावात् । तेनैषा न स्वच्छाकारावभासिनी । नन्वेतत् प्रतीतिपराहतमुदितं गौरयमितिबुद्धौ विशदावभासात् । उच्यते । न विशदावभासित्वमवजानीमहे तत्तु समानकालभाविनो निर्विकल्पकप्रत्ययस्य स्वलक्षणावलम्बिनः प्रसादात् । तदभावे तथात्वानुपलम्भात् । नचैतद्वाच्यमेकमेव वस्त्विन्द्रियैर्विशदाकारमनुभूयते शब्दैश्चाविशदावभासमिति भिद्यमानेऽपि बोधोपाये बोध्याभेदे बोधवैलक्षण्यानुपपत्तेः । नियताकारंच स्वलक्षणमनियतश्चाकारोऽस्यां बुद्धौ चकास्ति । तदेवं विशदाविशदतया नियतानियततयाच स्वलक्षणस्य विकल्पाकारस्यच भेदे सत्यपि विकल्पाः साक्षात्परम्परयावा स्वलक्षणविषयदर्शनप्रभवतया स्वलक्षणग्रहणाभिमानिनो जायन्ते ततएव तत्र प्रवर्त्तयन्तः पुरुषं व्यवहाराङ्गभावमनुभवन्ति पारम्पर्येण वस्तुनि प्रतिबन्धाद्वस्त्वपि प्रतिबद्धं भवति । मणिप्रभायां मणिबुद्धिवत् । यथाहिखलु मणिप्रभायां मणिधिषणायां मणिकिरणविषयिणी मणिबुद्धिरयथार्थतया भेदमजुषमाणापि मणिमनुप्रतिबद्धेति मणिसमधिगमनिमित्तं भवेत् । तथेयमपि वस्तुतः स्वलक्षणमगृह्णन्त्यपि स्वलक्षणाद्दर्शनं दर्शनतो विकल्पइति स्वलक्षणप्रतिबद्धासती तत्प्राप्तये प्रभवति । निर्विकल्पकप्रत्ययसमधिगतस्वलक्षणप्रापकतयाच स्मृतिरियमुच्यते । ततएवच गृहीतग्राहित्वादप्रमाणमन्यथा वस्तुविषयतया वस्तुप्रतिलम्भकतयाचानुमानमिव प्रमाणमेव स्यात् । सचायं तस्याकारः प्रथमानो न ज्ञान-

स्यैव बहिष्ट्वेनावभासात् । नचार्थगतएवोक्तेन न्यायेन निरस्तत्वात् । किन्त्वयमसन्नेव ज्ञानमनुभासते शब्दमिव प्रतिशब्दः । एतत्तु शास्त्रचिन्तका विवेचयन्ति प्रतिपत्तारस्तु दृश्यविकल्पावर्थावेकीकृत्य ताभ्यामेवानुमन्यमाना व्यवहारेषु प्रवर्त्तन्ते प्रवृत्ताश्चार्थप्रतिलम्भेनाविसंवादं मन्यन्ते । कथंपुनरेकत्वाध्यवसायो दृश्यविकल्पयोः । अतद्व्यावृत्ततया सदृशत्वात् । यथा दृश्यस्यातद्व्यावृत्तता तथा विकल्पस्यापि । तस्माज्जातिप्रत्ययो विकल्पमात्रं परमार्थतस्तु न जातिर्नाम किञ्चित् । अपिच द्रव्यसमवायिनी जातिरभिमता । नच गन्धादिव्यतिरिक्तं द्रव्यमुपलभामहे । चक्षुरादीनां प्रत्येकं रूपादिष्वेव व्यापारादिति पूर्वपक्षसङ्क्षेपः ॥ ॥ अत्रोच्यते ॥

संविदेवहि भगवती विषयसत्त्वावगमे शरणं । गवादिषुच स्थूलाकारावलम्बिनी बुद्धिरुदीयतइति निर्विवादं नयवीथ्यांच निर्णीतं प्रमाणं स्मृतिश्च प्रत्यय इति । ननु तद्वेवासदिति मन्यते । अवयव्यादीनामेकान्ततोऽनुपपन्नत्वात् । उच्यते । न दृष्टे काचिदनुपपत्तिः । ननूक्तावयविनोऽनुपपत्तिः । आरम्भकाभावात् । अनुपपन्नेयमनुपपत्तिः । कार्यं प्रतीतं कारणकल्पनायां प्रमाणं । न पुनः स्फुटाबाधितं कार्यं कारणानिरूपणायापन्हवमर्हति । तेनावयवाएव समासादितसंयोगलक्षणसाधारणगुणा अवयविन उत्पादका भविष्यन्ति संयोगश्चैकएवानेकत्र वर्त्तते । एकैकत्र संयुक्तप्रत्ययानुदयात् । एकातिरिक्तानेकाभावेऽप्येकएव स द्वितीय आश्रयः संयोगस्येति न दोषः । ननु द्रव्येएव तथोत्पन्ने संयोगविकल्पमाविर्भावयतो न तु तदतिरेकी संयोगोनाम कश्चिद्गुणविशेषः । तन्न । प्रत्यभिज्ञायेतेहि द्रव्ये अनुवृत्ते । कादाचित्कीच तयोरपरेयं दशा दृश्यतइति भवत्येव भेदसिद्धिः स्थापिता मीमांसाजीवरक्षायां प्रत्यभिज्ञा । अतः संयोगलक्षणसाधारणगुणासमवायिकारणोपगृहीता अवयवाएव समवायिकारणमवयविन उपपद्यन्ते यश्चायमवयविनो वृत्तिविकल्पे दोष उक्तः सोऽप्यवयविनः प्रतीतौ स्थितायामनुपपन्नः । व्यासक्त एकावयवेष्ववयवी नैकत्र जातिवत् परिसमाप्तः । अवयवांतरैरपिचविना स तस्य कोऽपि महिमा य एकएवानेकावयवानुस्यूत इति किं न कल्प्यते । यद्यपिचावयविन एकैकत्रावृत्तिस्तथापि नावृत्तिदोषः संयोगसचिवाएवावयवाजनकाएव आश्रयभूता यतः । जनकतयैवाश्रयत्वात् समवायिकारणानां । अतएवं संयोगः सद्वितीयाश्रयइति न दोषः । नच सकलावयवोपलम्भसापेक्षा तदुपलब्धिरवयविनस्तेभ्यो भिन्नत्वात् । नचैतावता एकावयवग्रहणमात्रेऽपि ग्रहणपर्यनुयोगो युक्तः । कार्यानुगुणत्वात् कारणकल्पनायाः । कार्यसिद्ध्यर्थंहि कारणं परिकल्प्यते न कार्यविनाशाय । तेन यावतामवयवानां ग्रहणे तदुपलम्भस्तावतामेवावगमस्तदवगमनिबन्धनमितिदर्शनबलेनाभ्युपेयते । भिन्नत्वेऽपि ततएव सहोपलम्भनियमः । उपेयोपायभावात् । उपेयभूतोऽवयवी उपायपदवर्त्तिनश्चावयवाः । प्रत्येकंतु तेषां शक्यतएवासहोपलम्भोऽपि वक्तुं । अवयवान्तरयोगिनोऽवयविनोऽपि परिग्रहे इतरावयवव्यतिरेकोऽपि सुदर्शएव । इयंच भेदसाधने युक्तिः । अन्वयव्यतिरेकाभ्यांहि वस्त्वंतरत्वमवसीयते । अवगम्यमानोऽपिचावयवी विलक्षणो बुद्धिगोचरतामाचरत्येव । अवयवीहि स्थवीयानेको हृदयमागच्छति । अवयवास्तु क्षोदीयांसो भूयांसश्च । सचायमवयवी महत्त्वाद्रूपवत्त्वाच्च चाक्षुषः स्पार्शनोवा । पार्थिवोवाम्भसीयोवा तैजसोवा । वायवीयस्तु महत्त्वात् स्पर्शवत्त्वाच्च स्पार्शनएव । द्व्यणुकस्तु चातुर्भौतिकोऽप्यमहत्त्वादप्रत्यक्षएव । तस्यचामहत्त्वमवयवबहुत्वमहत्त्वप्रचयविशेषाणां महिमगुणकारणानामभावात् । गगनादीनांतु महतामपि रूपस्पर्शविधुरतया न प्रत्यक्षगोचरतेत्यलमतिविस्तरेण ॥ ननु सकलावयवसमाश्रितत्वादवयविनस्तिरोहितैरवयवैःसहेन्द्रियासंनिकर्षे कथमवयविना समागमः । नचासङ्गतमेव बहिरिन्द्रियमवबोधकमिति प्रतिज्ञा युज्यते अवयवानामप्यसन्निकृष्टेन्द्रियबोध्यत्वापत्तेरिति । उक्तोत्तरमेतत् । भिन्नत्वादवयविनोऽवयवान्तरसंयोगेऽपि संयोगबुद्धेः पटादिषूपपन्नएवेन्द्रियसन्निकर्षोऽवयविनः । तदनया दिशा तावदुपपन्नमाश्रयद्रव्यमाकृतेः पृथुलम् । ननूक्तं रूपादिव्यतिरेकि द्रव्य नोपलभ्यतइति । किमिदं पश्यतोहरत्वं प्रतीयतेहि महानवयवी रूपादिव्यतिरेकी । अतएव जपाकुसुमसन्निधानाभिभूतरूपमपि स्फटिकद्रव्यं प्रत्यभिज्ञायेत । कथंनामागृहीतं प्रत्यभिज्ञायेत । अपिच दर्शनस्पर्शनाभ्यामेकार्थग्रहणाद्रूपस्पर्शव्यतिरेकि द्रव्यं स्फुटतरप्रतीतं नापन्होतुमुचितं । वनादिषु बाधकप्रत्ययबलेन कल्पनेयं प्रसरति दूरतयान्तरालाग्रहणनिबन्धनो ऽयमभेदग्रहव्यवहारः प्रवर्त्ततइति । अवयविनितु बाधकज्ञानं नास्तीति पुरस्तादावेदितम् । तेनाश्रयद्रव्याभावाज्जातेरपलापः प्रलापमात्रमिति स्थितम् । यच्चेदमुदितं नित्यतया जातेरात्मविज्ञानजननेऽपिन शक्तेति । तदपि क्षणभङ्गनिराकरणपर्वणि विस्तरेण नित्यानामप्यर्थक्रियाकारित्वसमर्थनेन प्रत्यूढं । मावा स्वविज्ञानमपिजातिर्जीजनत् तथापि कथङ्कारमसावप्रत्यक्षा । नखल्वियमाज्ञा राज्ञः कारणभूतएवप्रत्यक्षेण प्रचरितव्यमिति । यत्तु यतः प्रतीयते स तस्य विषयइति सार्वलौकिकम् । ननु प्रत्यक्षमप्यविसंवादादेव प्रमाणमविसंवादश्च तस्मादात्मलाभात् । अन्यतस्तु भवतो नित्यभूतस्यवा ऽभावेऽपि भावसम्भवान्नियमेन संवादायोगादिति बलादभ्युपेयं प्रत्यक्षस्य कारणमेव विषयइति । अतएवच प्रत्यक्षमनुमानंच द्वेएव प्रमाणे तयोरेवार्था-

विसंवादकत्वात् ॥ प्रत्यक्षं साक्षादर्थेन प्रतिबद्धमनुमानंत्वर्थप्रतिबद्धलिङ्गजन्मतया पारम्पर्येण प्रतिबद्धम् । यस्यतु न साक्षान्नापिपरम्परयाऽर्थप्रतिबन्धो न तस्य प्रामाण्यमुचितं तस्य तदर्थाविसंवादनियमाभावात् । अर्थाविसंवादिच प्रमाणं व्यवजिहीर्षमाणा लौकिका आद्रियन्ते । सिद्धोदयं मनोरथो यदि ज्ञानान्तरनिबन्धनो विसंवादः प्रार्थनीयः । यद्विषयमेवच यद् ज्ञानं तेनैव तस्मिन् विषये पर्युपस्थापिते नास्ति प्रत्ययान्तरनिबन्धनाविसंवादप्रार्थना । अर्थेनाप्रतिबद्धमपिच ज्ञानं स्वमहिमपर्युपस्थापितार्थमविसंवादकमेव संप्रवर्त्तते। तेनोत्पत्तिमात्रएव विज्ञानस्य परापेक्षा न प्रामाण्ये ऽर्थाविसंवादलक्षणे । अतः सिद्धं शास्त्रादीनामपि अर्थप्रतिबन्धविरहिणां प्रामाण्यम् । एतदर्थमेव नयवीथ्यां सर्वं ज्ञानं विषयाव्यभिचारीति प्रतिपादितम् । अतो नित्यायामपि जातौ भवत्येव प्रत्यक्षस्य प्रामाण्यम् । यत् पुनरुक्तमेकभावेन मनसा समाकलयतः कालाक्षौ स्वस्तिमतीवा नास्ति जातिप्रतीतिरिति । तदसिद्धम् । आकारोहि सा । प्रतीयतेचाकारो यदिपरमर्थान्तरानुसन्धानविकलतया तस्यानुवृत्तिर्नावसीयते । अनुवृत्ताच जातिर्नानुवृत्तिः । अग्रहणेऽपिच धर्मस्यधर्मिणो ग्रहणं नानुपपन्नम् । अतएवच पिण्डान्तरसमधिगमे पूर्वाकारपरामर्शिनी मनीषा प्रत्यभिज्ञासमाख्यातोदीयते । यच्चोक्तमनाश्रयतया तत्रैव प्रागनवस्थिता निष्क्रियतयाचान्यस्मादनागच्छंती स्वरूपहानिप्रसङ्गेन व्यक्त्यासहानुपजायमाना कथं सम्बन्धमनुभवति जातिरिति । तदिदं मायामोहजननं यथाजातजनोद्वेजनमात्रं । संयोगोह्युभयकर्मजो भवति मल्लयोरिव । अन्यतरकर्मजोवा स्थाणुश्येनयोरिव । संयोगजोवा यथातन्तुतुरीसंयोगादुत्पन्नमात्रस्य पटस्य तुरीसंयोगः । सच कर्म प्राक्सविधानंवापेक्षते समवायस्तु संयोगाद्विभिन्नो न कर्मवा तत्रवा प्राक्सत्तामपेक्षते । यतएवतु पिण्डस्योदयः समवायिकारणात् ततएव जातिसमवायोऽपि तस्य सम्पद्यते । समवायंच न वयं काश्यपीयाइव नित्यमुपेमः । विनष्टायामपि व्यक्तौ न जातिरन्यत्र याति नच तत्रावतिष्ठते नच विनश्यति केवलं तद्व्यक्तिसमवायस्तस्या निवर्त्तते । तेन तस्या अनुपलम्भनं तथाहि । न याति निष्क्रियत्वान्नावतिष्ठते व्यक्तिमात्राश्रयत्वात् तदभावे ऽवस्थानासम्भवात् । न विनश्यति पिण्डान्तरेऽपि प्रत्यभिज्ञायमानत्वादिति। विनाशोहिनामात्यन्तिकोऽनुपलम्भइत्यमृतकलायामुक्तम् । अतो न सङ्कटं किञ्चित् । यच्च पिण्डेभ्यो जातेरभिन्नत्वमुभयरूपत्वंच दूषितं तदस्माकं साहायकमेवाचरति कोहिनाम सचेतनः पदार्थान्तरप्रतिज्ञामभेदाश्रयणेन साधयेत् । कोवा परस्परविरोधिनी एकस्य द्वे रूपे प्रतिजानीते । भेदवादः पुनरस्माकमपि सम्मतएव । नच तत्रेहप्रत्ययापत्तिदोषः । प्रतीत्यह्याधारमाधेयंच सम्बद्धंच प्रतीयात् । सर्वंच रूपं रूपिग्रहणमन्तरेण न प्रतीयते ऽतो न समानेन्द्रियग्राह्यतया जातिरपि व्यक्तिप्रत्ययानुप्रवेशिनीति नेहप्रत्ययसम्भवः । कर्मणि त्वनुमेये भवत्येवेहप्रत्ययः । वृत्तिविकल्पेतु कृत्स्नसमाप्तिरेवाङ्गीकरणीया । नचान्यत्रावृत्तिदोषः प्रत्यक्षावगमाद्वृत्तेः प्रत्यभिज्ञायाः स्थापितत्वात् । पृथगग्रहणंतु जातेरसिद्धमेव । व्यक्त्यन्तरेहि जातिः प्रतीयमाना प्राच्यपिण्डपरिहारेण प्रकाशते । उदीच्यपरिहारस्तु प्राक्तनसमधिगमसमये सिद्धमेवेति परिहृतनिखिलानुपपत्तिकमुपपादितं गवादिषु साधारणाकारानुभवसिद्धं जातितत्त्वमुपपन्नं । प्रत्यक्षवेद्यत्वं जातेरिन्द्रियव्यापारानुविधानेन प्रतीतेः संयुक्तसमवायलक्षणश्च सन्निकर्षोऽपि नानुपपन्नः गौरयमितिच मतिर्विशदतरार्थनिर्भासिनी न शक्यते ऽपवदितुम् । समसमयसम्भवनिर्विकल्पकदर्शनबलेनेत्थमियं प्रथतइति तथाभावेप्रमाणाभावात् । शब्दमात्रेतु केवलाकारपरिगृहीताकारिप्रतीते रूपान्तरानवभासाच्चाविशदावभासः । ऐन्द्रियकेतु संवेदने प्रचुरतररूपावभासाद्विशदावगमइति नाबाह्यविषयत्वापत्तिः । नन्वेषा जातिप्रतीतिर्भिन्नामेव व्यक्तिमभेदेनावगमयन्ती जायतइति भ्रान्तिरेषा न प्रत्यक्षं प्रमाणं । इयंतु भ्रान्तिर्निर्बीजा न युज्यतइति बीजभावेन जातिरनुमीयते । तत्समवायश्च । दृष्टाहि सन्तापसञ्चारितदहनपरमाणुसंवलितायोगोलके दहनाकारानुकारिणी प्रतीतिरिति । तदिदमुक्तोत्तरमपि पुनः पर्यनुयोज्यामहे विस्मरणापराधादिति मन्यामहे । भिन्नाहि जातिरवगम्यते । न खल्वाकारमाकारिणंचैकमेव मन्यन्ते केवलं शब्दप्रयोगे समाधिर्वक्तव्यः । तत्रच लौकिकः प्रयोगएव शरणं । प्रयोगश्च श्रुत्या लक्षणया गौण्या वा वृत्त्या नानुपपन्नः । समवायस्तु भवतु वस्त्वन्तरं सिद्धे ऽनुमेयः प्रत्यक्षेण तदनवगमात् । आकृतिस्तु नप्रत्यक्षप्रमाणसिद्धा ऽनुमेया । नचानुमानमपि शक्यं शाक्येषु प्रतिबद्धेष्वित्यलमतिविस्तरेण । अत्रकेचिद्गवादितुल्यतया द्रव्यगुणकर्मस्वपि सत्ताजातिमङ्गीकुर्वन्ति भवतिहि सर्वेष्वेव सत्सदितिप्रत्ययानुवृत्तिरितिसंवदन्तः तदिदमपरामृष्टजातितत्त्वानामुपर्युपरिकल्पितं । पूर्वरूपानुकारिणी यदिधीरुदीयते ततो ऽभ्युपेयैतैव जातिः । नच नानाजातीयेषु द्रव्येषु सर्षपमहीधरादिषु गुणेषु गन्धरसादिषु समानाकारानुभवो भवति केवलंतु सत्सदिति शब्दमात्रमेव प्रयुज्यते । भवतिच विनापि जात्या याचकमीमांसकादिशब्दप्रवृत्तिः । नन्वेकशब्दप्रवृत्तिरपि नैकनिबन्धनमन्तरेणोपपद्यते । सत्यमस्त्येवोपाधिरेकः प्रमाणसम्बन्धयोग्यतानाम । तत्रान्यः पण्डितमन्यो मन्यते नन्विदमसमंजसमुच्यते । सर्वत्रह्युपाधिभेदमवगम्यौपाधिकशब्दानुविद्धः प्रत्ययो भवति

न पुनः प्रागेव सहवा । इहच प्रमाणमेवजायमानमस्तीत्येव जायते । प्रमाणोदयोत्तरकालंह्यनया भवितव्यम् । किञ्च सत्यपि प्रमाणयोगे किञ्चिदस्तीति गम्यते किञ्चिच्चासीदिति तथान्यद्भविष्यतीति । तत्र प्रमाणसम्बद्धस्यवर्त्तमानत्वात् सर्वत्र वर्त्तमानसत्ताप्रत्ययेन भवितव्यं । तदतिरेकिणितु सत्त्वे तस्य त्रेधा व्यवस्थानाद्युक्तस्त्रिधा ऽवभासः अपिच भूमितलनिखातेषु चिरतरकालवर्त्तिषु प्रलीनज्ञातृपुरुषेषु लिङ्गादिरहितेषु सकलप्रमाणप्रत्यस्तमयेऽपि वर्त्तमानसत्तासन्देहः । सच प्रमाणसम्बधातिरेकिणीं सत्तामन्तरेणानुपपन्नइति । तदिदमनाकलितपरवचनस्य केवलं गलगर्जितं । उक्तमस्माभिः प्रमाणसम्बन्धयोग्यतोपाधिः । यदिहि प्रमाणसम्बन्ध उपाधिरिति वदेम तत इत्थमुपालभ्येमह्यपि । योग्यतातु प्रमाणसम्बन्धातिरिक्ता प्रमाणेनावसीयतइति युक्तएवास्तीति प्रमाणोदयः । तस्याश्च त्रैकाल्यात्त्रैकाल्यावगमोऽपि समर्थितएव । तस्याश्चसंशयिततापि युक्तैव । कापुनरियं प्रमाणसम्बन्धयोग्यता नाम । ननु नामान्तरेण महासामान्यमेवेदमुररीकृतं । नैतदेवं योहि महासामान्यं सत्तां संगिरते सोऽपि स्वरूपमात्रं पदार्थानां मन्यतएव । अन्यथा शशविषाणादीनामनुत्पन्नातिवृत्तानांच किमिति महासामान्येन सम्बन्धएव नस्यादिति पर्यनुयोगे कः परिहारः । तेन स्वरूपवत्तैव प्रमाणसम्बन्धयोग्यता । यस्यहि स्वरूपमस्ति तत् प्रमाणेन परिच्छिद्यते । त्रैकाल्यमपि स्वरूपस्यैव युक्तं । नच महासामान्यस्य नित्यत्वात् । तथा संशयिततापि तस्यैव नपुनरसंशयिते स्वरूपे अपरः सत्तासन्देहो भवति । अथ नित्यायाअपि सत्तायाः सम्बन्धो यः स त्रिकालः । तस्यैव त्रैकाल्यं कुतः । नान्यदत्रोत्तरं स्वरूपत्रैकाल्यादित्यतः । तस्मात्स्वरूपसत्तोपाधिकएव सच्छब्दो नपुनरेक आकारः सत्तानाम द्रव्यगुणकर्मणां । अपिच काश्यपीयानां जातिसमवायविशेषेषु स्वरूपसत्तोपाधिकएव सच्छब्द इत्यभ्युपगमः । तस्यच द्रव्यगुणकर्मस्वपि तथाभावोऽस्तीति । तदेव मयाकृते पदार्थस्वरूपातिरेकिणि महासामान्ये सत्ताख्ये यत्स्वमनीषानिर्मितकुतर्कबलेन सन्मात्रविषयं प्रत्यक्षमितिसाधितं तदतिदूरोत्सारितं । एतेनैव न्यायेन शब्दत्वमपि निरस्तं वेदितव्यं नहि ककारगकारयोरेकमाकारमनुगतं परामृशन्ती मनीषा समुन्मिषति । योऽपिचायं शब्दशब्दः सोऽपि श्रोत्रग्रहणोपाधिबललब्धप्रवृत्तिरिति न जातु जातिकल्पनायै विभवति । तत इदमपहस्तितं । यदाहुः शब्दत्वमेव तत्तदभिव्यञ्जकध्वनिनिबन्धनया नानावर्णरूपया विषयीभवत् तस्यतस्यार्थस्यावगमाय कल्पतइति । अनयैवच दिशा ब्राह्मणत्वादिजातिरपि निवारिता नहि नानास्त्रीपुरुषव्यक्तिषु पुरुषत्वादर्थान्तरभूतमेकमाकारमात्मसात्कुर्वन्ती मतिराविर्भवति । नहि क्षत्रियादिभ्यो व्यावर्त्तमानं सकलब्राह्मणेष्वनुवर्त्तमानमेकमाकारमतिचिरमनुसंदधतोऽपि बुध्यन्ते । यदप्याहुः यद्यप्यापातसंजातयाधिया ब्राह्मण्यं नावसीयते तथापि ब्राह्मणभूतमातापितृसम्बन्धानुसन्धानप्रभवायां बुद्धौ तच्चकास्तीति । तदपिच स्वमानसविसंवादि । अनुसन्दधानोऽपि मातापितृसम्बन्धं को जात्वेकमाकारमवबोद्धुं प्रभवति । यच्चोपदर्शितं यथा विलीनमाज्यं तैलादव्यतिरिच्यमानं गन्धग्रहणसहकारिणा चक्षुषैव भिन्नमवगम्यतइति । तदपि न सुंदरं नहि तदानीं चाक्षुषस्य संवेदनस्य विषयातिरेकः किन्त्वनुमानमेवं तत्र सर्पिषो यस्तु निपुणदर्शी सूक्ष्ममपि रूपमीक्षितुं क्षमः स चक्षुषैवाज्यजातिमपि प्रत्येति । न गन्धग्रहणमपेक्षते । नन्वेवं बहूवहीनं किंनिबन्धनोहि तदानीमाहवनीयादिसाध्यकर्मसु केषांचिदधिकारो नान्येषाम् । किंनिबन्धनाच ब्राह्मणशब्दस्य प्रवृत्तिव्यवस्था । अत्रोच्यते अनादौ संसारे जन्यजनकभावेन व्यवस्थितास्तावत् काश्चिदेव पुरुषसन्ततयः सन्ति तासामन्योन्यव्यतिरेकजाताः स्त्रीपुंसव्यक्तयो ब्राह्मणशब्दवाच्याः । अनिदम्प्रथमतयाच सन्ततेः सर्वेषां तत्सन्ततिपतितत्वात् सिद्धा ब्राह्मणशब्दवाच्यता । तेन सन्ततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः । तत्प्रभवानामेव कर्मस्वधिकारइति न किंचिदवहीनं केपुनस्तेसन्ततिविशेषाः । न ते परिगणय्य निर्देष्टुं शक्यन्ते किन्तु लोकतएव प्रसिद्धाः प्रत्येतव्याः । तथाच तज्जन्यत्वेऽवगते ब्राह्मणशब्दं प्रयुञ्जते लोकाः । कथंपुनस्तज्जन्यत्वमेव शक्यमवगन्तुं स्त्रीणामपराधसम्भवात् । सम्भवन्तिहि पुंश्चल्योऽपि स्त्रियः परिणेतारं व्यभिचरन्त्यः । उच्यते उक्तमेतद् दृश्यादर्शनमेवाभावइति । यत्र यावदुपलब्धिसामग्री तावत्यां सत्यामपि यासां व्यभिचारो न दृश्यते तासां नास्त्येव व्यभिचारइति लोकप्रमाणकमेतत् । अपिच अप्रमत्तैः स्त्रियो रक्षणीयास्तासु नास्त्येव व्यभिचारसम्भावनावकाशो यासुत्वस्ति माभूत् तदपत्येषु तत्सन्ततिप्रभवत्वनिश्चयः । नचैतावता यत्रापि निश्चयः शक्यस्तत्राप्यनिश्चयइति युक्तमिति । यच्च वह्नीषु ज्वालास्वेकवर्त्तिवर्त्तिनीषु ज्वालात्वं सामान्यं प्रत्यभिज्ञागोचरः कैश्चिदिष्यते तदपि गुरुरस्माकं न मृष्यति । सखल्वेवं निरीक्षाञ्चक्रे अनन्यथासिद्धा बुद्धिः सामान्यकल्पनाबीजं । इयंतु भेदाग्रहणेन शुक्तिकारजतप्रत्ययवदुपपद्यतइति नालं सामान्यमुपस्थापयितुं । तेन भेदग्रहणपुरस्सरमभेदज्ञानं भिन्नेषु जात्यभ्युपगमे शरणमिति निरवद्यम् ॥ * ॥

शालिकनाथेन कृतं कृतमतिना जातिनिर्णयाख्यमिदं ॥
बहुविधविवादहरणं प्रकरणमुरुणावधानेन ॥ ३ ॥

इति शालिकनाथमिश्रकृतौ जातिनिर्णयाख्यं प्रकरणं तृतीयम् ॥ ३ ॥

## ON THE NYÁYA SYSTEM OF PHILOSOPHY, AND THE CORRESPONDENCE OF ITS DIVISIONS WITH THOSE OF MODERN SCIENCE.

PROBABLY no one of our readers requires to be told, that the three leading schools of Indian philosophy are the *Vedánta*, the *Sánkhya*, and the *Nyáya*. The first is an attempt to deduce a philosophical theory of the universe from the doctrines of the *Vedas*. Its conclusion is, the non-existence of anything besides God. The second is an attempt to account for the universe without the supposition of Deity at all. It keeps up for a long time a not very definite antithesis between Soul and Nature, and ends in a way which tasks all the ingenuity of its advocates to avoid the conclusion that the author of the system believed in the existence of neither the one nor the other. The third is not so mystical as the *Vedánta*, nor so fanciful as the *Sánkhya*; and, though mystical and fanciful enough, yet possesses a scientific character. This, we think, may be turned to useful account; and, with the view of showing how, we have proposed here to attempt to determine what correspondence may exist between its divisions and those of modern Science, Incidentally, we shall have occasion to vindicate the Hindú syllogism from some undeserved reproach, and also to decline for it some undeserved commendation.

One undeserved reproach that the whole system has met with, originated, we think, in the practice of calling the *Nyáya* the "Hindú logic," under which character it cannot but be regarded as meddling with a great variety of irrelevant matters. But, if we bear in mind that it is an attempt to account for the universe, we must be aware that nothing whatever can lie beyond the province of which it legitimately takes cognizance. The word *nyáya*, signifying "propriety, fitness, good government," is derived from a verb signifying, "to go," combined with a preposition signifying "in." We are not prepared to decide how far this ("going in" a right way) may answer to the μέθοδος of the Greek; but we entertain no doubt that the proper way in which to regard the *Nyáya*, is in the light of what Harris calls, a "Philosophical Arrangement." It is an attempt to treat "de omnibus rebus," or "de omni scibili," in some such well-ordered fashion as Coleridge inculcates the value of in his dissertation on "Method," prefixed to the *Encyclopedia Metropolitana*, the compilation of which his suggestion led to.

For information respecting the writers on the *Nyáya*, and other particulars not bearing upon our present design, the reader can consult Mr. Colebrooke's celebrated discourse published in the Transactions of the Royal Asiatic Society, vol. i. p. 92—118, and re-published in the first volume of his "Miscellaneous Essays." The founder of the system, the inspired sage *Gautama*, left a collection of succinct aphorisms in five books. With the intention, apparently, rather of supplying what was incomplete in this exposition, than of disputing it, *Kanáda* put forth another collection of similar aphorisms.—It is with *Kanáda's* arrangement chiefly that we are at present concerned.—In Bengal, we believe the student usually makes his first acquaintanee with *Kanáda's* views in the pages of the *Bháshá-parichheda*, a work of *Viśwanáth Panchánana Bhatta*, which, along with its commentary, the *Sidhánta-muktávali* of the same author, was published in Calcutta, under the authority of the Committee of Public Instruction, with the somewhat inappropriate English title of "An Elementary treatise on the terms of Logic."—A simpler compendium is the *Tarka-sangraha* of *Annam Bhatta*, which contains nearly all that we shall have occasion to refer to at present.

Our author begins with an enumeration of the Categories, or most general heads, under one or other of which every name current in the world is capable of being classed. These are enumerated as follows :—"Substance *(dravya)*, Quality *(guna)*, Action *(karmma)*, Community *(sámánya)*, Difference *(viśesha)*, Intimate or material Relation *(samáváya)*, and Non-existence *(abháva)*." These seven our text-book designates by the term *padártha*, which, in ordinary language, means "a thing." We shall not stay to enquire at present how far this popular application of the word may have served to give the system an appearance of being more decidedly Realistic than in fact it is. Neither shall we stay to enquire whether *Kanáda's* Categories exhaust the matter of nomenclature, or whether they sub-divide it in the most unexceptionable fashion. These are enquiries to which we may address ourselves some other time, but they are beside the business in hand. We ourselves, though we doubt whether the pandits will agree with us, take the term *padártha* to have been used by *Kanáda* in its etymological sense *(padasya artha)* to signify "that which is meant by a word;" and of course the meaning of every word that is a common term must be comprised under one or other of the categories which constitute a correct division of Names.

The first of the Categories, *viz.*, Substance, is subdivided into the nine following; *viz.*, "Earth, Water Light, Air, Ether, Time, Space, Soul, and Mind." Before sub-dividing these further, our text-book proceeds.

* From the pen of the lamented Dr. BALLANTYNE: reprinted from the extinct BENARES MAGAZINE, Vol. I. 1849.

to sub-divide the second category, *viz.*, Quality, of which there are reckoned twenty-four species; *viz.*, "Colour, savour, odour, feel, number, quantity, individuality, conjunction, disjunction, priority, posteriority, gravity, fluidity, viscidity, sound, intelligence, pleasure, pain, desire, aversion, volition, virtue, vice and faculty." The third category, *viz.*, Action, is sub-divided into "Casting upward, casting downward, contraction, dilatation, and going on.". The fourth category, *viz.*, Community, is divided into "the higher and the lower." These bear to each other the relation of genus and species. The Differences, which make up the fifth category, are stated to be endless. The sixth category, or Intimate Relation, such as that between a jar and the clay of which it is formed, is of only one kind. The last category, Non-existence, is split into four kinds, *viz.*, antecedent non-existence, (or the state of anything before it began to be); emergent non-existence (or the state of anything after it has ceased to be); absolute non-existence; and mutual non-existence, or difference.

Having thus advanced a step in the subdivision of each category, our text-book reverts to the first of them, and proceeds to sub-divide Earth. This is stated to be of two kinds, "Eternal, and Transient—Eternal in the form of Atoms, Transient in the form of Products." The same sub-division is made of Water, Light, and Air. Taking these together, we arrive here at one of the points beyond which the Hindú mind has not satisfactorily advanced. The division of matter into Atom and Mass, provided nothing be assumed in regard to atoms that has not been fairly established, is a convenient one; and the division corresponds with the modern division of physical science into the Chemical and the non-Chemical. This, then, we note as the first point in the system at which we can distinctly and intelligibly acquaint the learned Hindú with one of our own marked scientific divisions. Matter, not in the form of atoms, is sub-divided into "organized body, organs of sense, and inorganic mass." As regards the fanciful notion that the organs of sense are formed of the matter of the supposed elements, the reader can consult Professor H. H. Wilson's edition of the *Sánkhya Káriká*, p. 122. Of organized bodies we must necessarily ignore those which, to complete the system, the *Nyáya*, like Paracelsus, feigns the existence of—fiery in the solar realms—aqueous in those of Neptune—and aerial in the shape of goblins. But we agree with the Hindús that animals and plants have organized bodies, the difference between the two being in general sufficiently well marked by their own criterion, the presence or absence of the power of locomotion. Here then, in the *Nyáya* arrangement, is the place for Zoology and Botany, descriptive, anatomical, and physiological. Again, when the unorganized products of matter are spoken of, we come to the consideration of the globe itself, which may be considered superficially, substantially, or as a unit in a larger system. Here then we place Geography, Geology, and Astronomy.—Leaving Ether as we find it, and passing over Time and Space, which metaphysicians in general are puzzled whether to regard as mere fictitious non-entities, or as the only entities in their own right—seeing that this "par nobile fratrum" must necessarily remain even were all else to be annihilated, we come to Soul, which our text-book defines as "the receptacle of knowledge." This is divided into two—God, the Supreme Soul, unconnected with pain or pleasure; and the soul of living creatures, of which there is one to each body, distinct and eternal.—Here we may place Theology, and also Mental Philosophy, for the next topic that presents itself is the Mind, which our text-book regards as the "organ of the soul."—Into the pertinency of the definition we are not now going to enquire.

Our text-book, having disposed, for the present, of the category of Substance, now reverts to that of Quality. Of the qualities, those cognizable by the senses, and considered as phenomena existing only in as much as they are perceived, can be best disposed of when the senses themselves are under consideration. Considered objectively as the causes, in posse, of phenomena, they come under another division—that of Motion or Action, where we place Mechanics in its widest acceptation.

The citation of the Qualities of Number and Quantity, fixes, in the system, the place of the corresponding sciences, on which we need not dwell.

As the objective qualities (or causes of sensation), Colour &c., belong to the division of Motion, so the qualities of Intelligence, Memory and the like, must be remitted to the division in which we placed Mental Philosophy; and from that division would branch out the department of Ethics, private and public, occupying itself about the qualities "Volition, Virtue, Vice," &c.

Under the head of Intelligence our text-book treats of Cause and Effect, in terms directly answering to those of Aristotle, and of course readily resolvable into the simpler language of modern philosophy. Under the same head it treats largely of Inference, which as we have already remarked, appears to have been too generally regarded as the only province with which the *Nyáya* was legitimately concerned.

Deduction (*anumána*) is defined as the efficient cause of an inference or conclusion (*anumiti*). "An inference (*anumiti*)," our text-book goes on to say, "is knowledge "produced from a logical datum (*parámarśa*). The "logical datum consists of the knowledge of a general

"principle combined with the knowledge that the case in "question is one to which it is applicable (*vyápti-visish-"ta-pakshadharmatá-jnyána.*) For example, the know-"ledge that 'This hill is characterized by invariably-fire-"attended smoke' is a logical datum, the knowledge pro-"duced from which, *viz.* that 'The hill is fiery,' is an "inference."

Now, in this form of the syllogism (which we do not find alluded to in Mr. Colebrooke's essay,) there is neither more nor less than there is in the Aristotelic syllogism. The wonder would have been if there had. The first formal difference observable, is the wrapping up of the premises in one logical datum. The reason for preferring to regard these as two inseparable members of a single statement appears to be this, that it is only when simultaneously present to the mind, that the premises suggest the inference; and this simultaneousness of cognizance is secured by combining the two assertions in a period, or sentence, of which the whole becomes intelligible only when the last word in it has been uttered. It might appear that such a form of statement is not the most convenient for enabling an objector to declare which part of it his objection applies to:—but this, were it granted, does not matter—for we shall find that the *Naiyáyikas* have another way of arranging their argument, when it is to be brought under the consideration of another person. If we separate the two members of the logical datum in the example above-cited, we obtain the following:—

"Whatever smokes is fiery:
The hill smokes:
Therefore the hill is fiery."

Another formal difference that requires to be noticed is the fact, that whilst the European logic employs a phraseology founded on classification, the *Nayáya,* in testing the validity of an argument, operates by means of the terms on which a classification would be based. The former infers that "Kings are mortal," because kings are men—a class of beings who are mortal. The latter arrives at the same inference by means of the consideration that mortality is inherent in humanity and humanity in kings. We shall not here enquire how far the habitual employment of abstract terms as the fonudations of all truth, may help to foster Realistic notions. What we wish to impress in regard to this is, the necessity (if both parties wish to understand each other) of acquiring readiness and dexterity in transforming the one phraseology into the other,—for, a person habituated to the one form, finds the other at first both repulsive and perplexing, because the rules which he has previously been accustomed to trust to, do not apply directly to the form of expression propunded, and are of no use to him till he has got the matter into the shape in which it might have been advantageously presented to him at the outset. The European logician will have no difficulty in bringing to the test of his own rules a statement presented to him in any intelligible shape by a pandit or any one else, but he will place a needless obstacle in the way of his own argument, if he leaves to a pandit the task of doing the same thing for himself.

Here then is the place, in the *Nyáya* system, to be allotted to Deductive Logic, and also to the process of Induction, which is indicated, in the above-quoted definition of the logical datum, by the term *vyápti,* a term importing the invariable attendance of a given property on its ascertained sign.

In regard to the import of a proposition which the logic of Europe calls a Universal Affirmative, such as "All men are mortal," the *Naiyáyika* would say that there is pervading inherence *(vyápti)* of mortality in humanity—and he would state the proposition thus:—"Where there is humanity, there is mortality." In elucidation of two other terms connected with the important question of *vyápti-nischaya,* (or the "ascertainment of pervading inherence" as we would propose to render the term Induction,) we may remark that, in a Universal Affirmative, the predicate, or major term, connotes the "pervader" *(vyápaka)* or invariable concomitant of the characteristic connoted by the subject, or minor term, which is "pervaded" *(vyápya)* by it. The term *paksha,* quoted a little way back, means the subject, or minor term, of the conclusion; and the compound word of which it forms a part, *paksha-dharmatá,* means "the possession of the character which entitles its possessor to the subject of the conclusion"—the condition of a mountain, for instance, in so far as the *vyápya,* or characteristic connoted by the subject of the major premiss, *viz.,* the characteristic "smoke," belongs to the mountain, which is thereby entitled to be the subject of the conclusion. In the language of European logic, it is the agreement of the minor term of the syllogism with the middle term.

The expression "vyáptivisishta-pakshadharmatá-jnyánam" corresponds to the Aristotelic "dictum de omni et nullo," for it tells us that the knowledge constituting an inference results from the knowledge that the subject of the proposition to be proved possesses a characteristic which is invariably accompanied by the property the presence of which in the subject we wish to establish. This is tantamount to saying, in terms of the classificatory view, that "what may be asserted of every individual in a class, may be asserted of any individual which can be ascertained to belong to the class"—things being spoken of as belonging to a class for no other reason.

than their possessing a common characteristic. The statement of the *Nyáya* includes the "dictum de nullo," because the absence *(abháva)* of a characteristic is reckoned as itself a characteristic.

Of the process of Induction our text-book gives the following account. "Having repeatedly observed, in "the case of culinary hearths and the like, that where "there is smoke there is fire, *having assumed that the "concomitancy is invariable,*" and so on :—but we may as well let out author finish his sentence—"having "gone near a mountain, and being doubtful as to whe-"ther there is fire in it, having seen smoke on the "mountain, one *recollects* the invariable concomitancy "of fire where there is smoke."—This *recollection* of a previously established general principle, belongs to the same place in the logical system as the Enthymeme. The un-expressed premiss is held by the Greek to be "in the mind," by the Hindú "in the memory."

The arrival at a conclusion in the manner above described is said to be a process of "Inference for one's *(swárthánumána)*—and this is all that belongs to European Logic, even when the term is taken in the extended sense preferred by Mr. J. S, Mill, so as to include the process of Induction.

Injustice has been done to the *Nyáya* system by treating as its Logic what is in reality its Rhetoric. This we shall proceed to explain, after having shown where *Gautama* and *Kanáda* stopped short in their analysis of the reasoning process, whilst Aristotle took the further step of separating the matter of the syllogism from the form of it, and showing that the latter can be made the subject of a science as abstract and as certain as Arithmetic. And what wonder is it that the Hindu mind did not take this magnificent stride, when the European mind (in the bulk of the individual minds that go to make up its aggregate) has positively slid back from the point that had been thus attained?

*(to be continued.)*

## PROPOSED EDITION OF SANSKRIT CLASSICS.

The following letter has been addressed to the Director of Public Instruction (Bombay) by Professors Bühler and Kielhorn. We beg to invite the attention of scholars to the rules suggested by them for the editing of Sanskrit texts.

To Sir Alexander Grant, Bart.,
Director of Public Instruction, Bombay.

Sir,—Since the establishment of a regular course of Sanskrit studies in connection with the Indian Universities the urgent want of correct and cheap editions of the Sanskrit Classics, made in harmony with the principles of modern philology, has been felt both by the professors and by the students of the Indian High Schools and Colleges. Some attempts to supply this want have been made in Calcutta, at the suggestion and under the supervision of Professor Cowell. But, unfortunately, they have heen interrupted by Professor Cowell's departure from India, and the editions published extend over a very small part of the field of Sanskrit classical literature.

2. Considering the great interests at stake, it seems to us highly desirable that a new attempt be made to produce a series of class-books for the study of the Sanskrit language. We beg, therefore, to submit to you the annexed plan for the publication of a collection of Sanskrit Classics for the use of Indian High Schools and Colleges. The principles of our plan are partly in accordance with those followed by Professor Cowell, but we trust that we have succeeded in adapting it still more to the requirements of modern criticism, and in making the books more generally serviceable for Anglo-Indian education by the addition of English notes, introductions and collections of *variæ lectiones.*

3. We beg to point out also that, besides its value for practical instruction, the publication of a series of critical editions of Sanskrit Classics may be made a palæstra for the young native Sanskritists, by inviting their co-operation, and thus may serve to realize the high aims of Indian University education.

4. In order to ensure a greater stability for the undertaking, and to remove the material difficulties which authors in India have to battle with, we humbly beg to suggest that the "collection" be made a departmental undertaking, under the conditions specified in our plan.

We trust that, though no doubt a considerable outlay will be required at the beginning, there will eventually be no actual loss of money, especially if you should see fit to invite the assistance of the Directors of Public Instruction in other parts of India.

We have the honour to be, &c.,

G. BUHLER,
F. KIELHORN

### A Plan for the Publication of a Collection of Sanskrit Classics for the Use of Indian High Schools and Colleges.

*I.—Works to be included in the collection of Sanskrit Classics.—*

1. Kálidása's Raghuvansa.
2. Kálidása's Vikramorvaśí.
3. Kálidása's Kumárasambhava.

4. Kálidása's Ritusamhára.
5. Kálidása's Malavikágnimitra.
6. Kálidása's Nalodaya.
7. Bhartrihari's Sentences.
8. Panchatantra.
9. Viśákhadatta's Mudrárákshasa.
10. Ratnávali.
11. Bhavabhúti's Málatímádhava.
12. Veṇísamhára.
13. Kirátárjuníya.
14. Mágha's Śiśupálavadha.
15. Daṇḍin's Daśakumáracharita.
16. Bánabhaṭṭa's Kádambarí.

Other works to be added if it seem advisable on further consideration.

*II.—Rules for editing the texts :—*

(1.) Works for which commentaries are obtainable are to be edited with the commentaries, or with verbal extracts from the same.

(2.) If more than one commentary exist, the oldest is to be chosen for edition, and, if possible, that redaction of it which is current in Western India.

(3.) The texts of the works are to be printed in strict conformity with the readings given by the commentaries.

(4.) The texts of works for which no commentary is procurable are to be based on manuscripts which give the same redaction. But, if it seems absolutely necessary, corrections from other redactions may be introduced.

(5.) A description of the manuscripts on which the edition is based, the chief *variæ lectiones* contained in them, and corrections of the text made by the editor, are to be given in a separate appendix at the end of each work.

*III.—Orthography :—*

(1.) The strictest attention is to be paid to the rules of Sanskrit orthography as laid down by Páṇini. In optional cases one principle is to be followed throughout the whole book.

(2.) Special rules of Orthography :

(*a.*) It shall not be allowable to use the Anusvára instead of the nasals in the interior of simple words, or of a final dental *n* ; *e.g.*, write अङ्ग not अंग ; सिञ्चति, not सिंचति.

(*b.*) It shall not be allowable to use the Anusvára instead of a final म् (*m*) at the end of a sentence or verse, or before vowels.

(*c.*) It shall not be allowable to use the Avagraha (ऽ).

(*d.*) It shall not be allowable to use European stops.

(*e.*) The words of a sentence or hemistich shall be written continuously only so far as it is made indispensable by the laws of Sandhi ; *e.g.* आसीद्राजा नलो नाम वीरसेनसुतो बली.

*IV.—Notes :—*

Short notes in English shall be added at the end of each book or fascicle, elucidating difficult points of grammar or construction, incidental questions regarding geography, history, mythology, philosophy, &c., and containing explanations of the metres, together with references to sources of fuller information.

*V.—Introduction :—*

An introduction is to be prefixed to each work or its first fascicle, detailing briefly the life of the author of the work, its position in literature, and giving a short summary of its contents.

*VI.—Form of the books :—*

(1.) Each work to be printed in octavo.

(2.) Each work may be published in fascicles with reference to the regulations of the Bombay University.

*VII.—Publication :—*

(1.) The expenses of printing to be borne by the Educational Department, and the copyright to vest in the Director of Public Instruction.

(2) The editors to be remunerated at the rate of Rs. 30 per sheet of sixteen pages octavo, from which sum the editors are to defray the expenses of buying, copying, or collecting manuscripts.

(3) The publication of the books to be placed under the supervision of the Professors of Sanskrit at the Elphinstone and Poona Colleges, who will invite Native Sanskrit scholars to join the undertaking.

G. BÜHLER,
F. KIELHORN.

*Bombay Educational Record Vol. II. No. 5., May 1866.*

The Pandit.

The PANDIT may be ordered of the Publishers, Medical Hall Press, Benares ; or through MESSRS TRÜBNER and Co. LONDON.

*Annual subscription, in advance, including postage, Indian and English, Rs.* 12-0-0 *per annum.*

PRINTED AND PUBLISHED BY E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

The object of the *Pandit* is to publish rare Sanskrit works which appear worthy of careful editing hereafter: to offer a field for the discussion of controverted points in Old Indian Philosophy, Philology, History and Literature: to communicate ideas between the Aryan scholars of the East and of the West; between the Pandits of Benares and Calcutta and the Sanskritists of the Universities of Europe.

The Journal, which will be enlarged as soon as the subscriptions cover the actual expenses of publication, will contain also original articles in Sanskrit and English, critical notices of new Sanskrit books, and translations from and into Sanskrit.

Communications of a literary nature should be addressed to the Editor of the Pandit, Queen's College, Benares.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 3. Benares August 1st, 1866. Vol. I.


तथाविधे ऽनङ्गरसप्रसङ्गे
मुखारविन्दे मधुपः प्रियायाः ।
सम्भोगवेश्म प्रविशन्तमन्त-
र्ददर्श पारावतमेकमीशः ॥ १ ॥

सुकान्तकान्तामणितानुकारं
कूजन्तमाघूर्णितरक्तनेत्रम् ।
प्रस्फारितोन्नम्रविनम्रकण्ठं
मुहुर्मुहुर्न्नर्त्तितचारुपुच्छम् ॥ २ ॥

विशंखलं पक्षतियुग्ममीष-
द्दधानमानन्दगतं मदेन ।
शुभ्रांशुवर्णं जटिलाग्रपाद-
मितस्ततो मण्डलकैश्चरन्तम् ॥ ३ ॥

॥ त्रिभिर्विशेषकम् ॥

रतिद्वितीयेन मनोभवेन
ह्रदात् सुधायाः प्रविगाह्यमानात् ।
तं वीक्ष्य फेनस्य चयं नवोत्थ-
मिवाभ्यनन्दत् क्षणमिन्दुमौलिः ॥ ४ ॥

तस्याकृतिं कामपि वीक्ष्य दिव्या-
मन्तर्भवच्छद्मविहङ्गमग्निम् ।
विचिन्तयन् संविविदे स देवो
भ्रूभङ्गभीमश्च रुषा बभूव ॥ ५ ॥

स्वरूपमास्थाय ततो हुताश-
स्त्रासस्खलत्कंप्रकृताञ्जलिः सन् ।
प्रवेपमानो ऽतितरां स्मरारि-
मिदं वचो व्यक्तमथाभ्युवाच ॥ ६ ॥

असि त्वमेको जगतामधीशः
स्वर्गौकसां त्वं विपदो निहंसि ।
अतः सुरेन्द्रप्रमुखाः प्रभो त्वा-
मुपासते दैत्यवरैर्विधूताः ॥ ७ ॥

त्वया प्रियाप्रेमवशंवदेन
शतं व्यतीये ऽत्रभवन्नृतूनाम् ।
रहःस्थितेन त्वदनीक्षणेन
दैन्यं परं प्राप सुरैः सुरेन्द्रः ॥ ८ ॥

त्वदीयसेवावसरप्रतीक्षै-
रभ्यर्थितः शक्रमुखैः सुरैस्त्वाम् ।
उपागतो ऽन्वेष्टुमहं विहङ्ग-
रूपेण विद्वन् समयोचितेन ॥ ९ ॥

इति प्रभो चेतसि संप्रधार्य्य
तं नो ऽपराधं भगवन् क्षमस्व ।
पराभिभूता वद किं क्षमन्ते
कालातिपातं शरणार्थिनोऽमी ॥ १० ॥

प्रभो प्रसीदाथ सृजाशु पुत्रं
यं प्राप्य सेनान्यमसौ सुरेन्द्रः ।
स्वर्गैकलक्ष्मीप्रभुतामवाप्य
जगत्त्रयं पाति तव प्रसादात् ॥ ११ ॥

स शङ्करस्तामिति जातवेदो-
विज्ञापनामर्थवतीं निशम्य ।
अभूत् प्रसन्नः परितोषयन्ति
गीर्भिर्गिरीशा रुचिराभिरीशम् ॥ १२ ॥

प्रसन्नचेता मदनान्तकारः

स तारकारेर्जयिनो भवाय ।
शक्रस्य सेनाधिपतेर्जयाय
व्यचिन्तयच्चेतसि भावि किञ्चित् ॥ १३ ॥
युगान्तकालाग्निमिवाविषह्यं
परिच्युतं मन्मथरङ्गभङ्गात् ।
रतान्तरेतः स हिरण्यरेत-
स्यथोर्द्ध्वरेतास्तदमोघमाधात् ॥ १४ ॥
अथोष्णबाष्पानिलदूषितान्तं
विशुद्धमादर्शमिवात्मदेहम् ।
बभार भूम्ना सहसा पुरारि-
रेतःपरिक्षेपविवर्णमग्निः ॥ १५ ॥
त्वं सर्वभक्षो भव भीमकर्म्मा
कुष्ठाभिभूतो ऽनल धूमगर्भः ।
इत्थं शशापाद्रिसुता हुताशं
तयारतानन्दसुखस्य भङ्गात् ॥ १६ ॥
दक्षस्य शापेन शशी क्षयीव
प्रुषो हिमेनेव सरोजकोशः ।
वहन् विरूपं वपुरुग्ररेत-
श्चयेन वह्निः किल निर्जगाम ॥ १७ ॥
स पावकालोकनतो विलक्षां
स्मरत्रपास्मेरविनम्रवक्राम् ।
विनोदयामास गिरीन्द्रपुत्रीं
शृङ्गारगर्भैर्मधुरैर्वचोभिः ॥ १८ ॥
हरो विकीर्णं घनघर्मतोयै-
र्नेत्रांजनाङ्कं सदयं प्रियायाः ।
द्वितीयकौपीनचलाञ्चलेन
हरन्मुखेन्दोरकलङ्किनो ऽस्याः ॥ १९ ॥
मन्देन खिन्नाङ्गुलिना करेण
कम्प्रेण तस्या वदनारविन्दात् ।
परामृशन् घर्मजलं जहार
हरः सहेलं व्यजनानिलेन ॥ २० ॥
॥ युग्मम् ॥
रतिश्लथं तत्कबरीकलाप-
मंसावसक्तं विगलत्प्रसूनम्
स पारिजातोद्भवपुष्पमय्या
स्रजा बबन्धामृतमूर्त्तिमौलिः ॥ २१ ॥
कपोलपाल्यां मृगनाभिचित्र-
पत्रावलीमिन्दुमुखः सुमुख्याः ।
स्मरस्य सिद्धस्य जगद्विमोह-
मन्त्राक्षरश्रेणिमिवोल्लिलेख ॥ २२ ॥
रथस्य कर्णाविभि तन्मुखस्य
ताटङ्कचक्रद्वितयं न्यधात् सः ।
जगज्जिगीषुर्विषमेषुरेष
ध्रुवं यमारोहति पुष्पचापः ॥ २३ ॥
तस्याः स कण्ठे ऽभिघनस्तनं यां
न्यधत्त मुक्ताफलहारवल्लीम् ।
सा प्राप मेरुद्वितयस्य मूर्ध्नि
स्थितस्य गङ्गौघयुगस्य लक्ष्मीम् ॥ २४ ॥
नखव्रणश्रेणिधरे बबन्ध
नितम्बबिम्बे रसनाकलापम् ।
चलत्स्वचेतोमृगबन्धनाय
मनोभुवः पाशमिव स्मरारिः ॥ २५ ॥
भालेक्षणाग्नौ स्वयमञ्जनं स
न्यक्त्वा दृशोः साधु निवेश्य तस्याः ।
नवोत्पलाढ्याः पुलकोपगूढः
कण्ठे विनीले ऽङ्गुलिमुज्जघर्ष ॥ २६ ॥
अलक्तकं पादसरोरुहाग्रे
सरोरुहाक्ष्याः किल संनिवेश्य ।
स्वमौलिगङ्गासलिलेन हस्ता-
रुणत्वमक्षालयदिन्दुमौलिः ॥ २७ ॥
भस्मानुलिप्ते वपुषि स्वकीये
सहेलमादर्शतलं विमृज्य ।
नेपथ्यलक्ष्मीपरिभावनार्थ-
मदर्शयज्जीवितवल्लभां सः ॥ २८ ॥
प्रियेण दत्ते मणिदर्पणे च
संयोगचिह्नं स्ववपुर्विभाव्य ।
त्रपावती तत्र घनानुरागं
रोमाञ्चदंभेन बहिर्बभार ॥ २९ ॥
नेपथ्यलक्ष्मीं दयितोपक्लृप्तां
सस्मेरमादर्शतले विलोक्य ।

अमंस्त सैाभाग्यवतीषु धुर्य्य-
मात्मानमुद्भूतविलक्षता सा ॥ ३० ॥
अन्तः प्रविश्यावसरे ऽथ तत्र
स्निग्धे वयस्ये विजया जयाच ।
उमां तदोपाचरतां कलाभां
दूरेस्थितां तां शशिखण्डमौलेः ॥ ३१ ॥
व्यधुर्बहिर्मङ्गलगानमुच्चै-
र्वैतालिकाश्चिचितचारुवेद्याम् ।
जगुश्च गन्धर्वगणाः सशंख-
ध्वनिं प्रमोदाय पिनाकपाणेः ॥ ३२ ॥
ततः स्वसेवावसरे सुराणां
गणास्तदालोकनतत्पराणाम् ।
द्वारि प्रविश्य प्रणतो ऽथ नन्दी
निवेदयामास कृताञ्जलिः सन् ॥ ३३ ॥
महेश्वरो मानसराजहंसीं
करे दधानस्तनयां हिमाद्रेः ।
सम्भोगलीलालयतः सहेलं
हसन् बहिस्तानभि निर्जगाम ॥ ३४ ॥
क्रमान्महेन्द्रप्रमुखाः प्रणेमुः
शिरोनिबद्धाञ्जलयो महेशम् ।
प्रालेयशैलाधिपतेस्तनूजां
देवीञ्च लोकत्रयमातरं ते ॥ ३५ ॥
यथागतं तान् बिबुधान् विसृज्य
प्रसादमानक्रियया प्रतस्थे ।
स नन्दिना दत्तभुजोऽधिरुह्य
वृषं वृषाङ्कः सह शैलपुत्र्या ॥ ३६ ॥
मनोऽतिवेगेन ककुद्मता स
प्रतिष्ठमानो गगनाध्वनीनः ।
तौ पारिजातप्रसवप्रसङ्गो
मरुत् सिषेवे गिरिजागिरीशौ ॥ ३७ ॥
पिनाकिना ऽपि स्फटिकाचलेन्द्रः
कैलासनामा कलितांबरांसः ।
धृतार्द्धसोमो भृतभोगिभोगो
विभूतिधारी स्वइव प्रपेदे ॥ ३८ ॥
विलोक्य यत्र स्फटिकस्य भित्तौ
सिद्धाङ्गनाः स्वं प्रतिबिम्बमारात्
भ्रांत्या परस्याभिमुखीभवन्ति
प्रियेषु मानग्रहिला नमत्सु ॥ ३९ ॥
संबिंबितस्य स्फटिकांशुगुप्रे-
श्चन्द्रस्य चिह्नप्रकरः करोति ।
गौर्य्या ऽर्पितस्येव रसेन यत्र
कस्तूरिकास्थासकुलस्य लीलाम् ॥ ४० ॥
यदीयभित्तौ प्रतिबिंबिताङ्ग-
मात्मानमालोक्य रुषा करीन्द्राः ।
मत्तान्यनागभ्रमतो ऽतिभीम-
दन्ताभिघातव्यसनं वहन्ति ॥ ४१ ॥
निशासु यत्र प्रतिबिंबितानि
ताराकुलानि स्फटिकालयेषु ।
दृष्ट्वा रतान्तच्युततारहार-
मुक्ताभ्रमं बिभ्रति सिद्धवध्वः ॥ ४२ ॥
नभश्चरीमण्डनदर्पणश्रीः
सुधानिधिर्मूर्द्धनि यस्य तिष्ठन् ।
अनर्घ्यचूडामणितामुपैति
शैलाधिराजस्य शिवालयस्य ॥ ४३ ॥
समीयिवांसो रहसि स्मरार्त्ता
रिरंसवो यत्र सुराः प्रियाभिः ।
एकाकिनोऽपि प्रतिबिंबभाजो
विभान्ति भूयोभिरिवान्विताः स्वैः ॥ ४४ ॥
दिष्टोऽपि गौर्य्या सह चन्द्रमौलि-
र्यदृच्छया स्फाटिकशैलशृङ्गे ।
शृङ्गारचेष्टाभिरनारताभि-
र्मनोहराभिर्व्यहरच्चिराय ॥ ४५ ॥
देवस्य तस्य स्मरसूदनस्य
हस्तं समालंब्य सुविभ्रमश्रीः ।
सा नन्दिना वेत्रभृतोपदिष्ट-
मार्गा पुरोगेन कलं चचाल ॥ ४६ ॥
चलद्द्विपाणो विकटाङ्गभङ्गः
सदन्तुरः शुष्कसुतीक्ष्णतुण्डः ।
भ्रुवोपदिष्टः स तु शङ्करेण
तस्या विनोदाय ननर्त्त भृङ्गी ॥ ४७ ॥

करटस्थलीलीलकपालमाला
दंष्ट्राकरालाननमभ्यनृत्यत् ।
प्रीतेन तेन प्रभुणा प्रणुन्ना
काली कलत्रस्य मुदे प्रियस्य ॥ ४८ ॥
भयङ्करौ तौ विकटं नटंतौ
विलोक्य बाला भयविह्वलाङ्गी ।
सरङ्गमुत्सङ्गमनङ्गशत्रो-
र्गाढं प्रसह्य स्वयमालिलिङ्ग ॥ ४९ ॥
उत्तुङ्गपीनस्तनपीडपीडं
ससंभ्रमं तत्परिरम्भमीशः ।
प्रपद्य सद्यः पुलकोपगूढः
स्मरेण रूढप्रमदो ममाद ॥ ५० ॥
इति गिरिसुतया विलासलीला-
विविधविभङ्गिभिरेष तोषितः सन् ।
अमृतकरशिरोमणिर्गिरीन्द्रे
कृतवसतिर्वशिभिर्गणैर्ननन्द ॥ ५१ ॥
इति श्रीकुमारसम्भवे महाकाव्ये कवीन्द्रकालि-
दासकृतौ कैलासगमनोनाम नवमः सर्गः ॥

## ॥ नयवीथी ॥

प्रकरणपञ्जिकायां चतुर्थं प्रकरणम् ॥ ४ ॥

यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये ।
प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते ॥ १ ॥
तत्रतावदिदं केचिदूचिरे चारुचेतसः ।
भ्रमसन्देहविज्ञाने अयथार्थे उभे इति ॥ २ ॥
इदं रजतमित्येषा या शुक्तिशकले मतिः ।
साचेदयथार्था भ्रान्तित्वं तदा तस्यास्तु कीदृशम् ॥ ३ ॥
यथावस्थितवस्त्वाभमपि ज्ञानं यदा भ्रमः ।
प्रमाणेषु तदाऽऽपन्ना सर्वेषु भ्रमरूपता ॥ ४ ॥
विवेकाग्रहणं भ्रान्तिरितिचेन्नैतदीदृशम् ।
सुषुप्तेऽपि भ्रमापत्तेः सर्वभेदापरिग्रहात् ॥ ५ ॥
भेदाग्रहे गृहीतेच यदि स्याद् भ्रमरूपता ।
दूरात् सामान्यमात्रस्य दर्शने स्याद्भ्रमस्तदा ॥ ६ ॥
यथार्थदर्शनत्वेच बाधको ऽपि न युज्यते ।
अज्ञानभेदग्रहणे न बाधकमितिर्भवेत् ॥ ७ ॥
यथार्थतापि चैतस्याः कथमित्यपि चिन्त्यताम् ।
एषा ऽपि रजतत्वेन शुक्तिकामध्यवस्यति ॥ ८ ॥
रजतत्वं न शुक्तेश्च रजतस्य न शुक्तिता ।
तयोरन्योन्यभिन्नत्वं प्रत्यक्षेणावधारितम् ॥ ९ ॥
अथेयं रजतत्वेन न शुक्तिमवलम्बते ।
सामानाधिकरण्येन प्रतिपत्तिर्विरुध्यते ॥ १० ॥
रूप्यार्थिनः प्रवृत्तिश्च शुक्तौ स्यान्निर्निबन्धना ।
अग्रहो ऽपि न भेदस्य प्रवृत्तौ कारणं यतः ॥ ११ ॥
रजतप्रतिपत्तिश्च नेयमन्धस्य जायते ।
तेनेयमिन्द्रियाधीना संयुक्तेचेन्द्रियं धियम् ॥ १२ ॥
समर्थमुत्पादयितुं शुक्तिसंयोगिचेन्द्रियम् ।
तेन सैवेन्द्रियेणेह रजतत्वेन गृह्यते ॥ १३ ॥
स्यान्मतं शुक्तिकामात्रमिन्द्रियेणावसीयते ।
तदेव सदृशत्वेन रजतस्मृतिकारणम् ॥ १४ ॥
सदृशप्रत्ययेनेह संस्कारोद्बोधहेतुना ।
तदित्युल्लेखरहिता रजते भवति स्मृतिः ॥ १५ ॥
स्मृतावस्यां मनोदोषात् तदित्यंशो ऽवखण्डितः ।
तेनेन्द्रियानुकारित्वमन्यथासिद्धमित्यसत् ॥ १६ ॥
अनुभूतेऽपि विषये तत्परामर्शवर्जितम् ।
न बोधं स्मृतिमिच्छन्ति धारावाहिकबोधवत् ॥ १७ ॥
अपरोक्षपुरोवर्त्तिसामानाधिकरण्यतः ।
नेयं स्मृतिः किन्तु शुक्तौ भ्रान्तो ऽयं रजतग्रहः ॥ १८ ॥
स्मृत्युद्बोधनिमित्तंच स्वप्ने किञ्चिन्न विद्यते ।
पीतशङ्खावबोधेच द्विचन्द्रग्रहणे तथा ॥ १९ ॥
दिङ्मोहालातचक्रादिभ्रान्तयश्च कथं पुनः ।
स्मृतित्वाश्रयणेनैता वर्णनीया यथार्थतः ॥ २० ॥
तेनेन्द्रियादिदोषेण जायन्ते भ्रान्तिबुद्धयः ।
बुध्यमानावस्तुरूपमन्यथास्थितमन्यथा ॥ २१ ॥
स्थाणुर्वा पुरुषोवेति सन्देहो यो ऽपि जायते ।
अभावात् तादृशो ऽर्थस्य स यथार्थः कथं भवेत् ॥ २२
अत्र ब्रूमो यएवार्थो यस्यां संविदि भासते ।
वेद्यः सएव नान्यद्धि वेद्यावेद्यस्य लक्षणम् ॥ २३ ॥
इदं रजतमित्यत्र रजतंचावभासते ।
तदेव तेन वेद्यं स्यान्नतु शुक्तिरवेदनात् ॥ २४ ॥
तेनान्यस्यान्यथाभानं प्रतीत्यैव पराहतम् ।

परस्मिन् भासमानेहि न परं भासते यतः ॥ २५ ॥
नन्वेवं रजताभासः कथमेष घटिष्यति ।
उच्यते शुक्तिशकलं गृहीतं भेदवर्जितम् ॥ २६ ॥
शुक्तिकाया विशेषा ये रजताद्भेदहेतवः ।
ते न ज्ञाता अभिभवादज्ञाता सामान्यरूपता ॥ २७ ॥
अनन्तरंच रजते स्मृतिर्जाता तथापिच ।
मनोदोषात् तदित्यंशपरामर्शविवर्जितम् ॥ २८ ॥
रजतं विषयीकृत्य नैव शुक्तेर्विवेचितम् ।
स्मृत्याऽतो रजताभास उपपन्नो भविष्यति ॥ २९ ॥
धारावाहिकवन्नेयं स्मृतिरित्युदितंच यत् ।
उच्यते ऽनन्यगतितः स्मृतिरत्रावगम्यते ॥ ३० ॥
नह्यसन्निहितं तावत् प्रत्यक्षं रजतं भवेत् ।
लिङ्गाद्यभावान्नान्यस्य प्रमाणस्य न गोचरः ॥ ३१ ॥
परिशेषात् स्मृतिरिति निश्चयो जायते पुनः ।
तस्मात् कारणसद्भावाद्धारावाहिकधीषुतु ॥ ३२ ॥
प्रत्युत्पन्नेन्द्रियग्रामसामग्री ग्रहकारणम् ।
ग्रहणे स्मरणेचेमे विवेकानवभासिनी ॥ ३३ ॥
सम्यग्रजतबोधात्तु भिन्ने यद्यपि तत्त्वतः ।
तथापि भिन्ने नाभातो भेदाग्रहसमत्वतः ॥ ३४ ॥
सम्यग्रजतबोधश्च समश्चैकार्थगोचरः ।
ततो भिन्ने अबुध्वातु स्मरणग्रहणे इमे ॥ ३५ ॥
समानेनैव रूपेण केवलं मन्यते जनः ।
अपरोक्षार्थबोधेन समानार्थग्रहेणच ॥ ३६ ॥
अवैलक्षण्यसंवित्तिरिति तावत् समर्थितम् ।
व्यवहारोऽपि तत्तुल्यस्ततएव प्रवर्त्तते ॥ ३७ ॥
समत्वेनच संवित्तेर्भेदस्याग्रहणेनच ।
मिथ्याभावोऽपि तत्तुल्यव्यवहारप्रवर्त्तनात् ॥ ३८ ॥
रजतव्यवहारांशे विसंवादयतो नरात् ।
बाधकप्रत्ययस्यापि बाधकत्वमतो मतम् ॥ ३९ ॥
प्रसज्यमानरजतव्यवहारनिवारणात् ॥ ४० ॥
सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ।
भेदानध्यवसायादियमपि तादृक् परिस्फुरति ॥ ४१ ॥
साधारणंहि रूपं तस्या अस्याश्च विद्यते तेन ।
तन्मात्रप्रतिभानात् समानतामेव मन्यन्ते ॥ ४२ ॥
तत्तुल्यव्यवहारप्रसक्तिरपि युज्यतेचातः ।

तद्भिन्निवारककारणाद्बाधकता बाधकस्यापि ॥ ४३ ॥
एवं स्वप्नेऽपि वस्तूनि स्मर्यमाणानि सन्त्यपि ।
अनुभूतांशलोपेन भासन्ते गृह्यमाणवत् ॥ ४४ ॥
ग्रहणस्य विशेषोहि गृहीतग्रहणं स्मृतिः ।
सा गृहीतांशमोषेण गृहीतिरिति तिष्ठति ॥ ४५ ॥
संस्कारोद्बोधहेतुश्च तत्रादृष्टं प्रकल्प्यते ।
विपरीतख्यातिपक्षेऽप्येषा तुल्याहि कल्पना ॥ ४६ ॥
अदृष्टस्यतु हेतुत्वाज्ज्ञानतस्तादृशी न धीः ।
अवस्थाविहदृष्टस्य सामग्री फलसम्भवे ॥ ४७ ॥
पीतशङ्खावबोधेच पित्तस्येन्द्रियवर्त्तिनः ।
पीतिमा गृह्यते द्रव्यरहितोऽग्निव तिग्मता ॥ ४८ ॥
शङ्खस्येन्द्रियदोषेण शुक्लिमाच न गृह्यते ।
केवलं द्रव्यमात्रंतु प्रथते रूपवर्जितम् ॥ ४९ ॥
गुणे द्रव्यव्यपेक्षेच द्रव्येच गुणकाङ्क्षिणि ।
भासमाने तयोर्बुद्धिरसम्बन्धं न बुध्यते ॥ ५० ॥
सत्यपीतावभासेन समे भातो मती इमे ।
व्यवहारोऽपि तत्तुल्य एवमत्रापि युज्यते ॥ ५१ ॥
यत्तु नेत्रगतस्यापि कज्जलस्य न कालिमा ।
गृह्यते कारणं तत्र तेनेन्द्रियनिरोधनम् ॥ ५२ ॥
अतसीपुष्पसङ्काशं यत् तावन्नेत्रमण्डलम् ।
तत्रस्थमञ्जनं यत्तत् तेजोवृत्तिनिरोधकम् ॥ ५३ ॥
मण्डलान्तरसंस्थंतु यन्नाम नयनेऽञ्जनम् ।
तस्यानार्जवदोषेण नीलिमा नावगम्यते ॥ ५४ ॥
इन्द्रियोपरिभागेऽपि लिप्तेन स्वच्छभावतः ।
पित्तेन नायनं तेजः काचेनेव न रुध्यते ॥ ५५ ॥
प्रसरन्नायनं तेजो ग्राहकं नाश्रयस्थितम् ।
पित्तस्याग्रहणं सौक्ष्म्यात् प्रभायामिव तेजसः ॥ ५६ ॥
मधुरे तिक्तधीरेवं व्याख्याता पित्तवर्त्तिनः ।
तैक्ष्ण्यस्य रसहीनस्य गुडस्यच परिग्रहात् ॥ ५७ ॥
तथा द्विचन्द्रबोधेऽपि भिन्नमेवैन्द्रियं महः ।
भिन्ने जनयति प्रख्ये एकस्मिन्नेव शीतगौ ॥ ५८ ॥
संवित्ती ते न भिद्येते तद्द्वित्वे सति मन्यते ।
भिन्नार्थबुद्धितुल्यत्वमत्रापि खलु पूर्ववत् ॥ ५९ ॥
स्मरतोऽप्येकतां तेन भ्रमो ऽयमुपपद्यते ।
नहि स्मृतिप्रमोषेण सर्वत्रैव भ्रमो मतः ॥ ६० ॥

दिङ्मोहे दृग्सामर्थ्याद्दिक्स्वरूपानवग्रहात् ।
दिगन्तरस्वरूपस्य स्मरणाच्च भ्रमो मतः ॥ ६१ ॥
अलातचक्रे ऽलातस्य भ्रमतः सर्वतो ऽद्भुतम् ।
निरन्तरं धियो जाताश्चक्रबुद्धिसमा मताः ॥ ६२ ॥
कालभेदस्तु शीघ्रत्वाद्धियां तासां न लक्ष्यते ।
चक्रधीव्यवहारश्च तेनास्मिन्नपि युज्यते ॥ ६३ ॥
एतेनैव प्रकारेण सर्वभ्रान्तिषु पण्डितैः ।
ऊहनीया हेतुभेदा यथार्थज्ञानसिद्धये ॥ ६४ ॥
स्थाणुर्वा पुरुषोवेति सन्देहेऽपि यदा द्वयम् ।
स्मर्यते ऽन्योन्यनिर्मुक्तं तदा ऽर्थविरहः कुतः ॥ ६५ ॥
यदिचार्थं परित्यज्य काचिद्बुद्धिः प्रवर्त्तते ।
व्यभिचारवती स्वार्थे कथं विश्वासकारणम् ॥ ६६ ॥
नन्वचाप्यरजतधीतुल्यताशङ्कया समः ।
अविश्वासस्तच दोषविरहाच्चेद्विनिर्णयः ॥ ६७ ॥
सममेतद्विपरीतख्यातिपक्षेऽपि दृश्यते ।
अहो बत महानेष प्रमादो धीमतामपि ॥ ६८ ॥
ज्ञानस्य व्यभिचारेहि विश्वासः किंनिबन्धनः ।
ज्ञानस्य व्यभिचारेऽपि ज्ञानं यत् सत्यमेव तत् ॥ ६९ ॥
अज्ञानमपि किन्त्वस्ति रूपभेदनिबन्धनम् ।
जिज्ञासा ज्ञायते येयं साप्यन्येन निवर्त्तते ॥ ७० ॥
यत्नेनान्विष्यमाणेऽपि रूपं तच्चेन्न दृश्यते ।
तदा पूर्वैव संवित्तिर्नास्तित्वेनोपदिश्यते ॥ ७१ ॥
अयथार्थत्वपक्षेच ज्ञानं साकारमापतेत् ।
आकारो भासते योहि ज्ञानएवावतिष्ठते ॥ ७२ ॥
अयथार्थस्य बोधस्य नोत्पत्तावस्ति कारणम् ।
दोषाश्चेन्नहि दोषाणां कार्यशक्तिविघातिता ॥ ७३ ॥
भस्मकादिषु कार्यस्य विघातादेव दोषता ।
अग्नेर्हि रसनिष्पत्तिः कार्यं जठरवर्त्तिनः ॥ ७४ ॥
विद्यमानवस्तुरूपग्रहणे प्रतिबन्धृता ।
दोषाणामुपपन्नेति भ्रान्तिग्रहनिबन्धना ॥ ७५ ॥
विषयाव्यभिचारित्वं साधयितुं सर्वसंविदामेषा ।
निरमीयत नीतिविदा शालिकनाथेन नयवीथी ॥ ७६ ॥
मिश्रशालिकनाथेन नयवीथीतिसंज्ञितम् ।
कृतं लोकहितार्थाय प्रभाकरमतं यथा ॥ ७७ ॥

इति श्रीमहामहोपाध्यायशालिकनाथमिश्रकृतिरियं
नयवीथी समाप्ता ॥

॥ श्रीः ॥

## ॥ सायनवादः ॥

यः सर्वशास्त्रैः सततं विमृग्यः
सदा भजन्ते खलु योगिनो यम् ।
यश्चास्ति पारे सकलागमानां
सोऽव्याद्दयालुः परमेश्वरोऽस्मान् ॥ १ ॥

अथ ज्योतिःशास्त्रातिगहनविचारचातुरीधुरीणानामनेकगम्भीरविद्याकूपारपारदृश्वनामप्यस्पृष्टगर्वलेशानां परगुणश्रवणानन्दितमानसानां तत्त्वजिज्ञासूनां मनोरञ्जनायातिचमत्कृतिजनकं ज्योतिःशास्त्रविचारसारभूतमिमं सायनवादमेतादृग्गहनविषयविचाराक्षमोऽप्यहमासादितानेकप्रबलावष्टम्भको-ऽव्याकुलं संक्षेपतो निरूपयामि। प्राचीनातिप्राज्ञभारतवर्षीयकार्तान्तिकप्रणीतग्रन्थानामवलोकनेनेदं स्पष्टमवगम्यते यदियं ज्योतिर्विद्याऽतिप्राचीनकालादस्मिन् भारते वर्षे प्रचरिताऽस्तीति । परमस्त्येतदखिलविद्वज्जनानां सुविदितं यदेतत्कालप्रसिद्धेषु प्राचीनज्योतिःशास्त्रग्रन्थेषु महदन्तरमस्ति। तच्चान्तरं ज्योतिर्विद्यायाः केवलं वेधमूलकत्वादतिसूक्ष्मयन्त्रद्वारा सततं कृतैर्वेधैरेवापाकर्तुं शक्यते। सुदीर्घकालश्चात्यगाच्च कोऽप्यस्मिन् भारतवर्षेऽनवरतकृतवेधद्वारा ग्रहाणां गतीः सम्यगवलोक्य तच्छास्त्रग्रन्थेषु कालवशाद्विसंवादग्रस्तानर्थानपानैषीत् । अतोऽतिप्राचीनज्योतिःशास्त्रग्रन्थोक्तग्रहगणितप्रकारैः साधितानि ग्रहोदयास्तग्रहणादीनि तत्तत्कालेषु न घटन्ते। एवं ग्रन्थग्रथनावसर एवैतादृशो बहवो विरुद्धार्थाः प्राचीनग्रन्थेषूपनिबद्धा य इदानीं सूक्ष्मयन्त्रद्वारा कृतैर्वेधैरुपपत्त्या च तथा नोपलभ्यन्ते। ते यस्मिन्नंशे सान्तरास्तद्दर्शयितुमत्र कतिपयनवीनप्राचीनसिद्धान्तान् निदर्शयामि ।

| प्राचीनसिद्धान्ताः | नवीनसिद्धान्ताः |
|---|---|
| १ । भूरियं स्थिरा सूर्यादयो ग्रहाः तामभितो भ्रमन्ति । | १ । भूः स्वाक्षं परितो भ्रमन्ती सूर्यं परिक्रामति । |
| २ । भूव्यासे षट्शत्यधिकसहस्रं १६०० योजनानि सन्ति । | २ । भूव्यासे ८७० सप्तत्यधिकाष्टशतं योजनानि सन्ति । |
| ३ । विधुबिम्बव्यासोऽ ४८० शीत्यधिकचतुःशतं योजनानि । | ३ । विधुबिम्बव्यासोऽ २३८ ष्टत्रिंशदधिकद्विशतं योजनानि । |
| ४ । सूर्यबिम्बव्यासः ६५०० पञ्चशत्यधिकषट्सहस्रं योजनानि । | ४ । सूर्यबिम्बव्यासः ९७००० सप्तनवतिसहस्रं योजनानि । |
| ५ । भूकेन्द्रात् ५१५६६ एतन्मितयोजनान्तरे चन्द्रोऽस्ति । | ५ । भूकेन्द्रात् २६१३४ एतावति योजनात्मकेऽन्तरे चन्द्रो वर्तते । |
| ६ । भूकेन्द्रादादित्य ६८९३७७ एतावद्योजनान्तरेऽस्ति । | ६ । भूकेन्द्रादादित्य १०४४२१५४ एतावद्योजनान्तरे वर्तते । |
| ७ । कुजादिग्रहाणां बिम्बमानानि | ७ । कुजादिग्रहाणां बिम्बमानानि |

| | कलाः | विकलाः | | विकलाः |
|---|---|---|---|---|
| कुजः | ४ | ४५ | कुजः | ६ . २६ |
| बुधः | ६ | १५ | बुधः | ६ . ४६ |
| गुरुः | ७ | २० | गुरुः | ३६ . ७४ |
| शुक्रः | ६ | ० | शुक्रः | १६ . १ |
| शनिः | ५ | २० | शनिः | १६ . २ |

| | |
|---|---|
| ८। भूकेन्द्राद्यावत्यन्तरे सूर्योऽस्ति तत्षष्टिगुणान्तरे सर्वाणि नक्षत्राणि वर्तन्ते तानि च सूर्यतेजसा प्रकाशन्ते। | ८। भूकेन्द्रादनन्तान्तर इमानि नक्षत्राणि सन्ति। इदं च सम्यक् नि-[illegible] स-मानान्तरे न वर्तन्ते। अपिच स्वीयेनैव तेजसा तानि प्रकाशन्ते। |
| ९। सर्वेषां ग्रहाणां योजनात्मिका गतिस्तुल्यैव तेषां कक्षाश्च वृत्तरूपाः। | ९। ग्रहाणां योजनात्मिका गतिर्विषमा दीर्घवृत्ताकाराश्च तेषां मार्गाः। |
| १०। एकस्मिन् निरयणसौरवर्षे दिनाद्यमेतावत् ३६५ दिनानि, १५ घटिकाः ३० पलानि इत्यादि। | १०। एकस्मिन्निरयणसौरवर्षे दिनाद्यमेतावत् ३६५ दिनानि १५ घटिकाः २२½ सार्द्धद्वाविंशतिः पलानि इत्यादि। |
| ११। चन्द्रस्य चक्रभोगकालः २७ दिनानि ७ होराः ४३। १६.०३। | ११। चन्द्रस्य चक्रभोगकालः २७ दिनानि ७ होराः ४३। ११ . ५४। |
| १२। सूर्यस्य परमा क्रान्तिः २४ अंशाः | १२। सूर्यस्य परमा क्रान्तिः २३ अंशाः २७ कलाः |
| इत्यादि। | इत्यादि। |

---

एवमादीनि बहून्यन्तराणि प्राचीनग्रन्थेषूपलभ्यन्ते। तत्र यद्यपि भूर्भ्रमति स्वतेजसा च सर्वाणि नक्षत्राणि प्रकाशन्त इत्यादिविषयाणां वस्तुतो याथार्थ्यादवश्यं ते मन्तव्यास्तथापि यत् ते नाङ्गीक्रियन्ते तत्रेदमेव मुख्यं बीजं यत् तेषामनङ्गीकारेऽपि गणित इतिकर्तव्यतायां न कोऽपि दोषः संभाव्यते। अतएवाचार्याः प्राचीनग्रन्थेषु भूः सूर्यं परितो भ्रमतीति नोचुः। परमहमिदं सम्यगुपपादयितुं शक्नोमि यत् प्राचीनाचार्या भूरेव सूर्यं परितो भ्रमतीति निश्चिन्वानाः शास्त्राणि प्राणैषुः। किन्त्वयं नैतादृशः सुगमो विषयो यत् तमहमस्मिन् संक्षिप्ते प्रघट्टके विस्तरतो वर्णयितुं पारयेयमिति। तत्र न किमपि ब्रुवे। भूभ्रमणानङ्गीकार एतच्छास्त्राध्येतॄणां गोलस्थितेः सौकर्येणावगमात् सूर्यगतेरेवापाततः प्रतीयमानत्वाद्गणिते दोषादर्शनाच्च शास्त्रकाराः सूर्य एव भूमिं परितो भ्रमतीति लिलिखुः। अतएव स्वल्पस्यापि दोषस्य व्यवहारेऽदर्शनादेतादृशविषयाणामनङ्गीकारे न कापि क्षतिः। परन्तु सूर्यस्य परमा क्रान्तिस्तस्य चक्रभोगकालश्चेत्यादिपदार्थाः कालान्तरेऽवश्यं विकुर्वन्ति। यथाह भगवान् वसिष्ठः।

इत्थं माण्डव्य संक्षेपादुक्तं शास्त्रं मयोदितम्।
विस्रस्ती रविचन्द्राद्यैर्भविष्यति युगे युगे॥

अतएवैतादृग्विषयान् ये च ग्रन्थग्रथनावसर एव पूर्वं विरुद्धतयोक्ता विषयास्तांश्च तत्तत्काले सूक्ष्मवेधैरनुमानेन प्रत्यक्षतो वा याथातथ्येनावगम्य दृग्गणितैक्यं च कृत्वा, प्राज्ञैर्ग्रन्थरचनायां प्रवर्तितव्यम्॥

तथाच श्रूयते।

यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम्।
दृश्यते तेन पक्षेण कुर्यात् तिथ्यादिनिर्णयम्॥

इममेव सिद्धान्तमनुसृत्य सकलज्योतिर्विदामग्रणीर्महाप्राज्ञो गणेशदैवज्ञः सर्वान् ग्रहान् स्वकालोपलभ्यैर्यन्त्रैः सम्यग्विद्धा यद्यदन्तरं ग्रहगतिष्वद्राक्षीत् तत् तत् संशोध्याखिलकरणग्रन्थावतंसभूतं ग्रहलाघवं नामापूर्वं करणग्रन्थमकरोत्। ननु पूर्वोक्तानां प्राचीननवीनसिद्धान्तानामन्यतमस्याप्यत्रोपपत्तेरनुक्तत्वात् कथं नवीनसिद्धान्तानामेव वास्तविकत्वमवधेयम्। सत्यम्। संक्षेपतो वर्ण्यमानेऽस्मिन् सायनवादे पूर्वोक्तसकलसिद्धान्तोपपत्तीनां यौगपद्येन वक्तुमशक्यत्वात् प्रकृते तेषां याथार्थ्योपपादनाय केवलमिदमेव कथयामि यद्यैर्यैः सिद्धान्तैः साधिता ग्रहोदयास्तकालास्तदीयस्थानानि च दिवि घटेरंस्तएव सिद्धान्ता वस्तुभूताः। प्राचीनसिद्धान्तैः साधितानि ग्रहाणामुदयास्तग्रहणादीनि तु प्रायो न घटन्त इति स्पष्टमेवैषामवास्तविकत्वम्। नवीनसिद्धान्तानुसारेण प्रतिवर्षं विरचिते नाविकपञ्चाङ्गे लिखितानां दैनंदिनग्रहोदयास्तक्रान्तीनामाकाशे तत्तत्काले तथैव दर्शनान्निःसन्दिग्धमस्ति नवीनसिद्धान्तानां वास्तविकत्वम्। अत्र विषये सन्दिहानैरवश्यं तत्पञ्चाङ्गलिखितपदार्थानामाकाशेऽवलोकनेन प्रतातिरुत्पाद्या। अथ पूर्वं यान्यन्तराण्यदर्शयं तेभ्योऽतिरिक्तमेकमन्तरमस्ति सकलग्रन्थेषु तदिदानीं दर्शयामि। यदेतदाकाशे राशिचक्रं क्रान्तिवृत्ताभिधं कल्पितं तस्य समा द्वादश मेषवृषादयो विभागा राशिसंज्ञकाः कल्पिताः। इमे च विभागाः शास्त्रे द्विधोपलभ्यन्ते। क्रान्तिवृत्ताभिधस्य राशिचक्रस्य कमपि प्रदेशं स्थिरं मूलं मत्वा ततः कल्पिता ये तद्वृत्तस्य समा द्वादश मेषवृषादयो राशिसंज्ञका विभागास्ते स्थिरराशयो निरयणराशयश्चोच्यन्ते। दिविषदां तत्तदतिक्रमणकालाश्च राशिसंक्रान्तयो निरयणसंक्रान्तयश्चाभिधीयन्ते। एवं क्रान्तिवृत्तं विषुवद्वृत्ते ययोर्द्वयोः स्थानयोः संपातं विदधाति तयोर्यस्मात् संपातात् क्रान्तिवृत्तं विषुवद्वृत्तादुत्तरतो याति ततः कल्पिता ये क्रान्तिवृत्तस्य समा मेषवृषादयो राशिसंज्ञका विभागास्ते तत्संपातस्य सततं प्रतीपगमनाच्चलराशयः सायनराशयश्चाभिधीयन्ते। ग्रहाणां तत्तदतिक्रमणकालाश्च चलसंक्रान्तयः सायनसंक्रान्तयश्चोच्यन्ते। तत्र राशिसंक्रान्तेः केषांचिन्मतानुसारेण पुण्यदातृत्वेऽपि तस्याः क्रान्तिवृत्तस्थित्यननुसारित्वेनाजागलस्तनस्येवाकिंचित्करत्वाच्चलसंक्रान्तेः पुण्योत्पादक-

त्वेन बहुसंमतत्वात् क्रान्तिवृत्तस्थित्यनुसारित्वाच्च राशिसंक्रान्तिगणनानश्चलसंक्रान्तिगणनैव शास्त्रे मुख्यत्वेनाभिहितास्ति। यथाह भगवान् वसिष्ठः।

चलसंस्कृततिग्मांशोः संक्रमो यः स संक्रमः।
अजागलस्तन इव राशिसंक्रान्तिरुच्यते॥
पुण्यदां राशिसंक्रान्तिं केचिदाहुर्मनीषिणः।
नैतन्मम मतं यस्मान्न स्पृशेत् क्रान्तिकक्षया॥

भगवान् पुलस्त्योऽपि

अयनांशसंस्कृतो भानुर्गोले चरति सर्वदा।
अमुख्या राशिसंक्रान्तिस्तुल्यः कालविधिस्तयोः॥
स्नानदानजपश्राद्धव्रतहोमादिकर्मभिः।
सुकृतं चलसंक्रान्तावक्षयं पुरुषोऽश्नुते॥

रोमशसिद्धान्तेऽपि

दिनरात्रिप्रमाणानां निर्णयो न भसंक्रमात्।
यतः सकलकर्माणि पुण्योऽतश्चलसंक्रमः॥

एवं सूर्यसिद्धान्तस्य द्वादशाध्यायान्तर्गतपञ्चत्वारिंशच्छ्लोकोत्तरकतिपयश्लोकार्थे सम्यग्विचारिते स्पष्टमेतत् प्रतीयते यदयनं ऋतवः संवत्सरश्च सायनएव क्रान्तिपातसंज्ञकाद्राशिवृत्तविषुवद्वृत्तयोः संपातादेव च मेषवृषादिराशिगणना मुख्येति। यावत्कालमादित्य उत्तरगोले चरति तावद्गीर्वाणनिलयभूतस्य वसुन्धरोत्तरकेन्द्रनिष्ठकनकाद्रेस्तत्किरणसंबन्धाद्यावच्च दक्षिणगोले स चरति तावत् तस्य तत्किरणसंबन्धाभावाच्च तत्र निवसतां सुमनसां षण्मासं दिनं षण्मासं च रात्रिरिति मनुष्यसंवत्सरमितं सुराणामहोरात्रं शास्त्रकाराः संजगदुः परमसौ संवत्सरः सायनो न निरयणः। सकलदैनंदिनशुभकार्याणां निशीथादामध्याह्नं नैशकार्याणां च मध्याह्नादानिशीथमाचरणस्य शास्त्रे विहितत्वात् तत्तत्कर्मानुष्ठातॄणामामुष्मिकश्वोवसीयसोत्पत्त्यै सांहितिकाः सूर्यस्योत्तरायणं देवानां दिनं दक्षिणायनं च रात्रिरिति यत्संहिताग्रन्थेषु लिलिखुस्तदेतद्दैवनिशीथादामध्याह्नमुत्तरायणं तन्मध्याह्नादानिशीथं च दक्षिणायनमित्येते सूर्यस्योत्तरायणदक्षिणायने सायनमानेनैवोत्पद्येते न निरयणमानेनातः सायनगणनैव मुख्या न निरयणगणना। एवं यद्यपि बहुभिः प्रकारैः शास्त्रतो युक्त्या च सायनगणनैव मुख्या निरयणगणना च गौणीति सिद्ध्यति। तथापि येयं गौण्येव निरयणगणनेदानीं लोके प्रचरिता तत्रायं हेतुर्यत् पूर्वं कस्मिंश्चित् काले यदा क्रान्तिपात एव निरयणमेषादिरासीत् तदा द्वे अपि गणने एकरूपे एवास्तां तत ऊर्ध्वं क्रान्तिपातचलने लोकानामननुसंधानाद्गौण्येव निरयणगणना लोके प्रचरिता। मन्ये इमां गौणीमपि निरयणगणनां स्वीकुर्वन्तु लोका यदि ते राशिचक्रमूलभूतं निरयणमेषादिं निश्चिनुयुः सति कुड्ये चित्रकर्म इति न्यायात् परमयं निरयणमेषादिः कथमपि न निर्णेतुं शक्यते। तथाहि। सूर्यसिद्धान्तादिग्रन्थेष्वेवं लिखितं यत् सूर्यो ३६५ दिनानि १५ घटिकाः ३१ पलानि २४ विपलानि इत्येतावता सावनकालेन द्वादश निरयणराशीन् भुङ्क्ते। परंतु सूक्ष्मयन्त्रद्वारा कृतैर्वेधैः सुनिश्चिताच्चक्रभोगकालादयं प्रोक्तश्चक्रभोगकालः किंचिदधिकाष्टौ पलान्यधिकस्ततो यदा प्रतिवर्षमेतावदन्तरं चक्रभोगकाले तदा अल्पगतैरेवंविधचक्रभोगकालरूपैरवास्तवैर्निरयणवर्षैः साधितं सूर्यस्य स्थानमवश्यमशुद्धमायात्यतएवैवं साधितात् सूर्यस्थानाच्च निरयणमेषादिनिर्णयः। एवं सकलग्रहस्थानेभ्योऽपि राशिमूलस्यानिर्णयएव। यदि ब्रूथ नक्षत्रताराध्रुवकेभ्यस्तत्स्थानस्य निर्णयः सुशक इति तदपि न घटते यतः प्राचीनसकलज्योतिर्ग्रन्थेषु ये नक्षत्रयोगताराध्रुवका ये च तेषां क्षेपकाः पठितास्ते सांप्रतं सूक्ष्मवेधैरुपलब्धेभ्यस्तत्तन्नक्षत्रध्रुवकेभ्यो भिन्नाः सन्ति। तथाहि। अश्विनीनक्षत्रयोगतारेदानीं ग्रन्थोक्तस्थानादग्रे किंचिदधिकांशद्वयान्तरे दृश्यते। भरणीनक्षत्रयोगतारा सपादद्व्यंशान्तरेऽग्रेऽस्ति। आर्द्रानक्षत्रयोगताराऽनुमानतोंऽशत्रयान्तरेऽग्रेऽवलोक्यते। चित्रानक्षत्रयोगताराँऽशत्रयान्तरेऽग्रेऽस्ति। विशाखानक्षत्रयोगतारा उक्तस्थानात् सार्द्धद्व्यंशान्तरे पृष्ठत उपलभ्यते। एवमेवान्यनक्षत्रविषयेऽपि बोध्यम्। एवं नक्षत्राणां याम्योत्तरान्तरेष्वपि बह्वन्तरमुपलभ्यते। अतः सकलग्रहाणां निरयणस्थानगणनामूलभूतनिरयणमेषादेः पठितनक्षत्रध्रुवकेभ्योऽपि निर्णयो दुःशक एवेत्यस्त्येतन्महदन्तरं सकलप्राचीनग्रन्थेषु। अतो निरयणसंक्रान्तीनां निःसंदिग्धतया ज्ञानाभावात् तासां क्रान्तिवृत्तस्थित्यननुसारित्वाच्छास्त्रे गौणत्वेनोक्तत्वाच्च तास्वाचरितैर्धर्मानुष्ठानैः सुकृतोत्पत्तिस्तु दूरे प्रत्युत दोषशङ्का प्रसज्यतेऽतः सायनसंक्रान्तीनां याथातथ्येनावगमात् स्मृत्यादौ मुख्यत्वेनोक्तत्वाच्च ता एव धर्मकार्येष्वौचित्यैकपक्षपातिभिराश्रयणीयाः। एवं सायनसंक्रान्तीनामङ्गीकारे मासा अपि सायनमानेनैव ग्राह्यास्तेषां संक्रान्त्युपलक्षितत्वात्। तथाच ब्रह्मसिद्धान्ते।

मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः।
चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वेऽधिमासोऽन्त्यः॥

ननु मेषादिस्थे सवितरि यो यो मासश्चान्द्रः प्रपूर्यते स चैत्राद्यो ज्ञेयोऽत्र मेषादिस्थे सवितरीत्यनेन सायनमेषादिस्थे

सवितरीति कथमवधार्यम् । सत्यमत्रेत्थं शास्त्रकारा व्यवास्थापयन् यद्वसन्ततौ चैत्रो मासः पतति सायनमेषसंक्रान्तिरपि तत्रैव जायतेऽतः स चान्द्रो मासश्चैत्रो ज्ञेयो यः सायनमेषस्थे पूषणि पूर्यते । एवं सर्वर्तूनां सायनत्वाच्चैत्र इव वैशाखादयोऽपि मासाः सायना एव बोध्यास्तेषां निरयणत्वाङ्गीकारे क्रान्तिपातस्य सततं प्रतीपगमनात् कालान्तरे माघपौषादिमासेषु वसन्तत्वापत्तेः । नच सूर्यसिद्धान्तादिग्रन्थेषु क्रान्तिपातस्य निरयणमेषादेः प्राक् परतश्चासप्तविंशांशमेव भ्रमणस्योक्तत्वात् कथमुक्तदोषः प्रसज्यत इति वाच्यम् । यतो मुंजालादिग्रन्थेषु क्रान्तिपातस्य द्वादशराशिष्वपि भ्रमणस्योक्तत्वात् तदीयतादृग्भ्रमणस्यैव युक्तिसिद्धत्वाच्च निरयणगणनाङ्गीकारे माघपौषादिमासेषु वसन्तर्तुपतनापत्तिस्तदवस्थैव । तदानीं ज्योतिःशास्त्रस्य तत्त्वमबुध्वैव लोकाः कलेरयं दुर्धरः प्रभावो यदन्यकालिकमन्यकाल एव घटत इति ब्रूयुः । ननु मुंजालादीनामनृषित्वेन कथं तन्मताश्रयणेनोक्तदोषः प्रसज्यत इति चेत् । मैवम् । मुंजालादीनां मतं यद्युपपत्तिमन्नाभविष्यत् तर्हि तेषामृषित्वेऽपि तदीयमतावलम्बनमन्याय्यमेवाभविष्यत् अत्र गणितस्कन्ध उपपत्तिमत एवागमस्य प्रामाण्यात् परं तन्मतस्यैव युक्तिसिद्धत्वात् तेषां पुरुषत्वेऽपि तन्मताश्रयणस्यैव न्यायतः प्राप्तयोक्तदोषतादवस्थ्यात् । किंचोपपत्तिमत एव मतस्याश्रयणं सर्वथा वरम् । यदि तत्र कश्चनातिराग्यनुपपन्नमप्यर्थं हठात् समाश्रयेत तर्हि स सुखेन तथाऽनुतिष्ठासतु न कोऽप्येनं बोधयितुं शक्नुयात् । इममेवार्थं योगवासिष्ठीयमुमुक्षुप्रकरणस्याष्टादशसर्गस्थैस्त्रिभिः पद्यैर्भगवान् वसिष्ठः स्वयं स्पष्टमेवावादीत् । तथाहि ।

अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम् ।
अन्यत्त्वार्षमपि त्याज्यं भाव्यं न्याय्यैकसेविना ॥ १ ॥
युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत् तृणमिव त्याज्यमप्युक्तं पद्मजन्मना ॥ २ ॥
योऽस्मत्तातस्य कूपोऽयमिति कौपं पिबेत् पयः ।
त्यक्त्वा गाङ्गं पुरस्थं तं कोऽनुशास्त्यतिरागिणम् ॥ ३ ॥

अतस्तत्त्वज्ञा न्यायपथैकावलम्बिनः सकलव्यवहारमूलभूतमेतच्छास्त्रं विसंवादग्रस्तांस्तदीयानर्थानपनुद्य शास्त्राणि व्याकुर्वन्तु येनायतौ लोकानां महानुपकारो जायेत तेन चेत्क्षमाशासे यदेतादृशोपकृतिजनककार्ये व्यापृतानां तेषामिमं यत्नं सकललोकानुकम्पी भगवाननुगृह्णात्विति ॥

इत्थं मया तत्त्वविदां मुदे यद्विचारितं तद्विमृशन्तु सन्तः ।
खलाः सुखं ब्रूयुरिदं विरुद्धं यतस्तदर्थं मम नोद्यमोऽयम् ॥

॥ गोविन्ददेवशास्त्री ॥

यस्मिन् समादधच्चित्तं कैवल्याय प्रकल्पते ।
क्लेशाद्यैरपरामृष्टमीश्वरं तमुपास्महे ॥ १ ॥

इह खलु प्रामाणिकागमविधीयमानं परमेश्वरप्रणिधानं परमेश्वरपदव्यवहार्यज्ञानमन्तरा दुर्घटमिति परमेश्वरपदव्यवहार्यजिज्ञासायां स्वस्वमतानुसारेणोपन्यासि तान्त्रिकैः । तथाहि । तार्किकास्तावत् क्षित्यङ्कुरादीनां कार्यत्वहेतुकेन सकर्तृकत्वस्यानुमानेनास्मदादिकर्तृकत्वसम्भवाभावसहकृतेनास्मदादिविलक्षणं क्षित्यादिकर्तारं नित्यज्ञानाद्याश्रयं सकलजगन्नियन्तारं परमेश्वरपदव्यवहार्यं साधयन्ति ।

पाञ्चरात्रीयास्तु भगवान् वासुदेवः सर्वकारणं परमेश्वरस्तस्मादुत्पद्यते सङ्कर्षणाख्यो जीवस्तस्मान्मनः प्रद्युम्नस्तस्मादनिरुद्धोऽहङ्कारः सर्वे चैते भगवतो वासुदेवस्यैवांशभूतास्तदभिन्ना एवेति भगवतो वासुदेवस्य मनोवाक्कायवृत्तिभिराराधनं कृत्वा कृतकृत्यो भवतीति वदन्तो जीवोत्पादकमंशिनं परमेश्वरं वर्णयन्ति ।

एवं पाशुपता अपि पशूनां कार्यरूपाणां जीवानां पतिः कारणमीश्वरस्तत्र चित्तस्य समाधानं योगस्तेन दुःखान्तसञ्ज्ञको मोक्षः सम्पद्यत इति कथयन्तो जीवस्य कारणमेव परमेश्वरं निरूपयन्ति ।

पातञ्जलास्तु क्लेशकर्मविपाकाशयैरपरामृष्टं पुरुषविशेषम् ।

साङ्ख्यास्तु जगतः कर्त्तारं परमेश्वरं प्रतिषिद्ध्यादिविद्वांसमेव परमेश्वरपदव्यवहार्यत्वेनाभिप्रयन्ति । एवमन्येऽपि स्वस्वसिद्धान्तानुसारेण परमेश्वरपदव्यवहार्यं व्यवस्थापयन्ति । तत्र तार्किकप्रभृतयस्तावद्घटपटादिसृष्टेस्तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षादिमत्कुलालकुविन्दादिकर्तृकत्वस्य दृष्टत्वेन दृष्टानुसारित्वाच्च कल्पनायाः क्षित्यङ्कुरप्रभृतीनामपि तादृशज्ञानादिमत्कर्तृकताया एव क्लृप्तत्वेन ज्ञानादिमान् परमेश्वरएव तत्कर्तेति सिद्धान्तयन्तः प्राकृतिककर्तृकत्वनिराकरणपुरस्सरं विशेषतः साङ्ख्यशास्त्राभ्युपगतं निरीश्वरवादं दूषयन्ति ।

तत्र यद्यपि साङ्ख्यशास्त्रस्य पुरुषार्थतत्साधनीभूतप्रकृतिपुरुषविवेकख्यात्योरेव प्रतिपादने मुख्यतात्पर्यस्य सत्त्वेनेश्वरासिद्धेरित्यादीश्वरप्रतिषेधप्रकरणस्य विवेकज्ञानप्रतिबन्धनिरासार्थमैश्वर्यवैराग्यायैवाभ्युपगमवादप्रौढिवादादिनैवेश्वरप्रतिषेधकतायाः साङ्ख्यभाष्येऽसकृत् सुव्यक्तमुक्तत्वेन सूत्रस्यासिद्धिपदस्वारस्येन च यत्परः शब्द इतिन्यायेन तदंशे तस्याभ्युपगमवादत्वकल्पनेऽपि तत्यभावेन परमेश्वरसत्त्वोपगमोऽपि न

द्रुनोति साङ्ख्यतन्त्रानुयायिनस्तथापि यथाश्रुतार्थग्राहिणामर्वाग्दृशां सन्तोषाय सङ्क्षेपतो निरीश्वरवाद उपपाद्यते ।

प्रथमं तावद् यदेभिर्ज्ञानादिमत ईश्वरस्य कर्तुः सिद्धौ घटपटादिकर्तुर्ज्ञानादिमतो दृष्टान्ततयोपादानङ्कृतं तत्र ज्ञानेच्छादिमत्या बुद्धेर्दृष्टान्तत्वं विवक्षितमाहोस्वित् पुरुषस्य । अन्त्ये जीववृत्तित्वेनाभिमतं ज्ञानादिकं नित्यमनित्यं वाऽभिप्रेतम् । न तावदाद्यसम्भवः । उत्पत्तेः प्रत्यक्षसिद्धत्वात् । सुषुप्त्यवस्थायां ज्ञानाद्यभावस्य पामरपर्यन्तं प्रसिद्धत्वात् । किञ्च ज्ञानादेर्नित्यत्वेऽनिर्मोक्षप्रसङ्गः । नित्यस्य ज्ञानदुःखादेर्नाशायोगात् । दुःखाद्यत्यन्तनिवृत्तिर्मोक्ष इति हि सर्वानुमतम् । ज्ञानादिकार्याणां शरीरव्यापारणादीनां सार्वकालिकत्वापत्तिश्च । यदिच कारणान्तरविरहप्रयुक्तस्तत्तत्कार्योत्पत्तिविरह उपपाद्यते तर्हि स्वप्रतियोगिकाभावप्रयोजकाभावप्रतियोगिनस्तस्यैवान्वयव्यतिरेकानुविधायिनः कारणत्वकल्पनयोपपत्तौ ज्ञानादीनां तत्तन्निरूपितकारणतायाएवासिद्ध्यापत्तिः।

ज्ञानादीनामनित्यत्वोपगमे तु पुरुषस्य परिणामित्वापत्तिः। उपादेयकार्यस्योपादानपरिणामरूपत्वात् । किञ्च पुरुषे ज्ञानादिकं स्वाभाविकमभिप्रेतं नैमित्तिकं वा । आद्येऽनिर्मोक्षप्रसङ्गः । वह्नेरौष्ण्यस्येव स्वाभाविकस्यापायायोगात् । स्वाभाविकत्वं च स्वप्रतियोगिकाभावेतराभावप्रयोज्यत्वाभाववत्त्वस्वप्रतियोगिकाभावप्रयोज्यत्वोभयसम्बन्धेन स्वविशिष्टाभावप्रतियोगित्वम् । भवति चौष्ण्यं वह्न्यभावेतराभावाप्रयोज्यस्य वह्न्यभावप्रयोज्यस्याभावस्य प्रतियोगीतिसङ्गतिः । संयोगादावतिव्याप्तिवारणाय प्रथमसम्बन्धस्योपादानम् । गगनादावतिप्रसङ्गभङ्गाय द्वितीयस्य । तथाच स्वाभाविकाभावस्य स्वाभावेतराप्रयोज्यत्वेन स्वस्मिन् सति तदभावस्य वक्तुमशक्यत्वात् । नान्त्यः । कालादिप्रसिद्धपदार्थानां निमित्ततायाः दुर्वचत्वात् । तथाहि । पुरुषे ज्ञानादिकस्य कालसम्बन्धनिमित्तकत्वे नित्यस्य व्यापकस्य कालस्य सर्वावच्छेदेन सर्वदा सर्वपुरुषेषु सम्बन्धस्य सम्भवात् सर्वत्र सर्वदा सर्वेषां ज्ञानादिप्रसङ्गः। इदमेव देशादिसम्बन्धनिमित्तकत्वेऽपि बाधकं युज्यतएव । किञ्चिदनित्यमनआदिसंयोगस्य कारणत्वकल्पने तु आत्ममनस्तत्संयोगानां त्रयाणां कारणत्वकल्पने कल्पनागौरवेण लाघवादन्तःकरणेष्वेव तत्स्वीकारस्यौचित्यात् । प्रलयादौ ज्ञानादेरनुपलम्भेनान्वयव्यतिरेकाभ्यां सुखदुःखमोहात्मकान्तःकरणस्यैव वृत्तिपदवाच्यपरिणामविशेषरूपज्ञानादेः सिद्धेश्च ।

नन्वहं जानामि करोमीच्छामि सुख्यहं दुःख्यहमित्यादिप्रत्ययैरात्मनि ज्ञानादिकं सिद्ध्यतीति चेत्-मैवम्-एवं सत्यहं गौरः स्थूलो गच्छामि कृशोऽहमित्यादिप्रत्ययैर्गौरत्वादेरप्यात्मनि सिद्ध्यापत्तेः । तथाच तेषां प्रत्ययानां शरीरधर्म्मिकत्ववज्जानामीत्यादिप्रत्ययानामन्तःकरणधर्म्मिकत्वेनैवोपपत्तौ नात्मनि ज्ञानादिसाधकत्वसम्भवः ।

अतो बुद्धेरेव ज्ञानेच्छादिमत्या दृष्टान्ते कर्तृत्वं पर्यवसन्नम् । ततश्च कर्तृत्वादेश्चेतनवृत्तित्वस्य दृष्टान्तएवासिद्ध्या कथं दार्ष्टान्तिके तत्सिद्धिरिति दृष्टान्तानुरोधेन बुद्धेरेव क्षित्यादिकर्तृत्वसिद्ध्या सोऽयं भवतां प्रयत्नो ज्ञानादिमत्परमेश्वरसाधनेच्छया जनित उपजीव्यं विरुन्धानस्तत्रभवत आदिविदुषः कपिलाचार्यस्यैव बुद्धिसाधने पर्यवसन्नो विनायकं प्रकुर्वाणा इत्याभाणकमनुकुर्वाणोऽसमीक्ष्यः प्रेक्षावद्भिरिति ।

किञ्च ईश्वरस्वीकारेऽपि तदिच्छायाः कार्यमात्रं प्रति कारणत्वमुपेयते तद्विशेषं प्रति वा । नाद्यः । अवश्यकॢप्ताभिरन्वयव्यतिरेकानुविधायिनीभिः कुलालादीच्छाभिरेवोपपत्तौ घटादिकं प्रति तस्या अन्यथा सिद्धत्वेन कारणत्वकल्पनासम्भवात्। नान्त्यः । तादृशेच्छावतः कतिपयवस्तुनिर्मातुरीश्वरत्वासम्भवात् । तथाविधस्य साङ्ख्यशास्त्रे प्रतिषेधाभावाच्च । लोके चेच्छायाः प्रयत्नद्वारैव कार्यनिष्पादकत्वस्य दृष्टत्वेन भगवत्प्रयत्नस्य च नित्यत्वस्वीकारेण तस्याः कारणत्वस्य वक्तुमशक्यत्वाच्च ।

किञ्च समदर्शिनस्तत्रभवतो भगवतो द्वेषाद्यभावेन सुखिदुःख्यादिविविधसर्गानुपपत्त्याऽदृष्टकारणत्वकल्पनाया अप्यावश्यकत्वेन तेनैवोपपत्तौ भगवदिच्छादेः कारणत्वे प्रमाणाभावः । एतदेवेश्वरकृष्णेनाभ्यधायि । वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्येतिप्रभृतिग्रन्थेन ।

किञ्च कर्तृत्वेन भवदनुमत ईश्वरो बद्धो मुक्तो वा । नाद्यः । असर्वज्ञत्वेनेश्वरत्वानुपपत्तेः । नान्त्यः । रागाद्यभावेन कर्तृत्वानुपपत्तेः ।

तस्मात् परमेश्वरपदव्यवहार्य आदिविद्वानेव न तार्किकाद्यनुमत इति सिद्धम् ।

ये च पाञ्चरात्रीयादयो वासुदेवादेरंशिनो जगत्कारणस्य परमेश्वरपदप्रतिपाद्यत्वं तत्कार्यस्य सङ्कर्षणत्वं जीवत्वं च वदन्ति तेऽपि जगदुपादानस्य प्रकृतेरेव शब्दान्तरैरीश्वरत्वं तत्प्रथमकार्यस्य महत्तत्त्वस्यैव सङ्कर्षणत्वं जीवत्वं च ब्रुवत इति न ते साङ्ख्याचार्याणामत्यन्तं प्रतिपन्थाः । एवं पातञ्जला अपि तार्किकप्रदर्शितानुमानादिभिर्नेश्वरं साधयन्ति अपितु प्रणिधानादिविध्यन्यथानुपपत्त्यादिभिरिति तेऽपि न साङ्ख्यपरिपन्थिनः प्रत्युताभिप्रेतार्थसाधकाएवेत्यलं विस्तरेणेति शम् ।

साङ्ख्यशास्त्राभ्युपगतनिरीश्वरवादोपपादनम् ॥

॥ बालशास्त्री ॥

## KÁLIDÁSA AND M. HIPPOLYTE FAUCHE.

In a note appended to his translation of the Kumára-Sambhava M. Hippolyte Fauche expresses a hope that the missing cantos of the poem may yet be discovered in some unexplored library or in some hitherto unknown place in India, Thibet, Persia or China. He tells us also that there is in Paris "au Dépôt des Manuscrits," a copy in Bengalee characters of the Kumára-Sambhava containing an eighth canto, which he promises, if God lends him life, to translate into Latin and French.

We really think Kálidása has suffered enough at the hands of M. Fauche, and we hope that the cantos of which we publish the second instalment in the present Number of the Pandit may be translated for the first time by some one who knows something of Sanskrit and of India. We cannot understand how M. Fauche could, after having gone through, even in a cursory way, translations of the Rámáyana, the Raghuvansa, the Kumára-Sambhava, Sakuntalá and Vikramorvaśí, be guilty of blunders so numerous and so unpardonable. So numerous are they, that we cannot attempt to point out more than a very few in a few cantos of one poem. They are unpardonable, because ignorance and conceit have led him to despise the guidance of former translators and the assistance of an elementary dictionary. The only excuse we can imagine for M. Fauche is that he is no better acquainted with Latin than he is with Sanskrit, and that he has sneered at Stenzler chiefly because he misunderstood him.

We proceed to give from the Raghuvansa a few specimens of the way in which M. Fauche improves upon Stenzler, whose Latin version, in such cases, he frequently quotes.

Canto I. Śl. 32. कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥

"And, though his love was shared by girls besides,
She and dear Fortune were his only brides."

This śloka M. Fauche thus translates: "ce monarque de la terre n'avait que cette vertueuse épouse avec Lakshmî; et cependant il s'estimait posséder en elles seules les épouses d'un nombreux gynœcée." To this translation is appended the following note: "Rex, etsi frequenti gynæceo gaudebat," dit la traduction latine, hanc feminam prudentem atque Lakshmim præcipuas suas uxores estimabat." Elle se trompe, si je ne me trompe moi-même. La version du texte sanscrit me semble être, mot à mot, et dans l'ordre, celle qui vient ci-dessous: *semet uxores in gynæceo magno habere putabat, illâ quidem sapienti conjuge Lakhmyâque* (sic) *totius orbis dominator.* M. Fauche's Latin version is more wonderful than the French: his ablative *Lakhmyâ*, is perfect.

Śl. 50. नीवारभागधेयोचितैर्मृगैः

This M. Fauche renders: "Gazelles, *dignes de leur étoile* et nourries ' · . de riz naturel."

Canto II. Śl. 36.

अमुं पुरः पश्यसि देवदारुं
पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःस्टतानां
स्कन्दस्य मातुः पयसां रसज्ञः ॥

Look yonder King! Before thee stands a Pine
Loved like a daughter by my Lord divine.
In its first youth 'twas gentle Umá's joy
To nurse it even as she nursed her boy.

M. Fauche's version is as follows: "Tu vois devant tes yeux ce *pin* dévadârou: il fut adopté pour fils par celui, sur les drapeaux duquel est point le taureau, ce Dieu à qui la mère de Skanda fit connaître la saveur du lait distillé de ses mamelles, semblables à des jarres d'or".

By this mistranslation, which it is painful to transcribe, this scholar who has given to the world a French version of the Kumára-Sambhava, represents Umá, the heroine of that poem, as nourishing, with the treasures of her own bosom, her divine husband Mahádeva.

In the 42nd Śloka *Tryambaka* is said in a note to be "Le Dieu aux trois yeux, un des noms de Çiva par allusion à sa faculte de voir sous le même regard le passé, le présent et l' avenir."

Śl. 57. एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ।

M. Fauche is not satisfied with giving the following mysterious rendering: "car ceux de ma sorte, qui ne s'inquiétent pas d'ensevelir avec eux les offrandes aux mânes de leurs aïeux, sont mis, on ne peut en douter, au nombre des mauvais Génies;" his evil Genius leads him to add in a foot note: "Nous ne saurions adopter le sens de M. Stenzler; qu'on juge le sien et le nôtre sur le texte de l'original: "Mei similes, dit il, haud sane solliciti sunt de libis istis, quæ, ex elementis facta, certæ morti obnoxia sunt."

But perhaps the most wonderful mistranslation is that in the 25th Śloka* of the 4th Canto: वाजिनीराजनाविधौ he translates thus: "au moment ou le roi, dans une oblation parfaite, lui sacrifia une cavale suivant les rites;" converting the well known martial ceremony of the Lustration of the Chargers into the hitherto unheard of Sacrifice of a mare! May the discovery of her nest reward and encourage this profound and accurate scholar!

## ON THE NYA'YA SYSTEM OF PHILOSOPHY.

*(Continued from page 25.)*

Hampered by the currency of a nomenclature founded on the correct analysis which they did not correctly apprehend, Locke and Stewart and their followers ended by being inferior logicians to the Bráhmans, whose logic offers a correct analysis so far as it goes, though they hold that to be one (as, in their physics they still do air or water) which a more searching analysis has discovered to be of two constituent parts. We take leave, in passing, to offer our thanks to Mr. Knighton for the very neat way in which he has shown that Bacon is not chargeable with holding the inaccurate opinions on this subject which have been imputed to him by those who, holding an inaccurate opinion themselves, thought that they were doing a service to Bacon in attributing it to him also. Mr. Knighton (in his lecture delivered to the students of the Hindú College, Calcutta, on "The utility of the Aristotelian Logic,") allots to Bacon the precise amount of blame due to his neglect in not guarding against the misapplication of so weighty an authority as his own, by directing his censures (at the commencement of the Organum) explicitly, instead of implicitly, against the abuse of a science, of the legitimate use of which he subsequently indicates his thoroughly correct appreciation. It would not be difficult to anticipate Bacon's reply to this residuary censure. Some other time we may throw it into the shape of a dialogue among the parties concerned.

With regard to the difference of opinion existing among thinking men in Europe as to the proper province of Logic, the title of Professor De Morgan's work, from which we gave extracts in an earlier Number, supplies the means of getting rid of all that is of any moment in the controversy. "Formal Logic" is an abstract Science, just as Arithmetic or Algebra is. Whatever therefore is not, as in Algebra, expressible by symbols, the meaning of which, provided it do not change without notice being given, does not require to be known, lies beyond the province of that distinctly bounded science to which exclusively Whately restricts the name of Logic —a name which, in order to accommodate the world in general and put an end to misconception, may advantageously, we think, retain the badge put upon it by De Morgan, though, to Whately's eye, it must always suggest a tautology, and, to his mind if not his lips, a protest against the inveterate abuse of language which rendered the tautology expedient. To state the case in homely language, the term had been so long ill-handled, that it indispensably required patching; and Professor De Morgan has patched it so neatly, that though *not* as good as new, it is, as patched, better than anything that could be substituted for it.

Before quitting the subject of Formal Logic, for which ("like an ass for a thistle," as a practical man might illustratively suggest,) we own a liking, let us advert to the question how it comes that, by the wise—that is to say, by the people who make money,—formal logic is scouted as an abstraction; whilst Arithmetic—equally abstract—is admitted as Gospel, "according to Cocker," by men who admit no Gospel of any other description. The answer "lies in a nutshell"—in the difference between the tangible, reddish-brown, marketable solidity of a half-penny; and the intangible, unmarketable, unprofitable nature of truth.

To return to our text-book—the author tells us that a man after having, to the satisfaction of his own mind, inferred the presence of fire from the perception of smoke, may wish to impart his conviction to another. In other words—having ascertained the truth as a logician, he may wish, as a rhetorician, to establish it to the satisfaction of somebody else. Here we step distinctly out of the province of Logic, and enter that of Rhetoric. In order to show that, in saying so, there is not here a case of "holding a candle to the sun," or a case where "there needs no ghost" to tell us what is told, we proceed to quote from Mr. Colebrooke's essay, of which he promised a continuation. The non-fulfilment of the promise (Miscellaneous Essays, vol i. p. 267) we lament.

Mr. Colebrooke says (p. 292 *ibid*) :—

"A regular argument, or complete syllogism *(nyáya)*, consists of five members *(avayava)* or component parts. 1st, the proposition *(pratijná)*; 2nd, the reason *(hetu* or *apadesa)*; 3rd, the instance *(udáharana* or *nidarsana)*; 4th, the application *(upanaya)*; 5th, the conclusion *(nigamana)*. Example :—

1.—This hill is fiery :
2.—For it smokes.
3.—What smokes, is fiery : as a culinary hearth.
4.—Accordingly, the hill is smoking :
5.—Therefore it is fiery."

"Some," Mr. Colebrooke adds, (alluding, in a note, to the followers of the *Mímánsá* school,) "confine the syllogism "*(nyáya)* to three members; either the first, or the "three last. In this latter form it is quite regular." Dr. Heinrich Ritter ("History of Ancient Philosophy," vol. 4, p. 365 of Morrison's translation) does not grant even thus much. Amidst all the perplexity that he is left in by the scantiness of the information at his command, "One point alone," to him "appears certain," in regard to the *Naiyáyikas*, and that is, "that they can lay but slight claims to accuracy of exposition. This," he conceives, "is proved clearly enough by the form of "their syllogism, which is made to consist of five in-"stead of three parts." Into this disparaging opinion Ritter may have been led by supposing that the example in Mr. Colebrooke's essay represented what answers

व्याख्यानां सारासारविवेकपूर्वकं गुणदोषप्रकाशनाय च यथाशक्ति पराक्रम्यते । आशास्महे चात्रातः सूक्तिमौक्तिकग्राहिणां बुद्धिमतां समादरम् । तत्रच सारासारविवेकपाटवप्रदानेन भगवता परमेश्वरेण वयमनुगृह्यामहइति बद्धाञ्जलिपुटाः सन्तः प्रार्थयमानाः सर्वज्ञं सर्वशक्तिमन्तं सर्वाभीष्टप्रदं श्रीमन्तं परमेश्वरमुपास्मह इति ॥

## ॥ श्रीपरमेश्वराय नमः ॥

### परिभाषेन्दुशेखरटिप्पणीसारासारविवेकः ॥

॥ प० ॥ नत्वा साम्बशिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ १ ॥

मङ्गलादीनीत्यादिवृद्धिसूत्रादिस्थभाष्येण प्रथनादिफलोद्देशेनानुष्ठेयतया बोधितं मङ्गलमाचरन् प्रेक्षावत्प्रवृत्त्युपयोग्यनुबन्धचतुष्टयमपि बोधयन्नुपश्लोकते । नत्वेति । जगज्जननकर्तृत्वप्रवृत्तिनिमित्तकेन प्रकृते धर्मपरेणाम्बापदेन बहुव्रीहौ साम्बपदस्य जगदुत्पादकत्वविशिष्टोऽर्थः । शेतेऽस्मिन् सर्वं जगदिति व्युत्पत्त्या शिवपदस्य जगल्लयाधिकरणं जगदव्यक्तमर्थः । अन्तर्भावितण्यर्थाद् बृहेर्मनिना व्युत्पन्नस्य ब्रह्मशब्दस्य जगत्पालकोऽर्थः । तथाच साम्बेत्यादिपदत्रयेण जगदुत्पत्तिस्थितिलयकारणस्य परमेश्वरस्य नतिकर्मत्वं बोधितम् । नागेशइति । आत्मनामेत्यादिनिषेधात् स्वनामोल्लेखोऽत्रायुक्तइति तु न शङ्क्यम् । तन्निषेधउच्चारणार्थस्य ग्रहेरुपादानेन तस्योच्चारणविषयकत्वेऽपि लेखने दोषप्रतिपादकत्वाभावात् । अतएव गोनर्दीय आह भट्टोजिदीक्षितकृतिरित्यादि तत्रतत्र ग्रन्थकृतां लेखनं शैलीपरिशीलितं लक्ष्यते । कुरुतइति । बालसमवेतसुखबोधजन्यापूर्वस्यैव प्रकृतक्रियाफलत्वेनाभिप्रेततया तस्य कर्तृगामित्वादात्मनेपदम् । सुधीरिति । अनेन स्वस्य ग्रन्थकर्तृत्वसामर्थ्यं सूच्यते । बालानां भाष्यकैय्यटाद्याकरग्रन्थतः परिभाषार्थनिर्णयासमर्थानां भाष्यादितः परिभाषार्थनिर्णयायासासहिष्णुत्वे सति परिभाषार्थग्रहणशक्तिमत्त्वं तत्त्वमिति पर्यवसितम् । सुखबोधाय स्तोकायासेनैव निखिलपरिभाषार्थतत्त्वबोधाय परिभाषेन्दुशेखरं ग्रन्थम् । अत्र बालानामित्युक्त्या निरुक्तपरिष्कृतबालत्वविशिष्टानामधिकारित्वं सुखबोधयेत्युक्त्या च तादृशसुखबोधस्य प्रयोजनत्व परिभाषेन्दुशेखरमित्युक्त्या परिभाषार्थनिर्णयस्य विषयत्वं चेत्यनुबन्धत्रितयं सूचितम् । सम्बन्धरूपानुबन्धश्च स्फुटत्वान्नोक्तः । अनुबन्धत्वं च प्रवृत्तिप्रयोजकज्ञानविषयत्वम् । अधिकारिणः प्रवृत्तिप्रयोजककृतिसाध्यत्वप्रकारकज्ञानविषयतया प्रयोजनविषययोश्च तादृशेष्टसाधनत्वप्रकारकज्ञानविषयीभूततया च लक्षणसमन्वयः ।

यत्त्वत्र मन्युदेवेन ।

स्वनामग्रहणस्य स्वकीर्त्यनुवृत्तिफलकतया शिष्टाचारानुगृहीतत्वात् तद्बोधकानुमितस्मृतिवाक्येन विशेषेण सामान्यस्यास्य निषेधवाक्यस्य सङ्कोचादस्य स्वकीर्त्यनुवृत्तिप्रयोजकस्वनामग्रहणातिरिक्तविषयकत्वं कल्प्यतइति नात्र दोषइत्युक्तम् ।

तन्न सुन्दरम् ।

विषयभेदेन बाध्यबाधकभावासम्भवात् । तथाहि । आत्मनाम न गृह्णीयादितिनिषेधेन हि स्वनामग्रहणस्य दुःखसाधनत्वं बोध्यते नतु स्वकीर्त्यनुवृत्त्यप्रयोजकत्वमपि निरुक्तशिष्टाचारानुमितस्वकीर्त्यनुवृत्तिकामः स्वनाम गृह्णीयादितिवाक्येन तु स्वनामग्रहणस्य स्वकीर्त्यनुवृत्तिसाधनत्वमुच्येत नतु दुःखाजनकत्वमपि । नहि स्वकीर्त्यनुवृत्तिप्रयोजकत्वदुःखजनकत्वयोरस्ति कश्चिद् विरोधः न चासति विरोधे बाध्यते केन कोऽपि । दृष्टान्तेऽपि क्रतूपकारकत्वदुःखजनकत्वयोर्विरोधाभावेन भूतहिंसानिषेधकवाक्ये प्रकरणान्तरस्थेनाग्नीषोमीयपश्वालम्भनबोधकवाक्येन सङ्कोचाभावएव वक्तुमर्हः । रोगविशेषमपचिकीर्षोः सुरापानादिविधायकेन चिकित्साशास्त्रीयवाक्येन धर्मप्रवर्तकमन्वादिसुरापाननिषेधकवाक्यार्थबाधाभाववत् । अतएव यागीयपशुवधजन्यदुरितदूरीकरणाय प्रायश्चित्ताचरणमपि शिष्टव्यवहारविषयो दृश्यते ।

वस्तुतस्तु स्वकीर्त्यनुवृत्त्युद्देशेन स्वनामोच्चारणस्य शिष्टाचारविषयत्वमेवाप्रामाणिकमिति ध्येयम् ।

यदपि तेनैवोक्तम् ।

निषेधोऽयं पारिभाषिकनामविषयको न यौगिकनामविषयकः । नागेशइति हि यौगिकं नामेति न दोषइति ।

तदपि न ।

पारिभाषिकनामान्तरानुपलम्भात् । अनेनैव सर्वत्र व्यवहारात् सङ्कोचे प्रमाणाभावाच्च ।

यदपि राघवेन्द्राचार्याः कूपखानकन्यायेन समाहितवन्तस्तदपि न मनोहरम् ।

मङ्गलस्य शिष्टाचारविषयत्वहेतुकानुमानप्रमितवचनेन ग्रन्थसमाप्त्यादिप्रतिबन्धकदुरितनिवर्तकत्वस्य क्लृप्तत्वेऽपि स्वनामग्रहणादिजन्यदुरितनिवर्तकत्वे मानाभावात् । अतएव यागीयपशुहिंसादिजन्यदुरितदूरीकरणाय यागान्ते प्रायश्चित्तान्तराचरणं शिष्टानां सङ्गच्छते । अन्यथा यागजन्यापूर्वेणैव तद्दूरीकरणसम्भवे तदाचरणं निष्फलमेव स्यात् ।

यदप्यत्र मन्युदेवभीमाचार्यौ ।

आत्मानमात्मना हन्तीत्यादावन्तःकरणशरीराद्युपाधिकृतभेदपरिकल्पनवदहं करोमीत्यनुक्त्वा नागेशः कुरुतइत्युक्त्या वाक्यप्रयोक्तृत्वग्रन्थकर्तृत्वरूपोपाधिकृतभेदपरिकल्पनान्न निषेधविध्युल्लङ्घनमित्याहतुः ।

तदप्यसन्तोषकरम् ।

एवंविधोपाधिकृतभेदपरिकल्पनेन विधिनिषेधाप्रवृत्तिकल्पने देवदत्तेन हतेऽपि गवां सहस्रे नाहं हन्ता किन्तु देवदत्तइति ब्रुवाणस्य दुरितसंसर्गित्वानापत्तेः । निषेधविधिप्रायश्चित्तविधीनां निर्विषयत्वप्रसङ्गाच्च ।

यदपि च भीमाचार्यः ।

घोषवदादीत्यादिविधिबोधितनामग्रहणएव स निषेधः । अतएव निषेधे श्रेयस्कामइति विशेषणं सङ्गच्छते । इत्याद्यवादीत् ।

तदप्यसत् ।

निषेधशास्त्रघटकनामपदार्थे विधिबोधितनामभिन्नातिरिक्तत्वेन सङ्कोचे प्रमाणाभावात् । निषेधस्य सामान्यतो नामग्रहणविषयकत्वेऽपि श्रेयस्कामइतिविशेषणवैयर्थ्योपपादनस्य दुर्निरूपत्वाच्च ।

यदपि च सएव ।

आपत्कालादिष्वित्यादिपदेन ग्रन्थारम्भसन्ध्यावन्दनप्रोषिताभिवादनानि गृह्यन्तइत्याह ।

तदपि न चारुतरम् ।

सन्ध्यावन्दनाभिवादनयोर्मन्वादिवाक्यान्तरैकवाक्यतयादिपदजन्यबोधीयतात्पर्यविषयत्वकल्पनेऽपि ग्रन्थारम्भस्य तत्त्वे मानाभावात् । गोनर्दीय आहेत्यादिषु तटस्थोक्तित्वस्यापि सम्भवात् ।

यदपि ।

भाष्यकारस्यापि मुनित्वाविशेषेण तदुक्त्या षोडशिग्रहणाग्रहणयोरिव पर्यायपरिकल्पनमित्यपि सएव समादधौ ।

तदप्यकिञ्चित्करम् ।

तदुक्तेः शब्दसाधुत्वानुशासनप्रवृत्तिनिवृत्त्युपयोगित्वेऽपि धर्मशास्त्रप्रवृत्तिनिवृत्तिप्रयोजकत्वे प्रमाणाभावात् । मन्वादीनामेव तत्र प्रामाण्यात् । अन्यथा सीतायाः पतये नमः क्लीबे च पतिते पतावित्यादिमुनिवाक्यानुमितवाक्येन घिसंज्ञाविधायकशास्त्रस्यापि पर्यायत्वापत्त्या लोकेऽपि तादृशशब्दानां साधुत्वापत्तिः । अतएवाशुद्धशब्दोच्चारणेऽपि तपोमाहात्म्येन मुनीनां न दोषइत्येवोक्तं शेखरे । एवमत्र महाभाष्यकारस्य स्वनामग्रहणे दोषाभावकल्पनेऽपि तत्प्रयोगस्यात्मनामग्रहणे दोषाभावइत्येतदर्थकवचनानुमापकत्वस्य दुर्वचत्वादिति दिक् ।

काशीस्थराजकीयपाठशालायां
धर्मशास्त्राध्यापको राजारामशास्त्री
सांख्यशास्त्राध्यापकसहकारी बालशास्त्री

---

॥ श्रीगणेशाय नमः ॥

गौतमेन महर्षिणा प्रणीतस्य न्यायशास्त्रस्य सुपरिष्कृतविचारेण व्यवस्थापितानां सिद्धान्तनिर्मलरत्नानां प्राप्तिस्थानभूततयाऽऽकरग्रन्थमूर्द्धन्यो न्यायचिन्तामणिर्नाम गङ्गेशोपाध्यायेन मिथिलादेशालंकरणभूतेन प्रणीतः प्रथमं चक्रवर्तिप्रगल्भपक्षधरमिश्रसार्वभौममथुरानाथप्रभृतिभिर्वङ्गमैथिलपण्डितैर्विस्तृतं व्याख्यातः पश्चाद् रघुनाथशिरोमणिना नैयायिकप्रवरेण भवानन्दजगदीशगदाधरादिमहानैयायिकव्याख्याततया मणिदीधितिनामिकया व्याख्यया विशदीकृत इदानीन्तननैयायिकपण्डितैः पुस्तकाभावात् कार्त्स्न्येन न परिशीलितः क्वचिदेव देशे कस्यचिदेव पण्डितस्य पुस्तकालय उपलभ्यत इत्युत्तमतमोऽप्यत्यन्तविरलप्रचारः संजातः ।

सोऽयं निबन्धराजो दशसहस्रश्लोकमितोऽप्यल्पेनैवांशेन बाधान्तानुमानखण्डात्मकेन कलिकातानगरे प्रकाशं प्राप्य तत्रत्यानामनुमानभक्ततार्किकाणां महान्तमुपयोगमसाधयत् ।

अतोऽहं काशीविद्यासुधानिधिचकोरान् प्रार्थये तैरस्य ग्रन्थस्य मुद्राद्वारेण प्रकाशने प्रयतितव्यमिति । अस्मिंश्च पत्रे तस्य प्रकरणशोऽपि निवेशो दुःशकोऽतिविततत्वात् । परन्तु यदि केऽपि भारतीयविद्यारसिका एतद्ग्रन्थसुक्षेत्रसंस्करणे बद्धपरिकराः स्युस्तर्हि पुस्तकशोधनटिप्पणादिनाध्ययनाध्यापनादिनाच विद्वदिष्टेन कर्मणा काशीस्थजनोऽपि तेषां सहायतां कर्तुमुत्सुको वर्तत इति शम् ।

विट्ठलशास्त्री

न्यायचिन्तामणौ ये विषया विवेचितास्ते श्रोतृजनबोधाय प्रकाश्यन्ते ।

---

चिन्तामणिप्रकरणसूचीपत्रम् ।

प्रत्यक्षखण्डे

१ प्रत्यक्षविशेषे सन्निकर्षविशेषस्य कारणतास्थापनम्

२ विषयालोकसंयोगस्यालोकोद्भूतरूपस्य चक्षूरूपस्य वि-
षयोद्भूतरूपस्य महत्त्वस्य प्रत्यक्षकारणत्ववर्णनम्

३ वायुर्न प्रत्यक्षः

४ सुवर्णं प्रत्यक्षं तैजसंच

५ मन इन्द्रियमणुच

६ वर्तमानं ज्ञानं मानसम्

७ प्रत्यक्षं द्विविधम्

८ प्रकारो द्विविधः

९ तत्तास्वरूपं स्मृतिप्रमात्वयाथार्थ्ययोर्विचारः

अनुमानखण्डे

व्याप्तिः

व्याप्तिग्रहोपायः

उपाधेर्लक्षणं भेदो दूषकताबीजमाभासाश्च

पक्षतालक्षणम्

विशिष्टज्ञानं हेतुर्नतु ज्ञानद्वयम्

परामर्शः कारणं नतु लिङ्गम्

केवलान्वय्यनुमानम्

केवलव्यतिरेक्यनुमानम्

अर्थापत्तिर्न मानान्तरम्

न्यायतदवयवलक्षणम्

हेत्वाभासानां लक्षणं भेदाः

ईश्वरानुमानम्

शक्तिर्न कारणत्वादधिका

मोक्षलक्षणम्•

ज्ञानान्मोक्षः

उपमानखण्डे

सादृश्यमतिरिक्तमिति पूर्वपक्षः

नातिरिक्तमिति सिद्धान्तः

उपमानं न प्रमाणान्तरमिति पूर्वपक्षः

तत् प्रमाणान्तरमिति सिद्धान्तः

उपमानलक्षणम्

शब्दखण्डे

शब्दलक्षणम्

शब्दप्रामाण्ये

सौगतमतम्

वैशेषिकमतम्

स्वमतम्

जरन्मीमांसकमतम्

प्राभाकरमतम्

आकाङ्क्षा

योग्यता

आसत्तिः

तात्पर्याधीनं शब्दप्रामाण्यम्

वेदस्य पौरुषेयत्वम्

वेदलक्षणम्

पौरुषेयत्वलक्षणम्

शब्दानित्यत्वम्

वेदानां प्रवाहाविच्छेदो नोच्छेददर्शनात्

उच्छिन्नत्वेनाभिमतो वेदो नित्यानुमेयः

प्रलयस्थापनम्

प्रवर्तकज्ञाननिरूपणम्

शक्तिवादे

कार्यान्विते

अन्विते

जातौ

जातिविशिष्टव्यक्तौ

योगरूढविचारः

साधुत्वविचारः

लक्षणा

समासविचारः

आख्यातविचारः

उपसर्गद्योतकताविचारः

---

॥ श्रीः ॥

कुमारसंभवोत्तरखण्डवर्णयितृपण्डितान् प्रति लेखोऽयम् ॥

यावत्पर्यन्तं कुमारस्य संभवस्तावत्पर्यन्तमेव कुमारसंभवाख्यं काव्यं ज्ञेयम् । सप्तमसर्गान्तं न तु महादेवक्रीडाकुमारोत्पत्तितारकासुरविजयान्तं सप्तदशसर्गान्तम् । अष्टमसर्गतोऽधिकं यत् तत् सर्वं केनचिद्दाक्षिणात्येन कल्पितम् । साहित्यग्रन्थेष्वपि कुत्रापि प्रकाशादिषु तदुदाहरणं नेति क्व कालिदासालङ्कारादिच्छाया क्व चाष्टमसर्गादिरचना बहुधा दिग्विजय-कारकमाधवाचार्येत्यभिनवकालिदासेति स्वसंज्ञामभिकथयत एव बहुधा छायास्ति । यदि तारकासुरविजयान्तं तत् काव्यं भवेत् तदा तारकविजये-त्याख्यां तारकवधाख्यां वा शिशुपालवधवल्लभेत वृत्तान्तनाम्ना काव्यं कविनाम्ना चेति श्रव्यकाव्यलक्षणे सम्यगुक्तं साहित्यदर्पणादौ । तारकव-धान्तं यदि तत् काव्यं स्यात् तदावश्यमेव तारकवधाख्यां लभेत कुमार-संभवमात्रं तु यावता तदुत्पत्तिसंभव इति हरविवाहान्तं सप्तमसर्गान्तमेव कुमारसंभवेत्याख्यां लब्धुमर्हतीति यावत्पर्यन्तं कुमारस्य संभवस्तावतैव तादृशी संज्ञा घटते हरविवाहेनैव च तत्संभव इति सप्तमसर्गान्तमेव कुमारसंभवकाव्याख्या जातेति । सप्तमसर्गतोऽधिके च तादृशे हरसंभो-गतारकवधादिवर्णनपर्यन्ते यदि तत् काव्यं स्यात् तदा च तारकवधेत्या-ख्यां शिशुपालवधवल्लभेत । संभवश्च कुमारस्य तावतैव हरविवाहेनेति तदन्तस्य कुमारसंभवेत्याख्या युक्ता घटत इति । तथैव मल्लिनाथेन तावत्पर्यन्तमेव विवृतमस्ति । मल्लिनाथात् पश्चाच्च केनाप्याधुनिकेनाष्ट

मसर्गतोऽधिकरचना या सा कृतेति स्पष्टमेव । तादृशव्याकरणव्युत्पन्नसप्तमसर्गान्तरचना क्व तादृशान्वितवाक्यरचना च क्व सप्तमान्ततादृशवर्णायथोचितसंघटना चेति सहृदयसंवेद्यमेतत् । अत एव चाष्टमसर्गतोऽधिकसर्ग- [illegible] भिनवव्याख्यायामेकं यत् पद्यं तत्त्वन्यग्रन्थीयत्वेनापि तादृशपद्यस्य तत्रोदाहरणं स्यात् । यावत् कालिदासकाव्यव्याख्यातृमल्लिनाथेन सप्तमसर्गान्तमेव व्याख्यातं नैव ततोऽधिकस्य क्वापि चर्चा शङ्का वा तेन धृतेति । यदि कालिदासकृतं सप्तमसर्गतोऽधिकं स्यात् तदा व्याख्यायेत ध्रुवं तेनेति । तत्समये च सप्तमसर्गतोऽधिकचर्चैव न स्थिता । मल्लिनाथपश्चादेतावती रचनाधुनिककृतेति । तदिदं काव्यत्रयं विक्रमादित्यनवरत्नमध्यस्थकालिदासेन ज्योतिर्विदाभरणग्रन्थे लिखितमस्तीति । विक्रमशकवर्षे चैतावति गते २४ सतीति लिखितं ज्योतिर्विदाभरणे । नाटकादिनलोदयादिऋतुसंहारादिग्रन्थास्तु कृता भोजराजनवरत्नस्थकालिदासेनेति । नवरत्नपण्डितसंग्रहो विक्रमादित्यस्यापि भोजस्यापि तथाऽकबरस्यापीति । एवं वाराहादिभेदोऽपि वर्तते । संहितायां ह्ययनांशाङ्कभेदादिति । एवं कालिदासत्रयं तत्तन्महाराजत्रयनवरत्नत्रयपण्डितजनसंकलनादिति । अकबरकालिदासकृतार्या- [illegible] काव्यप्रकाशविशेषरचनाविशेषश्चेति । एकेन कालिदासेन रचितं दृश्यं श्रव्यं रघुवंशादिकमपीति यल्लिखितं तदपि न सत्यम् । दृश्यकाव्यनाटकनाटिकादिऋतुसंहारनलोदयादिभोजकालिदासकृतिरिति ज्योतिर्विदाभरणे काव्यत्रयेतिलेखेन विक्रमनवरत्नस्थकालिदासीयं काव्यत्रयं ज्योतिर्विदाभरणं चेति । भोजनवरत्नस्थकालिदासस्य दृश्यकाव्यनाटकनाटिकादिश्रव्यनलोदयादिऋतुसंहारान्तानि काव्यानि चेति । अकबरीयनवरत्नस्थकालिदासेन [illegible] काव्यप्रकाशविशेषभङ्गिरचनादि चेति कालिदासत्रयम् ॥ शि० ॥

---

# THE SÁHITYA-DARPAṆA,

OR

# MIRROR OF COMPOSITION.

*(Continued from page 56.)*

TEXT.

No. 642. When a sentence is formed of words which are the same in a variety of tongues, it is named Bháshá-sama, or Linguistic Sameness.

COMMENTARY.

*a.* For instance *this stanza* of mine :—

मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे ।
विरसासि केलिकीरे किमालि धीरे च गन्धसारसमीरे ॥

Manjula-mani-manjíre kala-gambhíre vihára-sarasí-tíre
Virasási kelikíre kimáli dhíre cha gandhasára-samíre ! "

(Dost thou, fair friend, take no delight *now* in the charming anklet of gems sounding with deep melody, in the border of the pleasure-lake, in thy fondled parrot, or in the gentle breeze wafting the perfume of sandal ?)

This stanza is the same in the Sanskrit, Prákrit, Śaurasení, Práchí, Avantí, Nágara, and Apabhranśa *tongues.*

*b.* In such a sentence however as "Sarasam kaiṇa kavvam" (Sweet is the poem of the poet), though the word *sarasam* is the same in Sanskrit and Prákrit, it is no ornament, for the sameness does not pervade the whole sentence and is therefore not striking.

TEXT.

No. 643. When more than one sense is conveyed by *distinct* words coalescing *into indentity*, it is termed Paronomasia or Coalescence (Ślesha). And this is eightfold according to the coalescence of Letters, Affixes, Genders, Verbal Bases, Inflected Words, Inflections, Numbers and Tongues.

COMMENTARY.

*a.* For examples in their order :—

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥

" Pratikúlatámupagate hi vidhau
Viphalatwameti bahusádhanatá
Avalambanáya Dina-bharturabhún
Na patishyatah kara-sahasramapi."

(When Fate (or the moon) stands in opposition, an abundance of resources becomes fruitless: the Lord of day while falling, could not be held up by a thousand rays.)

Here in *vidhau* there is a coalescence of the LETTERS *i* and *u* of the words *vidhi* (fate) and *vidhu* (moon), these letters being changed into *au in the locative.*

*b.* किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः ।
कान्तोत्सङ्गजुषां नूनं सर्व एव सुधाकिरः ॥

" Kiraṇá Hariṇánkasya dakshiṇaścha samíraṇah,
Kántotsanga-jushám núnam sarva eva sudhákirah."

(The beams of the moon, the breeze of the Southern quarter—all shed ambrosia to those who are seated in the lap of their beloved.)

We have here *the coalescence* of the *kwip* and *ka* AFFIXES* in *sudhákirah* (ambrosia-shedding), *kirah as plural being formed by the addition of the former to the verbal root krí, and, as singular, by that of the latter.* Besides, there is also here a coalescence of NUMBERS from the singular and plural numbers assuming the same form in *sarva* † and *sudhákirah.*

*c.* विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी ।
तव दत्तां सदा मोदं लसत्तरलहारिणी ॥

" Vikasan-netra-nílábje tathá tanvyáh stanadvayí
Tava dattám sadá modam lasat-tarala-háriṇí."

(Those charmingly bright and tremulous eyes of the slender-bodied *lady* that shine like blue lotuses, and those breasts with the bright and tremulous necklace—may they ever be a source of delight to thee ! )

Here we have a coalescence of the neuter and feminine genders in *the epithet lasat-tarala-háriṇí* which, as neuter dual, applies to *vikasan-netra-nílábje* (eyes shining like blue lotuses) ; and, as feminine singular, to *stanadwayí* (couple of breasts ). There is also a coalescence

---

* Both of these form participal adjectives.

† *Sarve* (plural) and *sarvah* (singular) coalesce into *sarva* before *eva,* according to the rules of 'Sandhi'.

of numbers *in the said word and dattám, which latter in the "Parasmai-pada" is the dual imperative of dá (to give,) and, in the "Atmane-pada" the singular imperative of the same verb.*

*d.* अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः ॥

"Ayam sarváṇi śástráṇi hṛidi jṇeshu cha vakshyati,
Sámarthyakridamitráṇám mitráṇáncha nṛipátmajah."

(This prince will carry all scriptures in his heart and expound them to the wise, will give strength to his friends and destroy the power of his foes.)

Here we have a coalescence of the BASES *vah* (to cut) and *vach* (to tell or expound) in *vakshyati*, and of *kṛit* (to cut) and *kṛi* (to do) in *sámarthyakṛit* (creator, or destroyer of strength.)

*e.* पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥

"Prithukártaswarapátram,
Bhúshitanihśeshaparijanam deva,
Vilasatkareṇugahanam,
Samprati samamávayoh sadanam."

(Our houses, O king, are now *literally* alike—*mine* filled with the distressful cries of children, *thine* with vessels of massive gold: *mine* with the whole family lying on the ground, *thine* with unnumbered attendants decorated; *mine* with holes filled with heaps of dust, *thine* thronged with majestic elephants.)

Here there is a coalescence of INFLECTED WORDS *(pada)*, not of mere bases, for when the compounds are analysed *in relation to either of the two meanings*, the inflections and composition *(samása) in each compound* are, *in the case of one sense*, different *from those in the case of the other: that is to say not only do different bases coalesce into identity but different case-endings and different varieties of Composition.**

*f.* And so—

नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः ।
सदृशे वनवृद्धानां कमलानां तदीक्षणे ॥

"Nítánámákulíbhávam lubdhair bhúri-śilímukhaih
Sadṛiśe vana-vṛiddhánám kamalánám tadíkshaṇe."

[Her eyes are like lotuses full grown in water, agitated by greedy swarms of bees; or (as the same words import) they are like the eyes of wild deer, overwhelmed with a multitude of arrows *shot* by the *eager* hunters.]

—Here, although there is a coalescence in the words *lubdha* (greedy or hunter) and *śilímukha* (bee or arrow), there is *admitted* the coalescence of BASES *only*, because of the sameness of the inflections in either of the coalescent words. Otherwise, *i. e. if we do not recognize a coalesence of bases in such cases as this,* we should have to hold a coalescence of inflected words in every case.

*g.* सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः ।
नयोपकारसाम्मुख्यमायासि तनुवर्त्तनम् ॥

"Sarvasvam Hara sarvasya tvam bhavachhedatatparah
Nayopakárasámmukhyamáyási tanuvartanam."

[O Hara (Śiva) thou art my all, and busy art thou in liberating all creatures from this *miserable* mundane existence; and thou manifestest thyself in a corporeal form, the very presence of virtue and beneficence.*]

Here in the case of one sense '*Hara*' is an address of Śiva and the inflection is nominal; in the other case it is formed from the root *hṛi* (to plunder) by a verbal inflection So there is here a coalescence of INFLECTIONS; similarly in *bhava* &c. And this sort, though included under the coalescence of AFFIXES, is separately mentioned from its peculiar strikingness, arising from the circumstance of its belonging to inflected forms of nouns and verbs which cannot be obtained by the addition of other affixes *than those that take the name of inflection.*

*h.* महदे सुरसन्धम्मे तमव समासङ्गमागमाहरणे ।
हर वहुसरणं तं चित्तमोहमवसर उमे सहसा ॥

"Mahade surasandhamme
Tamava samásangamágamáharaṇe,
Hara bahu-saraṇam tam
Chitta-mohamavasara Ume sahasá."!

(O thou light bestowing Umá, foster in me that fondness for the acquirement of knowledge, wished for *even* by the gods, and destroy that mental delusion that, on every occasion, creeps through many *an object.*)

*As Mahárásht়rí this is turned into Sanskrit thus:—*

मह्यं देहि रसं धर्म्मे तमोवशामाशां संसाराद्धर नः ।
हरवधु शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥

(Give me, O consort of Śiva, a love of virtue and destroy our fondness for the world that is born of ignorance. Thou art my refuge. O Goddess! May my mental darkness be at once removed!)

Here there is a coalescence of *the two distinct tongues,* Sanskrit and Mahárásht়rí.

TEXT.

No. 644. This (Paronomasia), again, is threefold *viz.,* (1) that 'with division,' (2) 'without division' and (3) consisting of both these sorts *combined.*

COMMENTARY.

*a.* These three divisions are to be recognized, according to propriety, under the said eight varieties. Or

* For instance, the Bahuvríhi and Tatpurusha in prithukártaswarapátram

* For men are thus enabled to purify themselves by contemplating thee, who in thy true spiritual nature art beyond human conception. The following amiable advice of a demon to his son is the other import of the stanza:—

"Plunder thou the whole property of all, let murder be thy chief business, drive off benevolence from thy presence and carry on a trade of *perpetual* persecution."

we may exemplify *the first two sorts in the following stanza* :—

> येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
> यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गांच योऽधारयत् ।
> यस्याहुः शशिमच्छिरो हर इति स्तुत्यंच नामामराः
> पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥

Yena dhwastamanobhavena Balijitkáyah purástríkṛito
Y[illegible]bhujangahára valayo Gangáncha yo 'dhárayat
Yasyáhuh śaśimachchhiro Hara iti stutyancha námámaráh
Páyát sa swayamandhakakshayakaras twám sarvadomádha-vah."

(May the Lord of Umá ever preserve thee!—He who destroyed the demon Andhaka and the deity of love, who of old made a weapon of Vishṇu's body, who wears huge serpents for his necklace and bracelets, who bore on his head Gangá *descending from the heavens*, whose head the deities declare ornamented with the moon and whose adorable name they celebrated as 'Hara.')*

Here there is a 'coalescence with division' in *yena dhwastamanobhavena* (which, in the case of the other sense, is to be [illegible] divided thus—*yena dhwastam anah abhavena*); and one 'without division' in *Andhaka-kshaya-karah*. The third variety consisting of those 'with division' and 'without division'—for these may be combined in the same instance—is not separately exemplified, for fear of swelling the work.

*b.* Here some say—the only case of the Paronomasia of words is the 'Paronomasia with division' wherein two words that are distinct, as being pronounced by distinct efforts through a difference of accent in the shape of the acute or the like, coalesce in analogy to the lac and wood. Whilst that 'without division' is no other than a Paronomasia of Sense. In this the meanings coalesce, or are bound together, analogously to a couple of fruits supported by the same footstalk; for the word, *in relation to both the senses*, is one and the same, as being pronounced by one and the same effort, from the identity of the accent. *And our opinion that these two kinds, with and without division, are Paronomasiæ respectively of word and sense is reasonable indeed,* for an ornament is the ornament of what it is set or founded on: the ornamented and the ornament being recognized, as in every day life, as the place and what is placed."

*c.* This others do not admit. For here, *in the province of poetical criticism*, the division of Suggestion, Subordinate Suggestion (see Chap. IV), Faults, Excellences and Ornaments as belonging to a word or sense is regulated by their comformity with the word or sense in their presence and absence, or, in other words, by the circumstance of their appearing and disappearing with the word or sense. Nor is the word *Andhaka*, for instance, in *Andhaka-kshaya-karah** indentical *in conveying the two meanings of the demon so called and the Yádava family*, for it is a maxim that a word differs from a difference of sense. Besides, since in the case *of a 'Paronomasia without division'* it is the word that is suggested by the poet's genius as the principal means of producing a striking effect, it is no other than an ornament of word. And this strikingness is wanting in a composition of two dissimilar words, and it is the strikingness that is reckoned as an embellishment. If the figure in question be held an ornament of sense because of its having an eye to the sense, then even such ornaments as Alliteration and the like would have to be ranked as ornaments of sense, for they too, as being intended for *the heightening of* the flavour, look to the sense. If you count it an ornament of sense, from the word's being pronounced by one and the same effort, then in such a case as *'Pratikúlatámupagate hi Vidhau'* (see § 643. *a*) you would be forced to admit an ornament of sense notwithstanding the difference of words. Hence both the cases *of Paronomasia, with and without division*, must be *classed as* ornaments of word.

*d.* Where however the Paronomasia is not destroyed even by an exchange of words, there it is a case of Paronomasia of sense; as—

"From a slight cause they rise and from a slight cause they fall: O how exactly similar are the conditions of the wicked and the extremity of a balance."

P. D. M.

*(To be Continued.)*

* A similar representation of Vishṇu is the other import, which need not be rendered here.

* See the foregoing example.

## THE ETERNITY OF SOUND;
### A DOGMA OF THE MIMANSA.

By Dr. Ballantyne.

[From the Benares Magazine, August, 1852.]

At page 305, vol. 1, of Mr. Colebrooke's *Collected Essays*, where he is treating of Jaimini's system of philosophy, the *Mímánsá*, we read as follows:—"In the first chapter of the lecture occurs the noted disquisition of the *Mímánsá* on the original and perpetual association of articulate sound with sense." What this dogma means, and why the question forced itself upon Jaimini at the opening of his work, we here propose to consider.

"The object of the Mímánsá"—to employ the words of Mr. Colebrooke,—"is the interpretation of the *Vedas*." As he adds,—"Its whole scope is the ascertainment of duty." This is declared in the opening aphorism, which, interspersing an explanatory comment, we may render as follows:—"Well, then, [O student, since thou hast read the *Vedas* while residing in the family of thy preceptor,] therefore a desire to know *Duty* [which know-

ledge, without further aid, thou wilt scarcely gather from the texts with which thy memory is stored, ought now to be entertained by thee]."* But what do you *mean* by "Duty?"—enquires the student. To expound the entire import of the term would be difficult, if not impossible, at the outset; so Jaimini, following the recognised method of laying down a "characteristic" *(lakshaṇa)*, by which the thing, though not fully described, may be securely *recognised*, declares as follows:—"A duty is a matter which may be recognised [as a duty] by the instigatory character [of the passage of Scripture in which it is mentioned]."† As Mr. Colebrooke observes—"Here *duty* intends sacrifices and other acts of religion ordained by the *Vedas*. The same term *(dharma)* likewise signifies *virtue*, or moral merit; and grammarians have distinguished its import according to the gender of the noun. In one (the masculine), it implies virtue; in the other (neuter), it means an act of devotion. It is in the last-mentioned sense that the term is here employed." We may add, in explanation of this, that the discussion of the gender of the word was provoked by Jaimini's choosing to employ the masculine form (as may be observed in the original aphorism given in the note), instead of the neuter. To the query, why Jaimini was guilty of this grammatical solecism, one of his commentators coolly replies,—"take [and be content with] as the reason thereof, the fact that he [Jaimini] is a great sanctified sage,—[and therefore entitled to give the word what gender he pleases]." Arguments of this lofty Pope Hildebrand order, which were doubtless rolled out with unction *et ore rotundo*, in the palmy days of Hinduism, the Bráhmans now-a-days are most amusingly ashamed of;—those of them, at least, who are not prepared to join cordially in a broad grin over the "bumptiousness" of the pretension.

Whilst Jaimini contents himself with giving, in the first instance, a 'characteristic' by which *duty* may be recognised, his commentator supplies an account of its *nature*,—i. e. what constitutes that a Duty to which the characteristic in question belongs. According to him, what constitutes anything a Duty is "the fact of its not producing more pain than pleasure—[or, in other words, its being calculated to produce more pleasure than pain]." The agreement of this with the Benthamite definition of the Useful is noticeable. Another thing which we wish here to take an opportunity of noticing, is a correspondence, in point of terminology, between the systems of the East and of the West. That which constitutes anything what it is, was called by Plato its *Idea*. Aristotle disliked the term; and he sought to convey the same meaning by a term which the Schoolmen rendered *Form*. Bacon adopted the word *Form* in this sense, and the exactly corresponding Sanskrit word—viz. *swarúpa*—is the one here employed, and generally employed, to convey the notion of what is the abiding cause of a thing's being what it is. When a Hindu writer, at the opening of a treatise on anything, says "I shall declare the *lakshaṇa* and the *swarúpa* of the thing in question," he means to say, that he will tell first how we are to recognise the thing as *the* thing that we are talking about, and that he will tell next—*all about it*. The *lakshaṇa* is the mark on the sealed package, by which we recognise it among other packages;—the *swarúpa* is the contents of the package. The reason why we think it worth while to advert to the import of the phraseology in question is this, that we ourselves once took a good deal of pains unprofitably to reconcile these two terms with the "genus" and the "specific difference" which together make up the "definition" according to European logic. The one set of terms and the other, however, belong to different aspects of thought.

To return to Jaimini:—having intimated that the cause of our knowing anything to be a duty was simply an instigation, in the shape of a passage of Scripture holding out the promise of a reward for the performance of a given act, he next thinks proper to show how nothing else *could* be the evidence for it. "An examination," he says, "of the cause of [our recognising] it [—viz. a duty,—is to be made];"*—and he explains, as follows, how our organs of Sense cannot supply the evidence of it. "When a man's organs of sense are rightly applied to something *extant*, that birth of knowledge [which then takes place] is Perception,—[and this Perception is] *not* the cause [of our recognising a duty], because the apprehension [by the senses] is of what is [then and there] existent, [—which an act of Duty is *not*]."† Since Perception is not the evidence of a thing's being a duty, it follows, according to the commentator, that Inference, or Analogy, or anything else, "which has its *root* in Perception," cannot be the evidence; and, consequently, precept—express or implied—is the only evidence of a thing's being a duty.

But here the doubt presents itself, whether the evidence in favour of a thing's being a duty may not be as fallacious as is the evidence of the senses. According to the objector,—"after words and meanings have presented themselves, since the connection between the two is one devised by *man*,—consisting, as it does, of the conventions which man has devised,—therefore, as sense-knowledge wanders away from truth when it mistakes

* अथातो धर्मजिज्ञासा ॥ १ ॥

† चोदनालक्षणो धर्मः ॥ २ ॥

* तस्य निमित्तपरीष्टिः ॥३॥

† सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं वर्तमानोपलम्भात् ॥४॥

mother-o'pearl for silver, so language is liable to part company with veracity in matters of assertion, and consequently the instigatory nature of a passage which, being couched in words, is liable to be misunderstood, cannot be the instrument of certain knowledge in respect of duty." Jaimini, in reply, denies that this doubt affects the evidence of Scripture. "But the natural [—i. e. the *eternal* and not conventional—] connection of a word with its sense, *is* [the instrument of] the knowledge thereof, and the intimation [of Scripture which is] infallible though given in respect of something imperceptible. This [according to our opinion as well as that] of Bádaráyaṇa [the author of the *Vedánta* aphorisms] is the evidence [by means of which we recognise a duty,] for it has no respect [to any other evidence—such as that of sense]."* Assertions in regard to ordinary things, such as the assertion that there is fire in this or that place, meet with credit, because people have opportunities of verifying such assertions by ocular inspection. This is not the case with regard to the assertion that this or that act is a duty; and therefore Jaimini,—in the absence of the possibility of verification,—rests the evidence of testimony, in the case of Scripture, on its *infallibility*. The mention of the name of Bádaráyaṇa (who is the same as Vyása,) in this aphorism goes to prove that Jaimini's work, the *púrva-mímánsá*, was not antecedent in time to Vyása's *uttara-mímánsá*. Mr. Colebrooke's rendering of the terms *púrva* and *uttara* by "prior" and "later" (—see *Essays*, vol. i. pp. 227 and 295—) would seem to have led Dr. Ritter to suppose that Jaimini's system was the earlier in order of publication. Dr. Ritter says (at p. 376. vol. iv. of his History of Philosophy,—Morrison's version—) that "according to Colebrooke, the adherents of this school may be divided into the earlier and the later",—and then he goes on to speak of "the older and genuine Vedánta:"—but in fact the terms "prior" and "later" refer not to time but to the divisions of the *Veda* which Jaimini and Vyása respectively expound,—the latter directing his attention to the *Upanishads*, or theological sections, which stand last in *order*. The word *mímánsá* means "a seeking to understand"——and the *púrva mímánsá* is "a seeking to understand the prior (or ritual portion of the *Vedas*"), while the *uttara-mímánsá* is "a seeking to understand the latter (or theological portion of the *Vedas*)." These two compounds, in short, to speak grammatically, are not *Karmadháraya*, but *Shashṭhí-tatpurusha*.

Jaimini, we have just seen, denies that the connection of a word with its sense is dependent on human convention. This he was obliged to do in order to remove the *Vedas* beyond the imputation of that fallibility which attaches to all that is devised by man. The *eternal* connection between a word and its sense, the commentator here remarks, "is dependent on the eternity of *Sound*,"—seeing that if Sound were not eternal, then words which consist of sound could not be eternal, nor consequently could the relation of such to their significations be eternal. Being compelled, therefore, to demonstrate that sound *is* eternal, Jaimini, in pursuance of the established method of procedure, first grapples with the arguments which, *primâ facie*, might seem to countenance an opposite view of the matter. The first objection to the eternity of Sound is its being made by effort. Thus, according to Jaimini, "Some [—viz., the followers of the Nyáya—] say that it is a product, for, in the case of it, we *see* [the effort made for its production]"* Jaimini is far too secure in the strength of his own position, to be under any temptation to stop the mouths of objectors before they have said their say. Half a dozen objections he allows to be tabled against the eternity of Sound, the second of them being "Because of its transitoriness,"†—because "beyond a moment, it is no longer perceived." Moreover, the Naiyáyikas contend, in the third place, that sound is not eternal, because it is stamped as factitious by the usage of language,—"Because of [our employing, when we speak of sound,] the expression '*making*.'"‡ When you talk of *making* something, as a jar for instance, you talk of something that has a commencement, else where were the need of its being *made*? Fourthly, according to the Naiyáyikas, the alleged eternity of Sound is incompatible with its undeniable *multeity*:—and the fact that multeity *does* belong to it is inferred "From its being simultaneously in another person [occupying a different place from some first person whom it also affects]."§ According to the explanation of the scholiast, "The scope of the present objection is this, that an argument which establishes the *eternity* of sound will equally establish its *unity*; and thus we should have to admit that a numerically single and eternal entity is simultaneously present to the senses, both of those near and those far off,—which is an inconsistency." And the Naiyáyikas infer that Sound is not eternal, because, "Also, of the original and altered forms"‖ of words,—a condition incompatible with the changelessness of eternity;—and, finally, because, "Also, by a multitude of makers there is an augmentation of it."¶ A thousand lamps, rendering a jar manifest, do not make the jar seem larger than a

* औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥५॥

* कर्मैके तत्र दर्शनात् ॥६॥ † अस्थानात् ॥७॥

करोतिशब्दात् ॥८॥ § सत्त्वान्तरे यौगपद्यात् ॥९॥

‖ प्रकृतिविकृत्योश्च ॥१०॥ ¶ वृद्धिश्च कर्तृभूम्नास्य ॥११॥

single lamp does; yet a thousand persons uttering a sound in concert, make a proportionately greater sound than one person does; so this must be a case not of manifesting a previously existent sound, but of *making* one.

Before stating the arguments in support of his own view, Jaimini addresses himself to the refutation of the foregoing objections; and antecedently to this also he judiciously seeks to narrow the ground of contention by determining how far both parties *agree.* "But alike," he says, "is the *perception* thereof,"*—according to both views,—both agreeing that the *perception* of Sound is only for a moment, whatever difference of opinion there may be as to sound itself being momentary. But though acquiescent so far as *this* point is concerned, Jaimini cannot allow that the sound which we perceive for the moment was *produced* at the moment. He explains:—"Of this [Sound], while it really exists, the non-perception at another time [than that when the sound is perceived] is due to the non-application [of a manifester] to the object [—the then unheard sound]."† In like manner a jar, seen by a flash of lightning, is not then *produced,* nor does it cease to exist, on its ceasing to be perceived. The same jar may be manifested for another moment by a subsequent flash. According to the commentator—"Sound is eternal, [as we are constrained to admit] by force of the recognition that "This is that same letter K" [—viz., the same‡ sound that I heard yesterday, or fifty years ago—], and in virtue of the *law of parsimony,*"—one of the fundamental laws of philosophizing acknowledged by philosophers both of the East and of the West, and implying that we must never assume more causes of a given effect than are sufficient to account for it. Europeans hold that sound is due to vibration. Jaimini's commentator admits that it is not perceived when there is *no* vibration; but with perverse ingenuity, he argues that the absence of vibration, or the stillness of the air, is what prevents us from perceiving the sound, which never ceases to *exist,* whether perceived or not. "The conjunctions and disjunctions [—or undulations]—of the air issuing from the mouth, remove the *still* air which was the obstacle to the perception of sound, and thence it becomes perceptible."

Replying to the objection conveyed in Aph. 8, Jaimini says "This [expression 'making'] means *employing;*"*—we talk of *making* a sound when we only make *use* of it. Then, as for the objection that sound cannot be *one,* because its perception is present to many at a time, he replies, "The simultaneousness is as in the case of the sun;"†—which is explained to mean, that, "As the Sun, which is but one, is seen simultaneously by those stationed in different places, so, like the sun, Sound is a great object, not a minute one"—such as cannot come at once under the cognizance of persons at any distance from one another. Then, as for the objection that sound cannot be eternal since it undergoes changes in the hands of the grammarian he says—"This [—e. g. the letter *y* coming in the room of *i*—] is another letter, not a modification"‡—of that whose place it takes. As the commentator adds—"The *y* is not a modification of the *i* as a mat is a modification of the straw. If it were so, then, as the maker of a mat is under the necessity of providing himself with straw to make it of, the man that employs the letter *y* would be under the necessity of taking the letter *i* to make it of." Finally, to the objection that Sound must be a product, because there is the more of it the more numerous are those employed in making it, he replies—"It is the increase of *noise* that becomes great,"*—and not of *Sound.*

*(To be continued.)*

* समन्तु तत्र दर्शनम् ॥ १२ ॥

† सतः परमदर्शनं विषयानागमात् ॥ १३ ॥

‡ In opposition to the Mímánsakas the Naiyáyikas contend that the form of expression 'This is that same letter K' is grounded merely on the fact that the things referred to are of the same *kind,*—just as is the case with the expression 'He has taken the same medicine that I did.' See the *Siddhánta Muktávalí,* p. 103; and compare the remarks of Whately (in the Appendix to his Logic) on the ambiguity of the word 'Same.'

## THE RIJU VYA'KHYA'

BY

PANDIT RÁMAGATI NYÁYARATNA,

OF THE BERHAMPOOR COLLEGE.

We gladly acknowledge the receipt of a copy of the "Riju Vyákhyá," a key to Pandit Íswarachandra Vidyáságara's "Rijupáṭha," Part III, which is the Sanskrit course for the first examination in arts of the Calcutta University. We need not enter into any minute criticism on the literary merit of this little key, which is the production of a Sanskrit Professor and is executed in a scholar-like manner.

It is written in the usual style of commentators, on the model of Mallinátha and others. Its object, as the author tells us in his preface, is to help students who are going up for the Little-go examination. Although candidates for the Little-go, whose knowledge of Sanskrit does not extend beyond Vidyáságara's Upakramaṇiká, will find this key almost as difficult as the text of the Rijupáṭha itself, still we think, with the aid of the teacher, it will prove of much service to them in learning Sanskrit parsing, as also in acquiring and retaining a clear comprehension of the sense of the more difficult passages.

The next point that calls for remark is that the book is printed in the Bengali character, and will consequently be of local use only, not for all the university students. As it is

* प्रयोगस्य परम् ॥ १४ ॥ † आदित्यवद्यौगपद्यम् ॥ १५ ॥

‡ वर्णान्तरमविकारः ॥ १६ ॥

printed in the Bengali character it should have been written in the vernacular tongue too, so that at least every Bengali student might have been able to read and understand it.

We have already said that the book is written in the usual style of Sanskrit commentators.

But we wish the author had not travelled entirely on the beaten path of his predecessors. He might have improved a little upon the old mode of commentary writing. To the meanings, derivations, and grammatical construction, which he has given, he should have added biographical, historical and geographical notes.

For instance, while commenting on the history of Yayáti, he should have given a short account of the king, how he came to be cursed by Śukra, what relation he bore to Śukra, and similar matters. Instead of merely substituting the word Śukra, for Uśanas, he should have given a short account of that great Guru of the Daityas. The author should have borne in mind that a biographical and mythological Dictionary is not within the reach of every student.

Again (in page 42) he puts Hastinapura for Gaja-Sahwaya, both words of the same age and of the same meaning, the one receiving little light from the other. This is of as little use to the student as the literal translation of the same word into English, "the city named after the elephant."

In spite of these drawbacks the author of this commentary deserves much credit for his work; and his brother Pandits would do well to imitate him and give the fruits of their labours to the public rather than to confine their erudition to controversial discussion in their literary assemblies.

---

TO THE EDITOR OF THE PANDIT.

SIR,—Allow me to make a few remarks on the "Plan" published in your July number, for the publication of Sanscrit classics as proposed by Messrs. G. Bühler and F. Kielhorn.

I. The gentlemen appear to ignore what has been done in this respect by native scholars in Calcutta. Excellent editions of most of the works in their list have already issued from the Calcutta Press. If any of them be out of print, let the publishers by all means be encouraged to reprint them. But it appears somewhat strange to attempt, under the name of a new collection, what would simply amount to a *pirating* of Calcutta editions, unless indeed the intention be to add *a great deal more* in the way of *original* notes or translations than I believe is intended by the projectors.

II. It is proposed to give preference to the "oldest commentary" of a work merely *as such*, and to give the reading according to the commentary adopted—i. e. the *oldest commentary* available. Now sir, I am a great reverer of antiquity, and I dare say the oldest will in many cases be the best. But to tie a person to the dicta of a long by-gone age, and to exclude all *Sanscrit criticism* of a comparatively modern date, is not acting in the spirit of improvement.

III. The gentlemen desire the strictest attention to be paid to the rules of Orthography as laid down by Páṇini. The principle is very good, but who will decide in difficult cases *what* was Páṇini's rule? I do not agree with the great Oxford professor who believes that writing was unknown in Páṇini's days, but we have no right to call anything by that name which does not appear from his own Sútras.

The gentlemen add that in "optional cases one principle is to be followed throughout the whole book." I simply ask, *why* curtail a liberty given by Páṇini and all his successors? If the principle be carried out to any length, it may require a poet never to write रेजे in case he has once committed himself to रराजे; never to countenance वाचा if he has once patronized वाक्; in fact to repeal all विभाषा by stereotyping one of the alternatives. An editor may restrict *himself* if he prefers a restriction, but why should he trespass on the liberty of others.?

Considering that there is hardly one work unpublished, and that most of the works in the list have had very excellent editions, the stress laid on the "expenses of buying, copying, or collecting manuscripts" appears somewhat unintelligible.

But the projectors say nothing on one important point. Should the revoltingly indecent passages in *Kumára-sambhava, Kirátárjuníya, Śiśupálavadha*, the last Canto of the *Raghuvanśa* &c.. be published under the authority of a Government Department, or should they be expurgated.?

CALCUTTENSIS.

---



---

*Communications of a literary nature should be addressed to the* EDITOR: *all letters on business, to the Proprietors,* MESSRS. E. J. LAZARUS & CO., *to whom Drafts should be made payable.* ADVERTISEMENTS *will be charged for according to the space occupied.*

The PANDIT may be ordered of the Publishers, or through MESSRS TRÜBNER and CO., LONDON.

*Annual subscription, in advance, including postage, Rs.* 12.

PRINTED AND PUBLISHED BY E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 6. Benares November 1st, 1866. Vol. I.


तत्राहुः । स्वयम्प्रकाशाचेन्मितिरभ्युपेयते तदा निराकारस्य प्रकाशायोगादवश्यमाकारो ऽभ्युपगमनीयइति कश्चायमाकारो ऽवसीयते । तेन प्रकाशएव तदाकारइति युक्तं । किञ्च निराकारत्वे प्रकाशस्य प्रतिकर्म व्यवस्था नोपपद्यते । नहि तस्य सर्वार्थेषु कश्चिद्विशेषः । अर्थाकारत्वेच यदाकारो ऽसौ तस्येति घटते प्रतिविषयं व्यवस्था । तदाहुः । नहि वित्तिसत्तैव तद्वेदना युक्ता । तस्याः सर्वत्राविशेषात् । तांतु सारूप्यमाविशत्स्वरूपतां घटयेत् । अतएवच सारूप्यमेव प्रमाणमिति युक्तं । व्यवस्थापकतयाहि प्रमाणत्वं । सारूप्यंच व्यवस्थाहेतुः । न चक्षुरादिकं । तस्यानेकार्थसाधारणत्वात् । किञ्च वित्तिवेद्ययोः सहोपलम्भो नियतमुपलभ्यते न कदाचिदपि वित्तिमन्तरेण वेद्यस्योपलब्धिः नापि वित्तेर्वेद्यरहितायाः । येच परस्परव्यतिभिन्ना भावास्तेषां न सहोपलम्भो नियतः । नहि पटस्य घटस्यवा नियमेन सहोपलम्भस्तेन भेदादनियमव्याप्तान्नियमो व्यावर्त्तमानो ऽभेदएवावतिष्ठमानो ऽभेदं साधयति । तदुक्तं । सहोपलम्भनियमादभेदो नीलतद्धियोरिति । एतेनैव न्यायेनाहङ्कारास्पदीभूतस्याप्यंशस्य वित्तेरभेदो युक्तः । कथं तर्हि ग्राह्यग्राहकगृहीतयः परस्परविभिन्नाः प्रतिभासन्तइति । अत्राहुर्भेदश्च भ्रान्तविज्ञानैर्दृश्येतेन्दोरिव द्वयं । तथाचापरमुक्तं । परिच्छेदो ऽन्तरो ऽन्यो ऽयं भागो बहिरवस्थितः । ज्ञानस्याभेदिनो भेदप्रतिभासो ह्युपप्लवइति । भेदभ्रान्तौचानादिभेदवासनैव निमित्तं । एतच्च विचारणीयं । सेयमाकारविशेषयोगिनी प्रतीतिः किं बाह्यादर्थादुपजायते किंवा समनन्तरप्रत्ययादिति । तदुक्तं । अथ बुद्धिस्तथाकारा यार्थाकारविशेषणा । सा बाह्यादन्यतोवेति विचारमिदमर्हति । अत्र मन्यन्ते । समनन्तरप्रत्ययमात्रादाकारविशेषो न घटते देशकालप्रतिनियमायोगात् । घटज्ञानानन्तरमपिहि पटज्ञानं जायते ।

यदि घटज्ञानमात्रमेव पटज्ञानोत्पत्तौ हेतुस्तर्हि यदा यत्र पटो नास्ति तत्र तदापि पटज्ञानं स्यात् । नचैवं । अतोस्ति समनन्तरप्रत्ययादप्यधिको ऽर्थो ज्ञानाकारोत्पत्तिहेतुः । किञ्च यथा वीचिकाजलज्ञाने जलार्थिनः प्रवृत्तस्यार्थक्रिया न सम्भवति तथा सम्यग्जलज्ञानादपि स्यात् । नह्यर्थशून्यत्वाविशेषे सम्यग्जलज्ञानमिदमिदंनेति विभागः परिकल्प्यते तस्माद् बाह्योप्यर्थोस्तीति स्वीकर्तुमुचितं । तदप्यपरे आकाशभ्रान्तमिदमिति मन्यन्ते तथाहि । नतावत्क्वचिदर्थस्याकारविशेषोपधायकत्वं साक्षादवगतं । कल्पनीयंतु तत् । तच्च दृष्टे समनन्तरप्रत्ययएव वरं कल्पनीयं । कार्यभूतज्ञानान्तरवैलक्षण्ये समनन्तरप्रत्ययस्यैव वैलक्षण्यं हेतुरस्तु । तेन किञ्चिदेव ज्ञानं कस्यचिदेव कुत्रचिदेव कदाचिदेव हेतुरिति प्रतिनियमसिद्धिरिति । बाह्यार्थशून्यविज्ञानवादीचार्थक्रियामपि ज्ञानरूपामेव मन्यते । तेन किञ्चिदेव ज्ञानमर्थक्रियाकारिज्ञानसमर्थं किञ्चिच्च नेत्ययमपि नियमः सिद्धः । अवश्यंचार्थमन्तरेणापि विशेष्याकारज्ञानोत्पत्तौ समनन्तरप्रत्ययस्य सामर्थ्यमास्थेयं । अन्यथा स्वप्नादिष्वाकारप्रतिभासप्रतिनियमो न स्यात् । नच देशान्तरकालान्तरवर्त्तिनामेव तत्र सामर्थ्यं । अविद्यमानस्य सामर्थ्यायोगात् । अनुभवजनितात्संस्कारात्तत्राकारप्रतिनियमइति । अस्तुतावदेवं । योपित्वसावनुभवः सोपि तदर्थत्रानुभवान्तरजनितात्संस्कारादेवास्त्वित्यनया दिशा किमर्थाभ्युपगमेन । संस्कारोपिच पूर्वकज्ञानविज्ञानपरम्पराहि कार्यकारणभावेन प्रवर्त्तते । तेनार्थभवाकाराद्यज्ज्ञानान्तरमुत्पद्यते तद्विशिष्टस्वभावं ततोपि यदपरं तदपि विशिष्टस्वभावमिति विज्ञानस्वभावविशेषएव वासनेत्यादिभिः शब्दैर्व्यपदिश्यते । अर्थक्रियाकारविज्ञानाविसंवादयोग्यंच ज्ञानं प्रमाणमितरच्च नेति प्रमाणाप्रमाणभेदोप्युपपन्नः । तस्माद्विज्ञानात्येवाकारविशेषयोगीनि हेतुफलभावेनानादिसन्तानवाही-

नि सन्ति । तद्व्यतिरेकी नतु कश्चिदर्थानामेति ।

अत्रोच्यते । यत्तावदुक्तं ज्ञानस्य साकारत्वसिद्धये नार्थसारूप्यमन्तरेण प्रतिकर्मव्यवस्थासिद्धिरिति । तदयुक्तं । नहि कस्यचिदप्यर्थस्य स्वरूपमनुभूतं साकारविज्ञानवादिना। ज्ञानाकारपर्यवसितत्वात्सर्वविज्ञानानां । यस्यच स्वरूपमेव नावसितं न तेनेह कस्यचित्सारूप्यकल्पनं । नचापि ज्ञानाकारोदयवशेनार्थो व्यवस्थाप्यमानः सरूपतया परिकल्पयितुं शक्यते । असरूपादपि कार्यभूताकारोदयोपपत्तेः । तथाहि लाक्षारक्तवीजाङ्कुरावस्थायां विशेषानवगमेपि रक्तकार्यस्योत्पत्तिर्भवति । नहि यदाकारं ज्ञानमुत्पद्यते तदाकारोऽर्थस्तस्योत्पत्तौ निमित्तमिति किञ्चित्प्रमाणं प्रक्रमते । अपिच स्थूलाकारं ज्ञानमुत्पद्यते परमाण्वात्मकश्चार्थः । साधारणाकाराच बुद्धिरसाधारणश्च विषयइति सारूप्यं न भवति । किञ्च सारूप्यमात्रेण वेद्यत्वे वेद्यवेदकव्यवस्था नोपपद्यते । एकार्थविषयाणां सन्तत्यन्तरज्ञानानां वेद्यत्वापत्तेः अथोत्पादकं सरूपंच वेद्यं तथापि धारावाहिकज्ञानेषु पूर्वपूर्वमुत्तरस्य वेद्यं स्यात् । अथाकारविशेषाधायकं वेद्यं एवमपि पूर्वपूर्वविज्ञानमात्रं वेद्यमापद्यते। पूर्वकमेवहि ज्ञानमाकारविशेषोदयेपि कारणमुक्तं। अपिच निराकारत्वे संविदां प्रतिकर्मव्यवस्था नानुपपन्ना । अर्थप्रतिबद्धव्यवहारविशेषप्रवृत्त्यनुगुणोहि पुरुषस्य धर्मविशेषः संवेदनं । तच्च स्वयम्प्रकाशं यदर्थप्रतिबद्धव्यवहारानुगुणतया प्रकाशते तत्तदर्थसंवेदनमिति व्यवस्थाप्यते । सहोपलम्भनियमश्च भेदेप्युपपद्यते । यैव सा नीलधीः सैवहि नीलस्योपलम्भः । कथञ्च नीलं नीलमन्तरेणोपलभ्यते । किंचेदमनिष्टमापद्यते । उपलम्भमन्तरेणाप्युपलभ्येतेति । सर्वस्यैवहि वस्तुन उपलम्भमन्तरेणैवोपलम्भ इष्यते । नह्युपलम्भनएवोपलम्भः। किञ्चोपलम्भोपलभ्ययोर्भेदो ऽसहोपलम्भनियमव्याप्तइति नियमस्ततो निवर्त्तमानोऽभेदएवातिष्ठमानस्तेन व्याप्तस्तं गमयेत् । उपलम्भोपलभ्ययोस्तु भेदेपि नियम उपपद्यते । उपलभ्यमन्तरेणोपलम्भासम्भवात् । तेनच तयोर्भेदेपि सहोपलम्भनियमो दृष्टो नाभेदं साधयितुं क्षमः । किञ्च वित्तिवेद्ययोर्भेदेपि सहोपलम्भनियमोस्तीति तस्यापि वित्तिरूपतापत्तेरेकत्वं वित्तेर्हीयते ततश्च भेदएव सहोपलम्भनियम इत्यापद्येत । किञ्च यो वित्तिवेद्ययोरभेदमाह सोपितावद्भेदप्रतिभासं नापजानीते तथाच कथमनुमानमुत्पत्स्यते । नहि प्रतीतिविपर्ययेणानुमानस्यात्मलाभोस्ति । यदपि ज्वालादिष्वभेदानुमानं तदपि न प्रतीतिं स्वार्थाद्व्यावर्त्तयति किन्तु सैवेयं ज्वालेति स्मरणग्रहणरूपे द्वे प्रतीती व्यवस्थितविषये दर्शयति । इहतु भेदप्रतीतिः प्रत्येतव्यादेव व्यावर्त्तनीयेति न तद्विरोध्यनुमानमुत्पद्यते।

भेदश्च भ्रान्तविज्ञानैर्दृश्येतेन्दाविवाद्वयेइतिचानुपपन्नं नहि तत्राभेदो दृश्यते किन्त्वेकस्मिन्नेव चन्द्रमसि नेत्रवृत्तिभेदेन द्वे प्रतीती जायेते । तथेन्द्रियवृत्तिभेदादभिन्नेपि चन्द्रमस्यर्थद्वयविषयप्रतिपत्तिद्वयं व्यवहारविमूढाः प्रवर्त्तयन्तीति तत्रतत्रोक्तं । यच्चेदमुक्तं । स्वयम्प्रकाशायाः संविदो ऽभ्युपगताया नीलाद्याकारोस्त्विति । तदप्ययुक्तम् । संविद्भिन्नस्यार्थस्य भासमानस्याकारस्य संविद्रूपाश्रयणानुपपत्तेः । निराकारा संवित्कथं प्रकाशेतेतिचेत् । निराकारेति किमुक्तं । निः स्वभावेतिचेत् । तन्नास्ति संवित्स्वभावाभ्युपगमात् । अथ न नीलाद्याकारेति । नेयं राज्ञ आज्ञा नीलाद्याकारेणैव प्रकाशितव्यं नान्येनेति । प्रकाशेतु सति यद्यथाभूतं प्रकाशते तत्तथाभूतमित्यभ्युपगमो युक्तः । यच्चोक्तं स्वप्ने ज्ञानस्यैवाकारो ऽवभासतइति । तदप्ययुक्तं । तत्रापिहि बहिरवभासत्वात्संविदः। नच सा वहिर्विषया न सम्भवति। पूर्वानुभवाहितभावनोद्बोधवशेन पूर्वानुभूतवस्तुविषयत्वात् । कथंतर्हि पूर्वानुभूतत्वं नानुसन्धीयते। कथंवा ऽनुभूयमानत्वाध्यवसानमिति । उच्यते । संस्कारोद्बोधनिमित्तेयं स्मृतिरिष्यते । संस्कारोद्बोधश्चादृष्टनिबन्धनः । तस्य सुखदुःखहेतुत्वात् । स्वप्नेपिच सुखदुःखानुभवात् । तेन तावत्येवांशे तददृष्टं संस्कारमुद्बोधयति यावत्येव सुखं दुःखंचोपपद्यते । नचानुभूतांशस्मरणे सुखदुःखोदयइति न तत्र संस्कारोद्बोधो नापि स्मृतिः । अतएव गृहीतिसाधारणरूपावभासमात्रमवशिष्यतइत्यनुभवाध्यवसायोपि समर्थितः। यत्पुनराहुः । जडस्य प्रकाशायोगात्प्रकाशात्मकएवाकारइति । तदपि न चतुरस्रं । जडइति किमुक्तं । अप्रकाशात्मकइति । अप्रकाशात्मकस्यैव प्रकाशव्यतिरिक्तस्य प्रकाशइति प्रकाशादेव सिद्धं । किञ्च चित्रपटज्ञाने नानाभूतानामाकाराणामेकप्रकाशात्मकत्वविरोधादसद्भूतत्वमेवाभ्युपगतं । चित्रावभासेष्वर्थेषु यद्येकत्वं न युज्यते । सैव तावत्कथं बुद्धिरेका चित्रावभासिनीति चोदयित्वोक्तं । इदं वस्तुबलायातं यद्वदन्ति विपश्चितः। यथायथा ऽर्थाश्चिन्त्यन्ते विविच्यन्ते तथातथा । यथायथा ऽऽकारा विचार्यन्ते तथातथा ऽघटमाना विविच्यन्ते शून्या भवन्ति असद्भवन्तीत्यर्थः । एवञ्च ते तावदाकारा असद्भूताः प्रकाशात्मानो न भवन्ति कथं प्रकाशन्ते तथा ग्राह्यग्राहकसंवित्तीनां भेदो ऽत्यन्तासद्रूपः प्रकाशाननुप्रवेशी कथं प्रकाशते । प्रमेयविमर्शात्वास्तु बाह्यार्थापन्हवप्रकारा जातिनिर्णयएव प्रायशो निराकृताइति नेह प्रस्तूयन्ते येपुनर्जाग्रद्दृष्टादिप्रत्ययानां स्वप्नादिप्रत्ययदृष्टान्तेन प्रत्ययत्वादित्यनेन हेतुना बाह्यार्थशून्यत्वं प्रतिपादयन्ति तेषां बाह्यविषयसकलप्रतीतिविरुद्धः पक्षः । दृष्टान्तीकृतस्यापि स्वप्नादिप्रत्ययस्य बाह्यग्राह्यसमर्थनेन हेतोर्विरुद्धत्वं दोषो दृष्टान्तस्यच साध्य-

विकलत्वमुद्भावनीयं। तस्मात्स्वयम्प्रकाशत्वे संविदो न बाह्यग्राह्यापह्नवइति स्थितं। यत्त्वाहुः। अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति। स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति। तत्र यदि कर्मकर्तृत्वानुपपत्तिरुच्यते ततो न किञ्चिदवहीयते। नहि वयं कर्मकर्तृभावमभ्युपेमः। अथान्यप्रकाशरूपतया स्वयम्प्रकाशता निवार्यते ततः प्रतीतिविरोधः। किञ्च प्रतीतिबलेनैव यैरेकस्यात्मनः कर्तृकर्मभावो ऽभ्युपगम्यते ते कथमिव संविदो ऽपह्नवीरन्। अपिच ज्ञानमनुमेयमिष्यते। तदनुमानेच नार्थसत्तामात्रं लिङ्गं तस्य तदविनाभावनियमाभावात्। अथार्थज्ञानमित्युच्यते। तदपि नोत्पत्तिमात्रेण लिङ्गं। अनवभासमाने उत्पन्नानुत्पन्नयोरविशेषात्। नह्यनवभासमानमेव लिङ्गं लिङ्गिनमनुमापयति। नचार्थज्ञानस्य ज्ञानान्तराधीनमवभासनं। ज्ञानान्तरानवगमात्। तस्मादर्थज्ञानं स्वयम्प्रकाशमेवाभ्युपगन्तव्यं। एतेन ये सुखादिवन्मानसप्रत्यक्षं ज्ञानान्तरमेव ज्ञानसद्भावे प्रमाणमाहुस्ते निराकृताः। स्वयम्प्रकाशत्वेनाभ्युपपत्तौ पराधीनकल्पना ऽनुपपन्नेत्युक्तमेव। किंतर्ह्यनुमीयते ज्ञानं। ननु न तत्संविदः स्वयम्प्रकाशाया भिन्नमुपलभ्भते। सत्यमतएवानुमीयते। ननु किं तदिति। न तद्विद्मः। संविदुत्पत्तिकारणमात्ममनःसन्निकर्षाख्यं तदित्यवगम्य परितुष्यतामायुष्मता।

प्रमाणफलभावं विविनक्ति। मानत्वे संविदो बाह्यं हानादानादिकं फलं। ज्ञानस्यतु फलं सैव व्यवहारोपयोगिनी। यदि प्रमितिः प्रमाणमिति भावसाधनं मानमाश्रीयते तदा संविदेव मानं स्वं। तस्याश्च व्यवहारानुगुणस्वभावत्वाद्धानोपादानोपेक्षाः फलं। प्रमीयते ऽनेनेति करणसाधने प्रमाणशब्दे आत्ममनः सन्निकर्षात्मनो ज्ञानस्य प्रमाणत्वे तद्वलभाविनी फलसंविदेव बाह्यव्यवहारोपयोगिनी सती। आपेक्षिकंच करणं मन इन्द्रियमेववा। तदर्थसन्निकर्षो वा मानंचेत्पूर्वकं फलं। यदाच साधकतमस्य करणत्वादतिशयस्यच बाह्यापेक्षत्वादालोकाद्यपेक्षमिन्द्रियमेव प्रमाणं तस्य वा विषयसन्निकर्षः तस्यवा मनःसन्निकर्षः प्रमाणं तदापि संविदेव फलं। तदर्थप्रवृत्तत्वात्साधनानां। येपुनः प्रमाणादभिन्नं फलमाहुस्तेच कार्यकारणयोरैक्याभावादेवोपेक्षणीयाः॥

इति श्रीमहामहोपाध्यायश्रीशालिकनाथविरचिते
प्रमाणपारायणे प्रथमः परिच्छेदः समाप्तः॥

---

प्रस्थानकालोचितचारुवेषः
स स्वर्गिवर्गैरनुगम्यमानः ।
ततः कुमारः शिरसा नतेन
त्रैलोक्यभर्तुः प्रणनाम पादौ ॥ १ ॥

जहीन्द्रशत्रुं समरे ऽमरेश-
पदं स्थिरत्वं नय वीर वत्स ।
इत्याशिषा तं प्रणमन्तमीशो
मूर्द्धन्युपाघ्राय मुदा ऽभ्यनन्दत् ॥ २ ॥
प्रह्वीभवन् नम्रतरेण मूर्ध्ना
नमश्चकाराङ्घ्रियुगं स मातुः ।
तस्याः प्रमोदाश्रुपयःप्रपूर-
स्तस्याभवद्वीरवराभिषेकः ॥ ३ ॥
तमङ्कमारोप्य सुता महाद्रे-
राश्लिष्टगात्रं सुतवत्सला सा ।
शिरस्युपाघ्राय जगाद शत्रुं
जित्वा कृतार्थीकुरु वीरसूं माम् ॥ ४ ॥
उद्दामदैतेयविपत्तिहेतुः
श्रद्धालुचेताः समरोद्धुरः सः ।
आपृच्छ्य भक्त्या गिरिजागिरीशौ
ततः प्रतस्थे ऽभिदिवं कुमारः ॥ ५ ॥
देवं महेशं गिरिजांच देवीं
ततः प्रणम्य त्रिदिवौकसोपि ।
प्रदक्षिणीकृत्य सुरेशमुख्याः
सुराः समस्तास्तमथानुजग्मुः ॥ ६ ॥
अथ व्रजद्भिस्त्रिदशैः सरोषैः
स्फुरत्प्रभाभासुरमण्डलैस्तैः ।
ततो बभासे परितो ऽवकाशो
दिवापि नक्षत्रगणैरिवोग्रैः ॥ ७ ॥
रराज तेषां व्रजतां सुराणां
मध्ये कुमारो ऽधिककान्तिकान्तः ।
नक्षत्रताराग्रहमण्डलाना-
मिव त्रियामादयितो नभोन्ते ॥ ८ ॥
गिरीशगौरीतनयेन सार्द्धं
पुलोमपुत्रीदयितादयस्ते ।
उत्तीर्य नक्षत्रपथं मुहूर्त्तं
प्रपेदिरे लोकमथो मुनीनाम् ॥ ९ ॥
तं स्वर्गलोकं चिरकालदृष्टं
महासुरत्रासवशंवदत्वात्
सद्यः प्रवेष्टुं न विषेहिरे तत्

ऽचयं व्यलम्बन्त सुराः समस्ताः ॥ १० ॥
पुरो ऽत तत् त्वं न पुरो भवामि
न वः पुरोगो ऽस्मि पुरः सर त्वम् ।
इत्थं द्विषा तेन कृते स्ववश्ये
स्वर्गं प्रवेष्टुं कलहं वितेनुः ॥ ११ ॥
सुरात्वरालोकनकौतुकेन
मुदा सुविस्मेरविलोचनस्य ।
दधुः कुमारस्य मुखारविन्दे
दृष्टिं द्विषत्साध्वसकातरास्ते ॥ १२ ॥
सहेलहासोद्धुरिताननेन्दु-
स्ततः कुमारः पुरतो निविष्टः ।
स तारकापातमवेक्षमाणो
रणप्रवीरो ऽभि सुरानवोचत् ॥ १३ ॥
भीत्या ऽलमद्य चिदिवौकसोऽमी
स्वर्गं भवन्तः प्रविशन्तु सद्यः ।
अद्यैव मे दृक्पथमेतु शत्रु-
र्महासुरो यः खलु कालदृष्टः ॥ १४ ॥
स्वर्ल्लोकलक्ष्मीकचकर्षणाय
दोर्मण्डलं यस्य बलातिचण्डम् ।
इहैव तच्छोणितपानकेलि-
मह्नाय कुर्वन्तु शरा ममैते ॥ १५ ॥
शक्तिर्ममासावहतप्रचारा
प्रभावसारा सुमहःप्रसारा ।
स्वर्ल्लोकलक्ष्म्या विपदा सहारेः
शिरो हरन्ती दिशतां सुखं वः ॥ १६ ॥
इत्यन्धकारातिसुतस्य दैत्य-
वधाय बद्धोत्सवमानसस्य ।
सर्वे सुविस्मेरमुखारविन्दं
गीर्वाणवृन्दं वचसा ननन्द ॥ १७ ॥
सान्द्रप्रमोदः पुलकोपगूढः
सर्वाङ्गसंलग्नसहस्रनेत्रः ।
तस्योत्तरीयेण निजाम्बरेण
निरुञ्छनं चारु चकार शक्रः ॥ १८ ॥
घनप्रमोदाश्रुपरिप्लुताक्षै-
र्मुखैश्चतुर्भिः प्रचुरप्रमोदः ।
क्रमाच्चुचुम्बे विधिरादिवृद्धः
षडाननं षट्सु शिरःसु हर्षात् ॥ १९ ॥
दिव्यर्षयस्तस्य वचो वरार्थं
तदभ्यनन्दन् किल नारदाद्याः ॥ २० ॥
ततः सुराः शक्तिधरस्य तस्या-
वष्टम्भतः साध्वसमुत्यजन्तः ।
आनन्दयन् वीर जयेति वाचा
गन्धर्व्वविद्याधरसिद्धसङ्घाः ॥ २१ ॥
सुसाधुसाध्वित्यभितः प्रशस्य
मुदा कुमारं त्रिपुरासुरारेः ।
निरुञ्छनं चक्रुरथोत्तरीयै-
श्चामीकरीयैर्निजवल्कलैश्च ॥ २२ ॥
अथाभिपृष्ठे गिरिजासुतस्य
पुरन्दराराातिजयं चिकीर्षोः ।
सुरा निरीयुस्त्रिपुरं दिधक्षो-
रिव स्मरारेः प्रमथाः समन्तात् ॥ २३ ॥
सुराङ्गनानां जलकेलिभाजां
प्रक्षालितैः सन्ततमङ्गरागैः ।
प्रपेदिरे पिञ्जरवारिपूरां
स्वर्गौकसः स्वर्गधुनीं पुरस्तात् ॥ २४ ॥
दिग्दन्तिनां वारिविहारलीलां
कराहतैर्भीमवराहयूथैः ।
अशंसयन् सादरमद्रिपुत्री-
महेशपुत्राय पुरःपुरोगाः ॥ २५ ॥
स कार्त्तिकेयः पुरतः परीतो
वियच्चरैर्लोलतरैस्तरङ्गैः ।
आप्लावयन्तीं मुहुरालवाल-
श्रेणीस्तरूणां गुरुतीरजानाम् ॥ २६ ॥
लीलालसाभिः सुरकन्यकाभि-
र्हिरण्यहंसाभिरताभिरुच्चैः ।
माणिक्यगर्भाभिरुपाहिताभिः
प्रकीर्णतीरां वरवेदिकाभिः ॥ २७ ॥
सौरभ्यलुब्धभ्रमरावकीर्णै-
र्हिरण्यहंसावलिकेलिलोलैः
चामीकरीयैः कमलैर्विनिद्र-

श्च्युतैः परागैः परिपिञ्जतोयाम् ॥ २८ ॥
कुतूहलाद्द्रष्टुमुपागताभि-
स्तीरे स्थिताभिः सुरकन्यकाभिः ।
अभ्यूर्मिराजीः प्रतिबिम्बिताभि-
र्मुदं दिशन्तीं व्रजतां जनानाम् ॥ २९ ॥
ननन्द शक्रश्चिरकालदृष्टां
विलोक्य सद्यः सुरदीर्घिकां ताम् ।
अपूर्वदृष्टामिव लोकमानः
स विस्मयस्मेरविलोचनोऽभूत् ॥ ३० ॥
उपेत्य तां तत्र किरीटकोटि-
न्यस्ताञ्जलिर्भक्तिपरः कुमारः ।
गीर्वाणवृन्दैः प्रणुतां प्रणुत्य
नम्रेण मूर्ध्ना नमितो ववन्दे ॥ ३१ ॥
प्रपाटितस्मेरसरोजराजिः
पुरः परीरम्भमिलन्महोर्मिः ।
कपोलपालिश्रमवारिहारी
भेजे गुहं स्वःसरितः समीरः ॥ ३२ ॥
ततो जवान्नन्दननामधेयं
लीलावनं जम्भजितः पुरस्तात् ।
विभिन्नभग्नोन्नतशाखिसङ्घं
प्रेक्षाञ्चकार स्मरशत्रुसूनुः ॥ ३३ ॥
सुरद्विषोपप्लुतमेवमेव
वनं बलस्य द्विषतो गतश्रि ।
इत्थं विचिन्त्यारुणलोचनोऽभू-
द्भ्रूभङ्गदुष्प्रेक्ष्यमुखः स कोपात् ॥ ३४ ॥
निर्लूनलीलोपवनामपश्य-
दसञ्चरीभूतविमानमार्गाम् ।
विध्वस्तसौख्यप्रचयां प्रमृष्ट-
विश्वौकसाराममरावतीं स ॥ ३५ ॥
गर्भश्रियं वैरिवराभिभूतां
दशां सुदीनामभितो दधानाम् ।
नारीमवीरामिव तामवेक्ष्य
सबाढमन्तः करुणापरोऽभूत् ॥ ३६ ॥
दुश्चेष्टिते देवरिपौ सरोष-
स्तस्यां विषण्णः समरायचोत्क ।
तथाविधां तांच विवेश पश्यन्
सुरैः सुराधीश्वरराजधानीम् ॥ ३७ ॥
दैत्येन्द्रदन्तावलदन्तघातैः
क्षुण्णान्तरस्फाटिकहर्म्यपङ्क्तीः ।
महाहिनिर्मोकपिनद्धजालाः
संवीक्ष्य तस्यां विषसाद सद्यः ॥ ३८ ॥
उत्कीर्णचामीकरपङ्कजानां
दिग्दन्तिदानद्रवदूषितानाम् ।
हिरण्यहंसव्रजवर्जितानां
तदीर्णवैडूर्यमहाशिलानाम् ॥ ३९ ॥
आविर्भवद्बालतृणाञ्चितानां
तदीयलीलागृहदीर्घिकाणाम् ।
सुदुर्दशां वीक्ष्य विरोधिजां तां
विषादवैलक्ष्यभरं बभार ॥ ४० ॥

युग्मम्

तद्दन्तिदन्तक्षतहेमभित्ति-
सुतन्तुजालाकुलरत्नजालम् ।
निन्ये सुरेन्द्रेण पुरोगतेन
स वैजयन्ताभिधमात्मसौधम् ॥ ४१ ॥
निर्दिष्टवर्त्मा विबुधेश्वरेण
सुरैः समग्रैरनुगम्यमानः ।
स प्राविशत् तद्विविधात्मरश्मि-
च्छन्नेन सोपानपथेन सौधम् ॥ ४२ ॥
निसर्गकल्पद्रुमतोरणाङ्कं
स पारिजातप्रसवस्रजाढ्यम् ।
दिव्यैः कृतस्वस्त्ययनो मुनीन्द्रै-
रन्तः कुमारः प्रमदं प्रपेदे ॥ ४३ ॥
पादौ महर्षेः किल कश्यपस्य
कुलादिवृद्धस्य सुरासुराणाम् ।
प्रदक्षिणीकृत्य कृताञ्जलिः स
षड्भिः शिरोभिर्विनतैर्ववन्दे ॥ ४४ ॥
स देवमातुर्जगदेकवन्द्यो
पादौ तथैव प्रणनाम कामम् ।
मुनेः कलत्रस्यच तस्य भक्त्या
प्रह्वीभवन् शैलसुतातनूजः ॥ ४५ ॥

स कश्यपः सा जननी सुराणां
तमेधयामासतुराशिषा द्वे ।
यथा ऽनयाऽनेकजगज्जिगीषुं
जेता मृधे तारकमुग्रवीर्यम् ॥ ४६ ॥

तद्दर्शनार्थं समुपेयुषीणां
स देवतानामदितिश्रितानाम् ।
पादौ ववन्दे विनयेन तास्त-
माशीर्वचोभिः पुनरभ्यनन्दन् ॥ ४७ ॥

पुलोमपुत्रीं विबुधाधिभर्तु-
स्ततः शचीनाम कलत्रमत्र ।
नमश्चकार स्मरशत्रुसूनु-
स्तमाशिषा सा समुपाचरच्च ॥ ४८ ॥

अथादितीन्द्रप्रमुखाः समेताः
स मातरः सप्त घनप्रमोदाः ।
उपेत्य भक्त्या नमतिस्म शर्व-
पुत्राय तस्मै ददुराशिषस्ताः ॥ ४९ ॥

समेत्य सर्वे मुदमादधाना
महेन्द्रमुख्यास्त्रिदिवौकसोऽच ।
आनन्दकल्लोलितमानसास्ते
तमभ्यषिञ्चन् पृतनाधिपत्ये ॥ ५० ॥

सकलविबुधलोकः स्वस्तनिःशेषशोकः
कृतरिपुविजयाशः प्राप्तबुद्धावकाशः ।
अकृत हरसुतेनानन्तवीर्येण तेना-
खिलविबुधचमूनां प्राप्य लक्ष्मीमनूनाम् ॥ ५१ ॥

इति श्रीकुमारसम्भवे महाकाव्ये कवीन्द्रकालि-
दासकृतौ कुमारसैनापत्याभिषेकोनाम त्रयोदशः सर्गः ॥

---

रणोत्सुकेनान्धकशत्रुसूनुना
स्वयं प्रयुक्तैस्त्रिदशैर्जयेषुणा ।
महासुरं तारकसञ्ज्ञितं द्विषं
प्रसह्य हन्तुं समनह्यत द्रुतम् ॥ १ ॥

स दुर्निवारं मनसो ऽतिवेगिनं
जयश्रियः सङ्गमनं सुदुःसहम् ।
विजिरत्वरंनाम तदा महारथं
धनुर्द्धरः शक्तिधरो ऽध्यरोहत ॥ २ ॥

सुरालयश्रीविपदां निवारणं
सुरारिसम्पत्परितापकारणम् ।
केनापि दध्रे ऽस्य विरागदारणं
सुचारु चामीकरधर्मवारणम् ॥ ३ ॥

शरद्वलच्चन्द्रमरीचिरोचिभिः
स वीज्यमानो वरचारुचामरैः ।
पुरःसरैः किन्नरसिद्धचारणै
रणोत्सुको ऽस्तूयत वाग्भिरुच्चैः ॥ ४ ॥

प्रयाणकालोचितचारुवेषभृद्-
वज्रं वहन्पर्वतपक्षदारणम् ।
ऐरावणं स्फाटिकशैलसोदरं,
ततोऽधिरुह्य द्युपतिस्तमभ्यगात् ॥ ५ ॥

तमन्वगच्छद् गिरिशृङ्गसोदरं
मदोद्धुरं मेषमधिष्ठितः शिखी ।
विरोधिविद्वेषरुषा ऽधिकं ज्वल-
न्महा महौजस्तरसा युधे दधे ॥ ६ ॥

नवेन्द्रनीलाचलचण्डविग्रहे
विषाणविध्वस्तमहाशिलोच्चये ।
स्थितो ऽतिमत्ते महिषे ऽसुभीषणो
रणोत्सुको दण्डधरस्तमभ्यगात् ॥ ७ ॥

मदोद्धुतः प्रेतवराधिरूढ-
स्तमन्धकद्वेषितनूजमभ्यगात् ।
महासुरद्वेषविशेषभीषणः
सुरोषणश्चण्डरणाय नैर्ऋतः ॥ ८ ॥

नवोदयास्तोरणघोरदर्शनं
युधे ऽधिरूढो मकरं महत्तरम् ।
दुर्वारपाशो वरुणो रणोल्वणं
तमन्वियाय त्रिपुरान्तकात्मजम् ॥ ९ ॥

दिगम्बराद्विक्रमणोल्वणं त्वणा-
न्मृगं महीयांसमरुद्धविक्रमम् ।
अधिष्ठितः सङ्गरकेलिलालसं
मरुन्महेशात्मजमभ्यगाद्ध्रुवम् ॥ १० ॥

विरोधिनां शोणितपारणोत्सुकीं
गदामनूनां नरवाहनो वहन्
महाहवाम्भोधिविगाहनोद्धतं

यियासुमभ्यागमदीशनन्दनम् ॥ ११ ॥
महाहिनिर्व्वद्धजटाकलापिनो
ज्वलत्त्रिशूलप्रवरायुधा युधि ।
रुषा तुषाराद्रिसरवं महावृषं
ततो ऽधिरूढास्तमयु: पिनाकिन: ॥ १२ ॥
अन्येपि सन्नह्य महामहोत्सव-
श्रद्धालव: स्वर्गिगणास्तमन्वयु: ।
स्ववाहनानि प्रवराण्यधिष्ठिता:
प्रमोदविस्मेरमुखाम्बुजश्रिय: ॥ १३ ॥
उद्दण्डहेमध्वजदण्डसङ्कुला-
श्चञ्चद्विचित्रातपवारणोल्वणा: ।
घनाघना:स्यन्दनघोषभीषणा:
करीन्द्रघण्टारवचण्डचीत्कृता: ॥ १४ ॥
स्फुरद्विचित्रायुधकान्तिकन्दलै-
रुद्द्योतिताशावलयाम्बरान्तरा: ।
दिवौकसां सो ऽनुवहन् महाचमू:
पिनाकपाणेस्तनयस्ततो ययौ ॥ १५ ॥
युग्मम् ।
कोलाहलेनोच्छलता दिवौकसां
महाचमूनां गुरुभिर्ध्वजाग्रै: ।
घनैर्निरुच्छ्वासमभूदलन्तरां
दिङ्मण्डलं व्योमतलं महीतलम् ॥ १६ ॥
सुरारिलक्ष्मीपरिकम्पहेतवो
दिक्चक्रवालप्रतिनादमेदुरा: ।
नभोन्तकुक्षिम्भरयो घनस्वना
निहन्यमानै: पटहैर्वितेनिरे ॥ १७ ॥
प्रमथ्यमानार्णवगर्जितस्वनै-
र्वैरारिनारीगणगर्भपातनै: ।
नभश्चमूधूलिकुलैरिवाकुलै-
ररास गाढं पटहप्रतिस्वनै: ॥ १८ ॥
क्षिप्तं रथैर्वाजिभिराहतं खुरै:
करीन्द्रकर्णै: परित: प्रसारितम् ।
धृतं घनै: काञ्चनशैलजं रजो
वातैर्हतं व्योम ससार तत्क्रमात् ॥ १९ ॥
खातं खरै रथ्यतुरङ्गपुङ्गवै-
रुपत्यकानां कनकस्थलीरज: ।
गतं दिगन्तान् प्रखरै: समीरणै-
र्दाहभ्रमं भूरि बभार भूयसा ॥ २० ॥
अधस्तथोर्ध्वं पुरतो ऽथ पृष्ठतो
ऽभितोपि चामीकररेणुरुच्चकै: ।
चमूषु सर्पन् मरुदाहतो ऽहरत्
तत्कालबालातपवैभवं बहु ॥ २१ ॥
बलोद्धुतं काञ्चनभूमिजं रजो
बभौ दिगन्तेषु नभस्तले स्थितम् ।
अकालसन्ध्याघनरागपिञ्जितं
घनं घनानामिव वृन्दमुद्यतम् ॥ २२ ॥
हेमावनीषु प्रतिबिम्बमात्मनो
मुहुर्विलोक्याभिमुखं महागजा: ।
रसातलोत्तीर्णगजभ्रमेण
दण्डप्रकाण्डप्रकृतानि तेनिरे ॥ २३ ॥
सुजातसिन्दूरपरागपिञ्जरै:
कलं चलद्भि: सुरसैन्यसिन्धुरै:
गुहासु चामीकरशैलभूमिषु
व्यदृश्यत स्वं प्रतिबिम्बमग्रत: ॥ २४ ॥
इतिक्रमेणामरराजवाहिनी
महाहवारम्भविलासलालसा ।
अवातरत् काञ्चनशैलतो द्रुतं
कोलाहलाकृतविधूतकन्दरा: ॥ २५ ॥
महाचमूनां करिचण्डचीत्कृतै-
र्विलोलघण्टाक्वणितोपबृंहितै: ।
सुरेन्द्रशैलेन्द्रमहागुहाशया:
सिंहा महास्वप्नसुखं न तत्यजु: ॥ २६ ॥
गम्भीरभेरीध्वनितैर्भयङ्करै-
र्महागुहान्त:प्रतिनादमेदुरै: ।
महारथानां गुरुनादनि:स्वनै-
रनाकुलैस्तैर्मृगराजता ऽऽपि ॥ २७ ॥
समुच्छ्रितेन त्रिदिवौकसां चमू-
रवेण तेनाद्रितटान्तदारिणा ।
प्रपेदिरे केसरिणो ऽधिकं मदं
स्ववीरलक्ष्मीमृगराजतावशात् ॥ २८ ॥

भिया सुरानीकविमर्द्दजन्मना
विदुद्रुवुर्दूरतरं द्रुतं मृगाः ।
गुहागृहान्तानभिसृत्य हेलया
तस्थुर्वनि:शङ्कतरा मृगाधिपाः ॥ २९ ॥

विलोकिताः कौतुकिना ऽमरावती-
जनेन दृष्टं प्रमदेन दूरतः ।
सुराचलप्रान्तभुवि प्रपेदिरे
सुविस्तृतायां प्रसरं न सैनिकाः ॥ ३० ॥

भुवं विगाह्य प्रययौ महाचमूः
क्वचिन्न मान्ती दिवमभ्यगात् ततः ।
अखर्वगन्धर्वपुरोदयभ्रमं
बभार भूम्ना सुतरामितस्ततः ॥ ३१ ॥

महास्वनः सैन्यविमर्दसम्भवः
कर्णान्तमूलङ्कषतामुपेयिवान् ।
पयोनिधेः क्षुब्धतरस्य मन्थनो
बभूव भूम्ना भुवनोदरम्भरिः ॥ ३२ ॥

महागजानां गुरुबृंहितैः स तैः
सहेषितैर्घोरतरैश्च वाजिनाम् ।
घनैरथानां चलचण्डचीकृतै-
स्तिरोहितो ऽभूत् पटहस्य निःस्वनः ॥ ३३ ॥

महासुराणामवरोधयोषितां
कचाक्षिपक्ष्मस्तनमण्डलेषु ।
ध्वजेषु नागेषु रथेषु वाजिषु
क्षणेन तस्थौ सुरसैन्यजं रजः ॥ ३४ ॥

चलैर्विलोक्य स्थगितार्कमण्डले
श्वभूरजोभिर्निचितं नभस्तलम् ।
अवापि हंसैरभिमानसं घन-
भ्रमेण सानन्दमनर्त्ति केकिभिः ॥ ३५ ॥

सान्द्रैः सुरानीकरजोभिरम्बरे
नवाम्बुदानीकविलासिभिः श्रिते ।
चकासिरे स्वर्णमयध्वजव्रजाः
परिस्फुरन्तस्तडितां गणा इव ॥ ३६ ॥

विलोक्य धूलीपटलैर्भृशं भृतं
द्यावापृथिव्योरनमन्तरं महत् ।
किमूर्द्धतो ऽधः किमधस्तदूर्ध्वतो
रजो ऽभ्युपैतीति जनैरतर्क्यत ॥ ३७ ॥

नोर्द्ध्वं नचाधो न पुरो न पृष्ठतो
न पार्श्वतो ऽभूत् खलु चक्षुषो गतिः ।
सूच्यग्रभिन्नैः पृतनारजोभरैः
सुनिर्भरं प्राणिगणस्य सर्वतः ॥ ३८ ॥

दिगन्तदन्तावलदानहारिभि-
र्विमानरन्ध्रप्रतिनादमेदुरैः ।
अनेकवाहध्वनितैरनारते-
र्जगर्ज्ज गाढं गुरुभिर्नभस्थलम् ॥ ३९ ॥

उद्दामदानद्विपबृंहितैस्तै-
र्नितान्तमुत्तुङ्गतुरङ्गहेषितैः ।
चलद्ध्वजस्यन्दननेमिनिःस्वनै-
रभून्निरुच्छ्वासमथाकुलं तत् ॥ ४० ॥

महागजानां गुरुभिस्तु गर्ज्जितै-
र्विलोलघण्टारणितैरणोज्ज्वलैः ।
वीरप्रमेदैः प्रमदप्रमेदुरै-
र्वाचालतामादधिरेतरां दिशः ॥ ४१ ॥

दन्तीन्द्रदानाम्बुधिवारिवीचिभिः
सद्योपि नद्यो बहु ताः पुपूरिरे
धारारजोभिस्तुरगैः क्षितिर्भृता
या पङ्कतामेत्य रथैः स्थलीकृता ॥ ४२ ॥

निम्नप्रदेशाः स्थलतामुपागमन्
निम्नत्वमुच्चैरपि सर्वतः स्थलम्
तुरङ्गमानां व्रजतां खुरैः क्षिती-
रथैर्गजेन्द्रैः परितः समीकृता ॥ ४३ ॥

नभोदिगन्तप्रतिघोषभीषणै-
र्महामहीभृत्तटदारणोल्वणैः
पयोधिनिर्धूतककेलिभिर्जग-
द्बभूव भेरीस्वनितैः समाकुलम् ॥ ४४ ॥

इतस्ततो वातविधूतचञ्चलै-
रारोधिताशागगनैर्ध्वजांशुकैः
लचक्कणत्काञ्चनकिङ्किणीकुलै-
रमज्जि धूलीजलधौ नभोगतैः ॥ ४५ ॥

घण्टारवैरुद्धतरैर्निरन्तरै-
र्विसृत्वरैर्गर्जरवैः सुभैरवैः

मदद्विपानां प्रथयाम्बभूविरे
न वाहिनीनां पटहस्य निःस्वनाः ॥ ४६ ॥

करालवाचालरवैश्चमूरवैः
त्रस्ताम्बरा वीक्ष्य रजस्वला दिशः ।
तिरोबभूवे गहने दिनेश्वरो
रजोन्धकारे परितः कृतोप्यसौ ॥ ४७ ॥

आक्रान्तपूर्वा रभसेन सैनिकै-
र्दिगङ्गना व्योमरजोभिदूषिता ।
भेरीरवाणां प्रतिशब्दितैर्घनै-
र्जगर्ज गाढं गुरुमत्सरादिव ॥ ४८ ॥

गुरुसमीरसमीरितभूधरा
इव गजा गगनं विजगाहिरे ।
गुरुतराइव वारिधरा धरा-
भुवमतीहविर्मन्तइवाभवत् ॥ ४९ ॥

वरतरसुरलोकानल्पसंहारकाले
निरवधयइवाम्भोराशयो घोरघोषाः ।
गुरुतरपरिमज्जद्भूभृतो देवसेना
ववृधुरपि सुपूर्णव्योमभूम्यन्तरालाः ॥ ५० ॥

इति श्रीकुमारसम्भवे महाकाव्ये कवीन्द्रकालिदासकृतौ सेनाप्रयाणंनाम चतुर्दशः सर्गः ॥

## ॥ परिभाषेन्दुशेखरटिप्पणीसारासारविवेकः ॥

॥ श्रीपरमेश्वराय नमः ॥

॥ प० ॥ प्राचीनवैयाकरणतन्त्रे वाचनिकानि अत्र पाणिनीये तन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ॥ प० ॥

श्लोकघटकतुरीयचरणसूचितं विषयरूपमनुबन्धमध्येतॄणामवधानाय स्पष्टं प्रतिपादयति । प्राचीनेत्यादिना । अत्रेत्यस्य व्याख्यायन्तइत्यनेनान्वयः । व्याख्यानं च प्रकृतशास्त्रप्रवृत्तिनिवृत्त्युपयोगित्वेन प्रतिज्ञानविशिष्टमत्र विवक्षितम् । तेनाकृतव्यूहाइत्याद्युपन्यासेऽपि न प्रतिज्ञाविरोधः ।

अत्र व्याख्येयपरिभाषारूपाणां ज्ञापकन्यायसिद्धत्वेन विशेषणाद् वाचनिकानामग्रहणेन न्यूनतामुद्भाव्य ज्ञापकन्यायसिद्धानीत्यस्य प्रायेणेति शेषं कल्पयित्वा न्यूनतां परिहरन्ति वैद्यनाथभट्टाः । तदेवानुवदन्ति भैरवमिश्रविषयगाकारसङ्ग्रहकाराः ।

सदाशिवभट्टास्तु वाचनिकसङ्ग्रहायाह “भाष्येति” सामानाधिकरण्ये तु अकृतेत्यादिव्याख्यानं विरुद्ध्येत सङ्ग्रहश्च न स्यादिति बोध्यमिति ग्रन्थेन भाष्यवार्तिकेत्यादेः पृथक्कोटित्वोपवर्णनेन समादधते । एतदनुसारेणैव राघवेन्द्राचार्यैरपि भाष्यवार्तिकयोरुपनिबद्धानीति पृथक्कोटिः अनेन परिभाषासूत्रव्युदासइति प्रकारान्तरेण समाधीयते ।

भीमाचार्यास्तु ज्ञापकन्यायशब्दावर्शआद्यन्तौ सिद्धशब्दश्चोच्चारणक्रियानिष्पन्नार्थोवाचनिकपरः तेन वाचनिकानां सङ्ग्रहः । यद्वा । वाचनिकानीत्यस्यावृत्त्या प्राचीनवैयाकरणतन्त्रे इत्यत्र पाणिनीये तन्त्रे इत्यत्र च योजना कार्या । गामश्वं पुरुषमित्यादौ विनापि चं समुच्चयदर्शनाद् वाचनिकानि ज्ञापकन्यायसिद्धानिचेत्यादिरर्थइत्यतोवाचनिकानां नासङ्ग्रहइति प्रकारद्वयेन समादधुः ।

केचित्तु प्राचीनवैयाकरणतन्त्रे वाचनिकान्यपि पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धान्यपि यानि भाष्यवार्तिकयोरुपनिबद्धानि तान्येव व्याख्यायन्तइत्यादि व्याचख्युः ।

वयन्तु ज्ञापकन्यायसिद्धानि व्याख्येयपरिभाषारूपाणि न सन्त्येवेति प्राचीनेत्यादेर्यथाश्रुतार्थएव समीचीनः । यस्मिन्विधिरित्यादौ वाचनिक्येषेत्यादिग्रन्थस्य ज्ञापकसिद्धा नेयमिति नाशयः किन्तु भाष्ये एतस्याज्ञापकं नोपन्यस्तं स्वरूपमात्रमुत्कीर्तितमितीति ब्रूमः । ज्ञापकानि तु तत्रतत्र प्रदर्शयिष्यन्तेऽस्माभिः ।

परिभाषात्वं च सङ्केतग्राहकभिन्नत्वे सति गुणशास्त्रत्वम् । तत्वं च शब्दधर्मिकसाधुत्वप्रकारकशास्त्रजन्याप्रामाण्यज्ञानानास्कन्दितबोधे सहकारित्वेन मुन्यभिप्रेतत्वम् ।

व्याख्येयपरिभाषागतमनुगतरूपं च पाणिन्युच्चरितभिन्नत्वे सति गुणशास्त्रत्वम् । गुणशास्त्रत्वं तु निरुक्तमेव । एतदेव रूपं परितोव्यापृतां भाषां परिभाषां प्रचक्षतइति श्लोकार्द्धेनाभियुक्तैः प्रोच्यते । तथा हि । परितइत्यस्य स्वलिङ्गलिङ्गितशास्त्रजन्यबोधेष्वित्यर्थः । व्यापृतामित्यस्य च व्यापारविशिष्टामित्यर्थः । व्यापारश्च लिङ्गितप्रवृत्तिनिवृत्त्यन्यतरपर्यवसायी विषयसङ्कोचादिलक्षणः । भाषापदेन च शाब्दबोधजनकपरेण स्वातन्त्र्येण वाक्यार्थधीप्रयोजकत्वरूपमधिकारादिव्यावृत्तं रूपं सूचितमिति ध्येयम् ।

यत्तूदयङ्करेण ।

लिङ्गवत्त्वे सति सन्दिग्धार्थनियामकत्वं परिभाषात्वमुक्त्वा पदकृत्यं प्रादर्शि । दीधीवेवीटामित्यादौ नधातुलोपइत्यादौ च निषेधः किमिक्परिभाषायाउत गुणवृद्धोरिति सन्दिग्धार्थस्य नियामकत्वात् परिभाषात्वं स्यादतः सत्यन्तम् । सञ्ज्ञासूत्राणां विधिप्रदेशीयसञ्ज्ञाबोधकपदरूपलिङ्गवत्त्वे सत्यर्थनियामकत्वे-

नातिव्याप्तिः सन्दिग्धेति । तथा सति क्वचिट्टेरे घोःकिरित्यादौ विशेषरूपेण लोकप्रसिद्धार्थाप्रत्यायकत्वात् क्वचित् पुनः सिचि वृद्धिरित्यादावसन्दिग्धार्थकत्वाददोषः । परिभाषाणां तु सूत्रोपात्तानां षष्ठीस्थानेयोगेत्यादीनां विधिप्रदेशगतषष्ठीपदादिश्रवणरूपलिङ्गवत्त्वेन व्याख्यानतइत्यादीनां च ज्ञापकन्यायसिद्धानां सन्दिग्धपदादिश्रवणरूपलिङ्गवत्त्वेन सन्दिग्धार्थनियामकत्वाद्यथोक्तव्यवहारः सिद्ध्यति । वर्णाश्रये नास्ति प्रत्ययलक्षणमेकदेशविकृतमनन्यवदित्यादीनां निषेधातिदेशरूपाणां प्राचीनस्तथा व्यवहारः पारार्थ्यसाधर्म्यादित्यादि ।

तन्न विचारसहम् ।

षष्ठीस्थानेयोगेत्यादीनामिकोयणचीत्यादाविकपदोत्तरषष्ठ्याः कीदृक्सम्बन्धबोधतात्पर्यकत्वमिति सन्देहे स्थानपदार्थानुयोगिकसम्बन्धबोधकत्वमेवास्याइति तात्पर्यनिर्णायकत्वस्येव दीधीवेवीटामित्यादीनां तथात्वस्याभावात् । गुणवृद्धोर्निषेध उतेक्परिभाषायाइति सन्देहस्य च व्याख्याननिवर्त्यतया दीधीवेवीटामित्यादीनां प्रदर्शितपरिभाषायाइव सन्देहनिवर्तकत्वाभावात् सत्यन्तफलप्रदर्शनस्यासमीचीनत्वात् । किञ्च । सन्दिग्धार्थनिर्णायकत्वस्य बह्वीषु परिभाषास्वसम्भवः । यथा तस्मिन्निितीत्यादेः । यत्तु पूर्वस्य परस्य वेत्यादिसन्देहनिवर्तकत्वं कैश्चिदुच्यते । तदसत् । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वये शास्त्रतात्पर्यस्य निर्णीतत्वेनेकोयणचीत्यादेः पूर्वपरव्यवहिताव्यवहितेष्वात्रे प्रवृत्तेरेवनिश्चयस्य परिभाषाभावे सम्भावितत्वेन पूर्वस्य परस्य वेत्यादिसन्देहस्य कथमपि सम्भावयितुमशक्यत्वेन तन्निवर्तकत्वस्य सुतरामभावात् । किञ्च । सञ्ज्ञाशास्त्राणामपि लिङ्गवत्त्वमभ्युपगच्छतउपस्थितिप्रयोजकतावच्छेदकस्यैव लिङ्गपदार्थत्वमभिप्रेतमित्यनुमीयते । तस्य चात्रापि सत्त्वेन सत्यपि सत्यन्ते तत्रातिव्याप्तिस्तदवस्थैव ।

वस्तुतोलिङ्गपदार्थश्च शास्त्रीयत्वेन या परिभाषाप्रवृत्तिप्रयोजकतावच्छेदकता तदाश्रयः शब्दार्थान्यतरः । सार्वधातुकार्धधातुकयोरित्यादौ विधेयताप्रयोजकगुणपदोपश्लेषिकाधिकरणबोधकसप्तम्याविकोगुणवृद्धीतस्मिन्नितीत्यनयोः प्रवृत्तिप्रयोजकतावच्छेदके भवतइति तयोस्तत्तत्परिभाषालिङ्गत्वव्यवहारः । नहि विधिशास्त्रीयत्वेन रूपेण विधिशास्त्रीयं शब्दमर्थं वोद्देश्यतावच्छेदकीकृत्य संज्ञाशास्त्राणि प्रवर्त्तन्ते येन तेषामपि लिङ्गवत्त्वं शक्येतोपपादयितुमिति सन्दिग्धपदकृत्यप्रदर्शनमपि तथैव ।

किं च सूत्ररूपाणामित्यर्थबोधतात्पर्येण सूत्रोपात्तानामितिलेखनं प्रामादिकम् । सूत्ररूपेणोपात्तानामित्यादिक्लिष्टकल्पनया योजने तूपात्तपदमधिकं योजनाकेशस्त्व ।

एवं व्याख्यानतइत्यादीनामपि सन्दिग्धार्थकशास्त्रीयाणिणादिपदादिकमेव लिङ्गमिति तासां सन्दिग्धपदादिश्रवणरूपलिङ्गवत्त्वकथनमपि तथैव । यतः पदांशे जायमानस्य सन्देहस्य करणापाटवादिप्रयोज्यतया तस्य प्रमाणान्तरेण निवारणीयतया तन्निवृत्तौ व्याख्यानस्य नास्त्यपेक्षा । योपि कुत्र चिदानुनासिक्यादिसन्देहः सोपि पाठयितापठितृप्रमादप्रयुक्तइति सोपि न परिभाषाघटकसन्देहपदेन धर्तुं शक्यइति सन्दिग्धपदश्रवणस्य तल्लिङ्गत्वं न सम्भवति । सन्दिग्धपदेत्यस्य सन्दिग्धार्थकपदेत्येवं व्याख्यानेन योजनं तु क्लिष्टमिति विचारणीयं सुधीभिरिति शम् ॥

काशीस्थराजकीयपाठशालायाम् ।
धर्मशास्त्राचार्योराजारामशास्त्री
साङ्ख्यशास्त्राध्यापकसहकारी बालशास्त्री

---

॥ श्रीः ॥

जयति स जगदीशो यस्य नानाविधाना-
मचरचरचयानां निर्मितौ क्वापि नाभूत् ।
कथमपि लघुसाध्यं कर्हिचिद्गौरवेण
विरचितमिह नूनं चेतनं वा जडं वा ॥

॥ अथ प्राचीनज्योतिःशास्त्राचार्याशयवर्णनम् ॥

इह खलु ग्रहभ्रमणविषये द्वे मते तावत् सुप्रसिद्धे । एकं भूः स्थिरा तामभितश्च सूर्यादयो ग्रहा भ्रमन्तीति । अन्यच्च रविरचलस्तं परितः सभूमयः सर्वे ग्रहाः पर्ययं कुर्वन्तीति ।

तत्राद्यमतवादिनः प्रत्येकं ग्रहः पूर्वदिशं चरन् यावता कालेन भुवमभित एकं भगणं पूरयेत् तस्मात् कालादनुपातेन ग्रहस्यैकदिनसंबन्धिनीं समानां गतिं निश्चित्य तां मध्यमामभिदधानास्तस्याः सकाशादभीष्टकाले खेटस्य भचक्रेऽवगतं स्थानं मध्यमग्रहशब्देन व्यवहरन्ति । एतन्मते रविज्ञशुक्राणां वसुमत्याः समन्तादेकेनैव हायनेनैकं भ्रमणं भवतीति तेषां मध्यमा गतिस्तुल्यैव जायते । तथैव मध्यमं स्थानमपि ।

अन्त्यमतवादिनस्तु प्रत्येकं खेटस्य सूर्यमभितः परिभ्रमणकालमवगम्य । अत्र मते बुधशुक्रयोर्मध्यमे गती स्थाने चाद्यमतीयाभ्यां गतिभ्यां स्थानाभ्यामन्योन्यं च भिद्येते । सूर्यमभितो भगणपूर्तिकालस्य भेदात् । सूर्यभूम्योरन्तरे कदाचिदप्यसंचरतां कुजजीवरविजानां तु मध्यमगतयः स्थानानि चाद्यमतीयाभ्यो गतिभ्यः स्थानेभ्यश्च न भिद्यन्ते । यतस्ते प्रत्येकं तरणिं धरणिं च तुल्येनैव कालेन परिभ्रमन्ति ।

तत्र भारतवर्षीयाः सकलमूलग्रन्थकाराः सर्वे ग्रहास्तरणिं

परितो भ्रमन्तीत्यभिप्रेत्य ग्रहपातभगणान् निरणायिषतेत्येतदुपपादनार्थमुच्यते ।

द्वयोरपि मतयोर्वादिभिर्विक्षेपकेन्द्रार्थं मन्दस्पष्टे ग्रहे पातस्य योजनमङ्गीक्रियते । ग्रहाणां विक्षेपकेन्द्रमप्युभयत्र समानम् । तत्र ये मध्यमा ग्रहा उभयमतेऽपि समाना अत एव स्वस्वमन्दफलसंस्कृता अपि साम्यं न जहति तेषां पाता मतद्वये तुल्या एव स्युः । विक्षेपकेन्द्रस्योभयत्र तुल्यत्वात् । यथा कुजगुरुशनीनाम् । अतएव तेषां पठिताः पातभगणा अप्युभयत्र समानाः । मध्यमौ बुधशुक्रौ त्वाद्यमते मध्यमसूर्यतुल्यौ । अन्त्यमते च मूलग्रन्थोक्तशीघ्रोच्चसमानौ । यत एतन्मते बुधस्य किंचिदूनाष्टाशीतिसावनदिनैरेकं भगणं पूरयतः प्रत्यहं स्वकक्षायां द्वात्रिंशद्विकलाधिकपञ्चचत्वारिंशदुत्तरशतद्वयमितकलारूपा गतिः शुक्रस्य चेषन्न्यूनैः पादोनतत्त्वदस्रैः कुदिनैरेकं पर्ययं कुर्वतोऽनुदिनं निजमार्गे विकलाष्टकाधिकषण्णवतिकलात्मिका मूलग्रन्थेषु तत्तच्छीघ्रोच्चगतित्वेनोपन्यस्तेति तयोः पातौ नोभयमते तुल्यौ । विक्षेपकेन्द्रस्य तुल्यत्वेऽपि मध्यमस्य भेदात् । अतएव तयोः पातभगणाभ्यामपि नोभयत्र तुल्याभ्यां भाव्यम् । तावेतौ पातावस्मन्मूलग्रन्थकारैर्मन्दस्पष्टयोर्बुधशुक्रयोर्न प्रक्षिप्येते । अपितु मन्दफलसंस्कृते तत्तच्छीघ्रोच्च इत्यतः स्फुटमेतदवगम्यते यत् पठितेभ्यः सूर्यकेन्द्रकभ्रमणभगणाविरुद्धेभ्यो भगणेभ्य उत्पन्नेषु मध्यमेषु कुजजीवरविजेषु प्रक्षेपयोग्यं तद्विरुद्धेभ्य उत्पन्नयोश्च बुधभार्गवयोः प्रक्षेपायोग्यं तत्तच्छीघ्रोच्चे च प्रक्षेपयोग्यं पातं साधयन्तः पठिता ग्रहपातभगणा मूलोक्तबुधशुक्रशीघ्रोच्चरूपमध्यमबुधशुक्रसंपादकतरणिकेन्द्रकभ्रमणवादिमतीया इति । कथमन्यथा मध्यमबुधशुक्रप्रक्षेपयोग्यपातसंपादकाः शीघ्रकेन्द्रभगणाधिकाः पातभगणा न पठेरन् ।

अतएव भौमादीनां पञ्चानामपि ग्रहाणां सूर्यकेन्द्रकं भ्रमणं मूलकाराणामभिमतमित्यवसीयते । अन्यथा तन्मतीयपातभगणपठनानौचित्यात् ।

ननु ज्ञशुक्रयोः सूर्यकेन्द्रकं भ्रमणमस्तु मूलकाराणामभिमतम् । आद्यमतविरुद्धानां तयोः पातभगणानां पठनात् । कुजजीवरविजानां तु भूमिकेन्द्रकमेव स्याच्च सूर्यकेन्द्रकम् । तत्पातभगणानामाद्यमताविरुद्धत्वादिति चेन्न । रविकेन्द्रकभ्रमणास्वीकारे सूर्यस्य भौमादिशीघ्रोच्चत्वानुपपत्त्या रविकेन्द्रकभ्रमणस्यैव मूलकाराभिप्रेतत्वात् । तथाहि । भूमेरतिदूरो ग्रहकक्षायाः प्रदेशो ग्रहस्य शीघ्रोच्चम् ।

उच्चस्थितो व्योमचरः सुदूरे
नीचस्थितः स्यान्निकटे धरित्र्याः ।

इत्युक्तत्वात् । कक्षान्तर्गताया भूमेर्निर्गतया केन्द्रं स्पृशन्त्या रेखया स्पृष्टः कक्षाप्रदेश एव च भूमेर्दूरतरः । सच रवेः केन्द्रगतत्वाभावे रविसंमुख एव किमिति स्यात् । केन्द्रातिरिक्तस्थलस्थस्य रवेः केन्द्रसमानगतिकस्य मूलकृदभिप्रेतत्वकल्पनमपेक्ष्य तु रवेरेव केन्द्रत्वकल्पनाया लघीयस्या मूलकृदभिप्रेतत्वकल्पनमुचितम् ।

नच सूर्यमभितो ग्रहभ्रमणमभिप्रयतामाद्याचार्याणां भूमिं परितो भ्रमणप्रदर्शनमसंगतमिति वाच्यम् । लोकप्रतीत्यनुसृतये लाघवेन गोलस्थित्यवगतये च सूर्यधर्माणां धरण्यामारोपणस्य तैरङ्गीकरणात् ।

तदेवमारोपरसिका आचार्या बोधलाघवं लोकप्रतीतिं चानुसरन्त एव कल्पनालाघवेन सिद्धे अपि तरणिसहितस्य भपञ्जरस्य धरण्याश्चाचलत्वचलत्वे अन्योन्यस्मिन्नारोप्यैव तरणिं भचक्रं च चलं धरणिं चाचलां वर्णयांचक्रुरित्यपि प्रतीयते । भवति हि लाघवमयं रविः प्रातस्तत्रास्य इदानीमत्रास्तीति बोधयितुं जानन्ति चैवमेव लोकाः । एवं रवे राश्यन्तरसंचारमपि । कल्पनायां तु भवत्येव तरणेर्धरणिं परितो भ्रमणस्याङ्गीकरणे तरणिं परिभ्रमतां व्योमचारिणामपि भुवमभि भ्रमणमनायत्या स्वीकृतमिति गौरवम् । मतान्तरे च धरणेरेकस्या एवेति लाघवम् ।

तदेवं भूमेर्मूलोक्तस्य भचक्रभ्रमस्य सजातीयं स्वाक्षं परितो भ्रमणं रविभ्रमस्य सजातीयं क्रान्तिवृत्ते भ्रमणं च मूलकाराणामभिप्रेतमिति सिद्धम् ।

स एव विषयोऽर्वाचीनैर्ग्रन्थकारैर्न व्यज्ञायि । यतस्तेषु केचन कुजगुरुरविजेषु पातं संयोज्य साधिताद्विक्षेपकेन्द्राच्छरस्यानयनमुपलब्ध्यतिरिक्तोपपत्तिसहितं मन्यमाना बुधशुक्रयोः शीघ्रोच्चे पातप्रक्षेपेण शरानयनमुपलब्ध्यतिरिक्तोपपत्तिरहितमवगम्य बुधशुक्रयोः शीघ्रोच्चस्थाने यावान् विक्षेपस्तावानेव यत्रकुत्रस्थितयोरपि तयोर्भवतीत्यत्रोपलब्धिरेव वासनेत्याहुः । अन्येच बुधशुक्रयोर्मूलग्रन्थेषु पठितान् वास्तवानपि पातभगणानवस्तुभूतान् स्वल्पतया सुखमात्रार्थकांश्चाहुः । दैवगत्यार्यभटस्य बुद्धिपथमारूढम्

अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत् ।
अचलानि भानि तद्वत् समपश्चिमगानि लङ्कायाम् ॥

इत्यादिना प्रकाशितमपि भचक्रस्याचलत्वं क्षोण्याश्च स्वाक्षं परितो भ्रमणं ब्रह्मगुप्तः

आवर्तनमुर्व्याश्चेन्न पतन्ति समुच्छ्रयाः कस्मात् ।

इत्यनेन भ्रमणप्रारम्भोत्तरकाले संयुक्तानां पृथ्व्याकृष्टानां वस्तूनां पतनाभावमजानन् प्रारम्भकालिकभ्रमणस्वभावमेवावगच्छन्नपालपत् । लल्लश्च

यदि च भ्रमति क्षमा तदा

स्वकुलायं कथमाप्नुयुः खगाः ।
इषवोऽभि नभः समुज्झिता
निपतन्तः स्युरपांपतेर्दिशि ॥
पूर्वाभिमुखे भ्रमे भुवो
वरुणाशाभिमुखो व्रजेद्घनः ।
अथ मन्दगमात् तथा भवेत्
कथमेकेन दिवा परिभ्रमः ॥

इत्यनेन भूवायुसहितायाः क्षितेर्भ्रमणमजानन् । श्रीपतिश्च

यद्येवमम्बरचरा विहगाः स्वनीड-
मासादयन्ति न खलु भ्रमणे धरित्र्याः ।
किंचाम्बुदा अपि न भूरिपयोमुचः स्यु-
र्देशस्य पूर्वगमनेन चिराय हन्त ॥
भूगोलवेगजनितेन समीरणेन
केत्वादयोऽप्यपरदिग्गतयः सदा स्युः ।
प्रासादभूधरशिरांस्यपि संपतन्ति
तस्माद्भ्रमत्युडुगणस्त्वचलाऽचलैव ॥

इत्यनेनोभयमप्यजानन् ।

ननु तरणिमभितो धरणेः क्रान्तिवृत्ते भ्रमणे स्वीकृते रवेरिव नक्षत्राणामपि स्थिराणामुदग्दक्षिणायनं ध्रुवतारोन्नतिभेदश्चोपलभ्येत । नचापरिमेयां भचक्रदूरतामपेत्य धरणिभ्रमणमार्गस्यात्यन्तमणुतया न तथोपलब्धिरिति वाच्यम् । भकक्षादूरतायाः षष्टिगुणरविकक्षादूरत्वतुल्याया एव

भवेद्भकक्षा तीक्ष्णांशोर्भ्रमणं षष्टिताडितम् ।

इत्याद्यागमाभिहितत्वादिति चेन्न । छेद्यके कक्षावृत्ते प्रतिवृत्ते चैकस्यामेव दिशि मेषादिस्थितिं प्रदर्शयतामाद्याचार्याणामपरिमेयस्यैव भचक्रदूरत्वस्याभिमततया तद्विरुद्धमुपपत्तिशून्यं दूरत्वं बोधयतस्तस्य वचनस्यानभिज्ञप्रक्षिप्ततायाः स्फुटमेव प्रतीयमानत्वादिति शम् ।

प्राचीनज्योतिषाचार्यवर्याणामेवमाशयः ।
बापूदेवाभिधानेन यथाबुद्धि प्रदर्शितः ॥

---

## THE SAHITYA-DARPANA;

OR

## MIRROR OF COMPOSITION.

(*Continued from page* 68.)

*e.* It is the opinion of some that since this Figure (Paronomasia) cannot have a subject distinct from that of other ornaments, and since the ornaments coexisting with it, mentioned as they are by the sage afterwards frustrate or nullify it, it is to be recognized as the means of the perception of those ornaments. *The point* is thus discussed *by them*: In such an ornament as the Modal Metaphor (see § 703) or Indirect Description (see § 706), the second sense not being intended to be expressed *but to be suggested,* there is not even a shadow of Paronomasia. Even in such a Paronomastic Metaphor as that in the expression "Vidwan-mánasa-hańsa" (Thou swan of that Mánasa lake—the mind of the learned) though the word *mánasa* bears the meanings both of mind and the lake so named, the Paronomasia is nullified by the Metaphor, for the sense of the lake being what the word *mánasa* ultimately terminates in is the principal *signification*: and in Paronomasia both the meanings have an equal prominence. In such a Semblance of Contradiction as that in "*Sannihita-bálándhakárá bháswan-múrtih*" (She of the radiant form accompanied with the darkness of the hair; or, she of the solar form accompanied with new-born darkness) there is no Paronomasia, for the incongruous sense which is just perceived is not fully developed. So in the Semblance of Tautology (§ 632). Now *the above ornaments being dismissed as not properly coexistent with Paronomasia we arrive at certain others which do coexist with it.* For example: The figure Equal Pairing* (see §695) does exist in "*Yena dhawastamanobvahena*" &c. (§ 644. *a*) and "*Nítánám,*" &c. (§ 643. *f.*), as with the same facts (*viz.* 'preserving thee' and 'resembling the eyes,' respectively) are associated two distinct representations both connected with the subject-matter in the one case and both unconnected with the subject-matter in the other.

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखं ।
मोहात् समुत्क्षिपति जीवनमप्यकाण्डे
कष्टं प्रसूनविशिखः प्रभुरल्पबुद्धिः ॥

"Swechchhopajáta-vishayo'pi na yáti vaktum
Dehíti márgaṇa-śataiśch dadáti duhkham†
Mohát samutkshipati jívanamapyakáṇḍe
Kashṭam Prasúna-viśikhah prabhuralpabuddhih."

[The God of the flowery shafts and the master with a little mind are *equally* troublesome. *The one* while he himself has made a person the object *of desire* goes not *to him* to speak *in behalf of the party inflamed by him,* nay torments him with hundreds of arrows *perhaps* in envy of his body—*himself having none, nor stops here* but distracts him and untimely wrests his life. *The other,* while his will can command all wealth, is never disposed to say 'give,' and gives only pain on a hundred importunities, and under a mental delusion or groundless suspicion violently deprives men of their lives.]

* This and some other renderings of names of Indian figures of speech, I have adopted from Mr. Griffith's paper on "the Figures of Indian Poetical Rhetoric as illustrated in the Bhaṭṭi Kávya" appended to his 'Specimens of old Indian Poetry.'

† The scholiast explains the first half thus. While at his will he can make any one his subject, he obtains not the epithet *corporeal,* yet he can torment with hundreds of shafts.

Here we have the *ornament called* Illuminator (see § 696), since two persons, one (Káma) not connected with the subject-matter, the other (a little-minded master) connected with it, are associated with attributes *verbally* the same. In such *an example* as "*Sakalakalam pu-*[illegible] *samprati Sudháṅśu-vimbam*" (The city with its tumultuous noise,—or as the same words import—full in all its digits, has now become the lunar orb) there exists the ornament of Simile. Now as Paronomasia cannot possibly exist apart from *one of these figures* and as these may exist apart from Paronomasia, and since the latter, *coexisting as it does with some of these figures*, is felt to have a stronger strikingness, such cases properly go under the designation of Paronomasia, otherwise the designation would be altogether abolished.

*f.* To this we say: It is not true that Paronomasia has not a province distinct from that of other ornaments. For in "*Yena dhwasta*" &c. (§ 644 *a.*) it HAS a distinct subject, the figure of Equal Pairing (§ 695) in which BOTH the senses are not, as a rule, intended to be expressed having no place in it. Now, *for the sake of including the Equal Pairing in the present example,* if it be determined that of the two deities represented, Mádhava and Umádhava, only one is intended to be actually mentioned, the other would needs have to be *held as* hinted at, *and thus it would no longer be a case of Paronomasia.** Moreover in the Equal Pairing a single attribute only is apprehended as connected with more than one subject, whilst here more than one subject is apprehended as associated with distinct attributes. Nor in such a case as "*Sakala &c.*" (§ *e.*) is the Paronomasia the source of the apprehension of the simile, for on this supposition the Complete Simile (§ 648) would be without a subject. Should you say 'there is such a subject of the Complete Simile as 'this face is charming like the lotus,' I would reply—no, for if in '*Sakala &c.*' there is no *real* simile because there is a Paronomasia of words, what fault has the Paronomasia of sense committed in such an expression as 'charming'† *so as not to preclude, in this case too, a recognition of the simile.* The truth is that a verbal resemblance as well as one of quality or action may be made the basis of a Simile according to the direction of Rudraṭa: 'The Simile and the Conjunction (see § 739) are both clearly ornaments of sense but they may also be founded on a mere verbal resemblance.'

* An equal prominence of the two meanings being its condition.

† The reader must note a nice distinction here, before he can understand the passage. The charmingness of the face and that of the lotus are not one, nor even exactly similar, but are identified, by a Paronomasia of sense, into a point of resemblance, in the comparison of the two objects.

*g.* 'But then,' our opponent might further object, 'a sameness of quality or action alone is the proper basis of a simile, the resemblance in such a case being real; whilst a verbal sameness is not a reasonable support for the ornament, the resemblance here being unreal. Consequently the sameness of quality or action alone, not a verbal resemblance as in "Sakala &c.," is the proper subject of the Complete Simile, the Paronomasia of sense being set aside from such cases and *virtually from all cases*, seeing that otherwise there would be no room for the Complete Simile.'

*h. I would again reply*: No; for the unqualified definition of a Similitude that it is a community of attribute *or circumstance* is not exclusive of verbal sameness. And if in a case of verbal sameness the community, not being real, does not produce a Simile, then how in such an expression as "*Vidwanmánasa*" *(§ e.)*, does the attribution of the nature of a lake to the mind (figured as a place) *founded merely on the verbal identity of "mánasa" (mind)* and "*mánasa*" *(the lake Mánasa)*, become the occasion for the metaphor in the shape of ascribing the nature of a swan to the king. Moreover if the simile is to be admitted only in the case of a real resemblance, then why do you too recognize a frustrated simile in such a case as 'Sakala &c." *(§ e)*. Further it is the Paronomasia that sustains the similitude, not that the similitude sustains the Paronomasia, for the similitude is impossible prior to the Paronomastic composition. So it is proper that the ornament recognized or marked out in such cases be the simile which is the principal,—according to the maxim that designations are made after what is chief.

*i.* 'But', *it might be further objected*, 'in the province of the ornaments of word there is not admitted the Commixture (see § 757) *of figures* as principal and sub-ordinate, how then is it here maintained in respect of the Paronomasia and Simile?' I would reply—no, that non-admission respects only such figures as the Alliteration or the like, where a reference to the sense is wanting. Similarly is it to be understood of such ornaments as the Illuminator (§ 696) and the like, *when founded upon a verbal similitude, that it is these* that are the principal, the Paronomasia *being sub-servient thereto.*

*j. To anticipate an error :*

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥

"Sat-pakshá madhura-girah prasádhitáśá madoddhatárambháḥ
Nipatanti dhártaráshṭráh kála-vaśánmediní-prishṭhe."

(Prologue to the drama *Veṇí-saṅhára*).

("The well-winged, sweet-voiced swans *(haṅsa)*, under the influence of the season, are now descending upon the plains, ornamenting the quarters and uttering

loud cries of joy." Or "The sons of Dhṛitaráshṭra, of agreeable discourse and of proudly valiant undertakings, who are assisted by noble partisans, who have won all the quarters of the earth, now by fate's command fall *dead* upon the ground."

Here the words *'dhártaráshṭráh &c.'* being restricted to the signification of 'swan' &c. by the description of the Autumn which is in hand, the sense of 'Duryodhana' &c. is a suggestion of matter, originating in the power of the words (see chap. IV §257). And here since the second representation resulting from the present composition is meant only to be hinted *as the subject matter of the drama*, a comparison is not intended, and so there is neither the suggestion of a simile nor a Paronomasia. Thus *our present subject is* all clear *now.*

*(To be continued.)*

## THE ETERNITY OF SOUND;

### A DOGMA OF THE MI'M'A'NSA'.

By Dr. Ballantyne.

[From the Benares Magazine, August, 1852.]

*(Concluded from page 71.)*

Here we begin to perceive that this notable dispute is somewhat of a verbal one, and that Jaimini does not mean by Sound what his opponents mean by it. Sound, according to Jaimini, like the music spoken of in Othello, is of a kind "that may not be heard,"*—a "silent thunder" in its way. But let us hear Jaimini, who, having, disposed of the offered objections, proceeds to defend his own theory. "But it must be eternal [—this Sound —], because its exhibition is for the sake of another";† —and the commentator adds, in explanation,—"If it were not eternal, then, as it would not continue till the hearer had understood our meaning [—the *perceived* sound ceasing on the instant that it reaches the ear—] the understanding [of what was uttered] would not take place because of the absence of the cause;—for, to explain further, the understanding of what is uttered must *follow*—at however short an interval—the perception of the sound uttered; and if the sound perish on the hearing, as the *noise* does, then being no longer in existence, it cannot be the *cause* of anything. If, on the other hand, it continue to exist, for any period however short, after ceasing to be perceived,—it is impossible to assign any other instant at which there is any evidence of the discontinuance of its existence,—whence its eternity is inferred. Moreover, as it is prospectively eternal, so was it antecedently, which he considers to be proved, "By there being everywhere simultaneousness"* in the recognition of it by ever so many hearers, who could not *recognise* it if it were a new production. For example, when the word *cow* is uttered, a hundred persons recognise the word alike; and, the commentator adds, "a hundred persons do not simultaneously fall into an error,"—this being as unlikely as it is that a hundred arrows discharged simultaneously by a hundred archers should all by *mistake* hit the same object. Then, again, Sound is proved to be eternal. "By the absence of number;"†—for, *e. g.*, "When the word *cow* has been uttered ten times, we say 'The word *cow* has been uttered ten times,' but not 'Ten words of the form *cow* have been uttered.'" Further, Sound, as being indestructible, is proved to be eternal. "By there being no ground for anticipation"‡ of its destruction. "As, on the mere inspection of a web, one feels certain that 'This web was produced by the conjunction of threads, and it will be destroyed by the destruction of the conjunction of the threads,'—so, from the absence of the knowledge of any cause that should lead to the destruction of *Sound*, we conclude that *it* is eternal."

But some one may contend that Sound is a mere modification of the Air, and he may cite the *Śikshá*—that appendage of the Vedas which treats of pronunciation, which tells us that "Air arrives at the state of being Sound" after undergoing such and such treatment;—so Jaimini anticipates and repels this, "Because [if it were so], there would be no perception [by the organ of Hearing [of any object appropriate to it."§ He means to say that "modifications of the *Air* are not what the organ of Hearing takes cognizance of, Sound not being something *tangible*," as the Air is held by the Naiyáyikas to be, which Sound, they admit, has an altogether different substratum, viz., the Ether. Here Jaimini, though he does not himself hold Sound to be a quality of Ether, does not however disdain to avail himself of the *argumentum ad hominem.*

Finally, to put the seal upon the evidence of Sound's eternity, he refers to the Hindu scriptures;—"And [Sound is proved to be eternal] by our seeing a proof"|| of this, in the text which the commentator supplies, viz.,

* *Clown.* If you have any music that may not be heard, then to't again: but, as they say, to hear music, the general doth not greatly care.
*Musician.* We have none such, sir.
*Clown.* Then put up your pipes.
Othello. *Act* iii, sc. 1.

† नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

* सर्वत्र यौगपद्यात् ॥ १९ ॥

† संख्याभावात् ॥ २० ॥ ‡ अनपेक्षत्वात् ॥ २१ ॥

§ प्रख्याभावाच्च योग्यस्य ॥ २२ ॥

|| लिङ्गदर्शनाच्च ॥२३॥

परावृत्य गते क्षुद्रे
विपसादाहवप्रियः ॥ १८ ॥
बहुभिः सहयुद्धानः
परिभ्रम्य रणोल्बणाः ।
नामग्राहमुपेयुः केऽ-
प्यग्रे पूर्ववृता वयं ॥ १९ ॥
अभितोऽप्यागतान् वीरान्
योधी रणमदोल्बणान् ।
प्रत्यहन् तद्भुजादण्डे
रोमोद्गमभृतो मदात् ॥ २० ॥
शस्त्रभिन्नेभकुम्भेभ्यो
मौक्तिकानि च्युतान्यधुः ।
आहवक्षेत्रमभ्युग्र-
कीर्तिबीजोत्करश्रियम् ॥ २१ ॥
वीराणां विषमैर्घोषै-
र्विद्रुता वारणा रणे ।
शास्यमाना अपि त्रासा-
द्ब्रेजुर्धूताङ्कुशा दिशः ॥ २२ ॥
रणे बाणगणैर्भिन्ना
भ्रमन्तो भिन्नयोधिनः ।
निममज्जुर्गलद्रक्त-
निमग्नाः सुमहागजाः ॥ २३ ॥
अपरे ऽप्रसरित्पूरे
रथेषूच्चैस्तरेष्वपि ।
रथिनोऽभिक्रुधा क्रुद्ध-
हुङ्कृतैर्व्यसृजन् शरान् ॥ २४ ॥
खड्गनिर्लूनमूर्द्धानो
निपतन्तोऽपि वाजिनः ।
प्रथमं पातयामासु-
रसिना दारितानरीन् ॥ २५ ॥
वीराणां शस्त्रभिन्नानां
शिरांसि निपतन्त्यपि ।
अधावन् दन्तदष्टोष्ठ-
भीषणान्यरिषु क्रुधा ॥ २६ ॥
शिरांसि वरयोधाना-
मर्द्धचन्द्रहृतान्यपि ।
आददाना भृशं पादैः
श्येना व्यानशिरे दिशः ॥ २७ ॥
शस्त्रच्छिन्नगजारोहा
विभ्रमन्त इतस्ततः ।
युगान्तवातचलिताः
शैला इव गजा बभुः ॥ २८ ॥
क्रोधादभ्यापतद्दन्ति-
दन्तारूढा नृवाजिषु ।
अश्वारूढा गजारोह-
प्राणान् प्रासैरुपाहरन् ॥ २९ ॥
गजारूढान् मिलद्दन्ति-
दन्तसङ्घर्षजोऽनलः ।
योधान् शस्त्रहृतप्राणा-
नदहत् सहसा ऽरिभिः ॥ ३० ॥
उत्क्षिप्ता अपि हस्तीन्द्रैः
कोपनैः पत्तयः करैः ।
तद्रिपूनहरन् खड्ग-
पातैः स्वस्य पुरः प्रभोः ॥ ३१ ॥
उत्क्षिप्य करिभिर्दूरं
मुक्तानां योधिनां दिवः ।
प्रापि जीवात्मभिर्द्दिव्या-
ङ्गनाकण्ठपरिग्रहः ॥ ३२ ॥
खड्गैर्द्दिवलधाराले-
र्निहत्य करिणां करान् ।
यैर्भुवापि समं वृद्धः
शस्त्या तां पत्तयो ऽह्वरन् ॥ ३३ ॥
उत्क्षिप्याभिदिवं नीताः
पत्तयः करिभिः करैः ।
दिव्याङ्गनाभिरादातुं
रक्ताभिर्वृतमम्बरम् ॥ ३४ ॥
मिलितेषु मिथो योद्धुं
दन्तिषु प्रसभं भटाः ।
अगृह्णन् सहयुध्वानः
शस्त्रैः प्राणान् परस्परम् ॥ ३५ ॥

धन्विनस्तुरगारूढा
गजारोहान् शरैः क्षतान् ।
प्रत्यैक्षन् मूर्च्छितान् भूयो
योद्धुमाश्वसतश्चिरम् ॥ ३६ ॥

क्रुद्धस्य दन्तिनः पत्ति-
र्जिघृक्षोरसिना करम् ।
निर्भिद्य दन्तमुसला-
नारुरोह जिघृक्षया ॥ ३७ ॥

खड्गेनामूलतो हत्वा
दन्तिनोऽङ्घ्रिचतुष्टयम् ।
प्रपतिष्णोः प्रविष्टोऽपि
पदार्तिर्निरगाद्द्रुतम् ॥ ३८ ॥

करेण करिणा वीरः
सुगृहीतोऽपि कोपिना ।
असिना ऽसून् जहाराशु
तस्यैव स्वयमक्षतः ॥ ३९ ॥

तुरङ्गी तुरगारूढं
प्रासेनाहत्य वक्षसि ।
पततस्तस्य नाज्ञासीत्
प्रासघातं स्वके हृदि ॥ ४० ॥

तुरङ्गसादिनं शस्त्र-
हृतप्राणं गतं भुवि ।
अंचाल्योऽपि महावाजी
नाचस्तनयनो ऽत्यजत् ॥ ४१ ॥

द्विषा प्रासहृतप्राणो
वाजिपृष्ठदृढासनः ।
हस्तोद्धृतमहाप्रासो
भटो जीवन्निवाभ्रमत् ॥ ४२ ॥

खड्गेन शितधारेण
भिन्नोऽपि रिपुणा ऽश्वगः ।
नामूर्च्छत् कोपतो हन्तु-
मियेषच पतन्नपि ॥ ४३ ॥

मिथःप्रहारतो वाजि-
च्युतौ भूमिगतौ रुषा
शस्त्र्या युयुधतुः कौचित्
केशाकेशि भुजाभुजि ॥ ४४ ॥

रथिनो रथिभिर्बाणै-
र्हृतप्राणा दृढासनाः ।
कृतकार्मुकसन्धानाः
सप्राणाइव मेनिरे ॥ ४५ ॥

न रथी रथिनं भूयः
प्राहरच्छस्त्रमूर्छितम् ।
प्रत्याश्वसन्तं मत्वैनं
नागमद्युद्धलोभतः ॥ ४६ ॥

अन्योन्यं रथिनौ कौचि-
द्धतप्राणौ दिवं गतौ ।
एकामप्सरसं प्राप्य
युयुधाते वरायुधौ ॥ ४७ ॥

मिथो ऽर्द्धचन्द्रनिर्लून-
मूर्द्धानौ रुषितौ रुषा ।
खचरैर्भुवि नृत्यन्तौ
स्वकबन्धावपश्यतां ॥ ४८ ॥

रणाङ्गणे शोणितपङ्कपिच्छिले
कथंकथञ्चिन्ननृतुर्धृतायुधाः ।
नदत्सु तूर्येषु परेतयोषितां
गणेषु गायत्सु कबन्धराजयः ॥ ४९ ॥

इति सुरारिपुर्वृत्ते युद्धे सुरासुरसैन्ययो-
रुधिरसरितां मज्जद्दन्तिव्रजेषु तटेष्वलम् ।
अरुणनयनः क्रोधासीनभ्रमद्भ्रुकुटीमुखः
सपदि ककुभामीशानभ्यागमत् स युयुत्सया ॥५०॥

इति श्रीकुमारसम्भवे महाकाव्ये कवीन्द्रश्रीकालि-
दासकृतौ द्वन्द्वप्रधनंनाम षोडशः सर्गः ॥ १६ ॥

---

## श्रीगणेशाय नमः ।

यो भक्तानामुपरि कृपयैवात्तनैकावतारो
भूमेर्भारानुदधरदतिप्रौढदैत्यादिघातैः ।
यं वै नित्यं श्रुतिरनुपदं स्तौति नाप्नोति पारं
तं सर्वेषामधिपतिमजं भावयेऽभीष्टसिद्ध्यै ॥ १ ॥

इह खलु व्याकरणशास्त्रेऽव्ययप्रकरणे चादिगणे सिद्धान्त कौमुद्यादिषु पुदित्यव्ययं पठ्यते तदिदमव्ययमन्तस्थादि वौ-ष्ठ्यादि वेति संशयमापन्नेन मया बहूनि पुस्तकान्यनुसृत्य लेख-कप्रमादवशात् केषुचिदन्तस्थादि केषुचिच्चौष्ठ्यादिकमवलोक्य

निर्णयमलभमानेन पुनः सातिशयं व्याख्याग्रन्थानालोडयता पुष्कलप्रमाणान्युपलभ्य तान्येवावष्टभ्य च शाकटायनमपहाय सर्ववैयाकरणमते पुदित्यव्ययमोष्ठ्यादि तकारान्तमिति शाकटायनमते चौष्ठ्यादि लकारान्तमिति न तु कस्यापि* मतेऽन्तस्थादीति निरणायि । अत्र प्रमाणान्यधो लेखिष्यमाणानि गणरत्नमहोदध्यादयः षड्ग्रन्था अवसेयाः । तत्र तावत् प्रथमं प्रमाणं गणरत्नमहोदधिः । तद्यथा सत्फट्क्विच्चिरराचायविभाषेतिनचेत्पुत इति । सत् फट् क्वित् चिरराचाय विभाषा इति न चेत् पुत इत्येतान्यव्ययानि भवन्तीति पद्यार्थः । यदि पुदित्यव्ययमन्तस्थादि स्यात् तर्ह्यवश्यमत्र पद्ये चेदिति तकारस्य युति परे जश्त्वेन चेद्युत इति स्यात् । चेत्पुत इति चर्त्वघटितं रूपं कदापि न ब्रूयाद्गणरत्नमहोदधिकारः । उपलभ्यते च गणरत्नमहोदधिपुस्तकमात्रे चेत्पुत इत्येव पाठ इति । द्वितीयं गणरत्नमहोदधिकारेणैव कृता तद्व्याख्या । तथाहि चेदित्यन्तं व्याख्याय गणरत्नमहोदधिकारः स्वकृतटीकायामुदाजहार पुत् कुत्सायां पुत् कुत्सितं कसति गच्छति पुत्कस इति पुलिति लान्तमिति शाकटायन इति च जगाद । अनेन व्याख्यानेन पुत्पुलोर्मतभेदेन तान्तलान्तत्वविषये विकल्पः स्फुटतरं प्रतीयते न त्वन्तस्थादित्वं पुत्कसपुल्कसशब्दयोरोष्ठ्याद्योरमरादिकोशेष्वत्यन्तं प्रसिद्धत्वात् । तृतीयमव्ययप्रकरणे चादिगणविवरणे शब्दकौस्तुभो भट्टोजिदीक्षितकृतः । पुत् कुत्सायां कुत्सितमवयवं छादयतीति पुच्छः । डः । पुलिति लान्तमव्ययमिति शाकटायनः । तदुदाहरणं तु कुत्सितं कसति गच्छति पुल्कस इति । अनेनापि शब्दकौस्तुभोदितव्याख्यानेन पुत्पुलोरेवौष्ठ्याद्योर्मतभेदात् प्रतिभाति विकल्पो न पुनरन्तस्थादित्वं पुत्कसपुल्कसशब्दयोः पुच्छशब्दस्य चौष्ठ्यादित्वस्य कोशादिषु सुप्रसिद्धत्वात् । रामाश्रमाचार्यस्तु पुच्छ प्रमाद इति पवर्गीयादिं धातुमभ्युपगम्य तस्मादच्प्रत्ययं विधाय पुच्छशब्दस्य साधुत्वं वदन् बभ्राम बोपदेवकृतकाव्यकामधेनुसंज्ञकधातुपाठविरोधात् । तत्र हि छान्तवर्गे आछि आयाम इत्यारभ्य मुर्छा मोहसमुच्छ्राययोरित्यन्तमकारादिक्रमेण मकारादिधात्वन्तमभिधाय यरलवान्यतमादिधातुवर्णनप्रसङ्गे युच्छ प्रमाद इति रेफादिच्छान्तधातोरभावादथ लच्छ लच्छीत्यादि चाभिहितम् । क्षीरस्वामिना चात एवौष्ठ्यादिं पुच्छधातुमनङ्गीकुर्वता रामाश्रमपरिशीलितं पन्थानं परिवर्ज्य पुत्पूर्वकाच्छादेर्डप्रत्ययमासीय पुच्छशब्दस्य साधुत्वमभ्यधायि । अत एव च च्छ्वोः शूडनुनासिके चेति सूत्रस्थभाष्ये पुतं गुदं छादयतीति पुच्छं कर्मण्यण् पृषोदरादित्वात् पूर्वोत्तरपदयोष्टिलोप इति पुच्छशब्दसाधुत्वाय रामाश्रमातिरिक्तामेव विधामङ्गीकुर्वतः कैयटस्योक्तिः संगच्छते । अतो निःसंशयं युच्छ प्रमाद इत्यन्तस्थादिर्धातुरस्ति नौष्ठ्यादिरिति स्थितम् । अनयैव च दिशा पुच्छ प्रमादे धातुरोष्ठ्यादिरिति वदन्तोऽन्येऽपि मुकुटभानुदीक्षितादयो निराकृता वेदितव्याः । चतुर्थममरकोशीयं क्षीरस्वामिकृतं व्याख्यानम् । तथाहि द्वितीयकाण्डगतसिंहादिवर्गस्थपुत्तिकाशब्दमनुष्यवर्गस्थपुत्रशब्दयोर्व्याख्याने पुत् कुत्सितं तनोति पुत्तिकेति पुन्नरकात् त्रायते पुत्र इति च क्षीरस्वामी निरुवाच । अत्र यदि क्षीरस्वामिमते पुदित्यव्ययं न स्यात् तर्हि पुतं कुत्सितं तनोति पुतो नरकादिति च वदेत् । अनव्ययत्वेन सलिङ्गवचनत्वाद्द्रियमाणस्य विवरणस्य चात्र समानविभक्तिकत्वौचित्येन तत्तद्विभक्तावागतायां लोपाप्रसक्तेः । ननु पुत् कुत्सितमिति तु क्षीरस्वामिग्रन्थोऽनव्ययत्वेऽपि नानुपपन्नो भवितुमर्हति नरकं पुदिति ख्यातमिति हरिवंशप्रामाण्येन पुतो नपुंसकलिङ्गत्वादिति चेन्न नरकार्थकपुदित्यव्ययेनैव हरिवंशप्रयोगस्योपपत्तेर्नपुंसकत्वे मानाभावात् । पञ्चममरकोशव्याख्या रामाश्रमकृता । सा यथा द्वितीयकाण्डे सिंहादिवर्गे पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिकेति पद्यस्थपुत्तिकाशब्दविवृतौ पुत् कुत्सितं तायते ताय् संतानपालनयोर्बाहुलकात् को यलोपः केऽण इति ह्रस्वः प्रत्ययस्थादितीत्वम् । यद्वा पुत् कुत्सितं शब्दं तनोतीत्यन्येभ्योऽपीति डः । स्वार्थे कन् । अत्रापि पुत्तिकाशब्दोपरि पुत् कुत्सितं तायत इति व्याख्यानात् पुत् कुत्सितं शब्दमिति विवरणाच्चौष्ठ्यादि पुदित्यव्ययं प्रतीयतेऽन्यथा यद्वेति पक्षे पुतमिति रामाश्रमो ब्रूयात् । अनेनापि व्याख्यानेन नौष्ठ्यादित्वेऽव्ययत्वे च संदेहः । पुत्तिकाशब्दस्योपायसहस्रेणापि कथमप्यन्तस्थादित्वस्यासंभवात् । तथा तस्मिन्नेव काण्डे मनुष्यवर्गे आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी इति पद्यव्याख्यावसरे पुत्रशब्दविवृतौ रामाश्रमाचार्यः । पुनाति पूयते वा पूञ् पवने पुवो ह्रस्वश्चेति क्रः । यद्वा पुन्नरकात् त्रायते सुपीति कः । पुन्नाम्नो नरकाद्यस्मात् त्रायते पितरं सुतः । तस्मात् पुत्र इति ख्यातः स्वयमेव स्वयंभुवेति । अत्र यद्वेत्यारभ्य पुत्रशब्दस्य द्वितीये निर्वचनेऽविद्यमानविभक्तिकपुच्छब्दस्य नरकादिति विवरणं कुर्वतो रामाश्रमाचार्यस्य पुदित्यव्ययमोष्ठ्याद्यभिमतं भवतीत्यवगम्यते । तथैव द्वितीयकाण्डे शूद्रवर्गे निषादश्वपचावन्तेवासिचाण्डालपुत्कसा इति श्लोकार्धवर्णनसमये पुत्कसशब्दविवरणे पुत् कुत्सितं पुण्यं पुमांसं वा कसति कस गतावच् । मूलविभुजादिको वा । अत्रापि पुदित्यस्याविद्यमानविभक्तिकस्य पुमांसमित्यर्थं वदन् पुतोऽव्ययत्वमोष्ठ्यादित्वं चाभ्युपगच्छति

* किंतु श्रीयुतकोलब्रुकसाहेबवर्येण श्रीलकेरीसाहेबोत्तमेन स्वकृतव्याकरणे श्रीमन्महामहिममहामहात्मविलसन्नामधेयसाहेबश्रेष्ठेन च स्वरचितमहाकोशेऽन्तस्थादि पुदित्यव्ययमिति निरूपितमिति बोद्धव्यम् ।

रामाश्रमाचार्य इत्यसंदिग्धत्वमोञ्चादित्वस्याव्ययत्वस्य च पुतः। पुल्कसशब्दस्यौञ्चादिकस्य लोके बहुलं प्रसिद्धेश्च। तृतीयः काण्डे च पुंलिङ्गसंग्रहवर्गे पूरत्तुरप्रचुक्राश्च गोलहिङ्गुलपुद्गला इति पद्यव्याख्याने पुद्गलशब्दनिर्वचने स्पष्टमाह रामाश्रमः। पुदिति कुत्सायामव्ययम्। पुद्गिलति गीर्यते वा गॄ निगरणे पचाद्यच्। ऋदोरब्वा। अचि विभाषेति वा लः। पुद्गलति वा गल अदने स्रावे वा अच्। पुद्गलः सुन्दराकारे त्रिषु पुंस्यात्मदेहयोः। इति। अनेन पुद्गलशब्दव्याख्यानेन स्पष्टमेवौञ्चादित्वमव्ययत्वं च पुच्छब्दस्य शक्यते निर्णेतुमिति। पुद्गलशब्दस्यौञ्चादेर्जैनग्रन्थेषु बहुषु स्याद्वादमञ्जर्यादिष्वन्यत्र चाधिक्येन प्रसिद्धत्वात्। जैनग्रन्थेष्वप्येवमेव व्युत्पत्तिस्वीकाराच्च। षष्ठं भानुदीक्षितकृतामरव्याख्या। सा यथा पतङ्गिका पुत्तिका स्यादित्यस्य व्याख्यायां पुत् कुत्सितं तायते ताय् संतानपालनयोर्बाहुलकात् को यलोपः केऽण इति ह्रस्व इति। सुतः पुत्रः स्त्रियां त्वमी इति पद्यव्याख्यायां पुनाति पूयते वा पूञ् पवने पुवो ह्रस्वश्चेति क्रः। यद्वा पुन्नरकात् त्रायते सुपीति कः। पुन्नाम्नो नरकाद्यस्मात् त्रायते पितरं सुतः। तस्मात् पुत्र इति ख्यातः स्वयमेव स्वयंभुवेति। तथा निषादश्वपचावन्तेवासिचाण्डालपुल्कसा इति पद्यव्याख्यायां पुत् कुत्सितं पुण्यं वा पुमांसं वा कसति गच्छति कस गतावच्। मूलविभुजादिको वा। तथा गोलहिङ्गुलपुद्गला इति पद्यव्याख्यायां पुदिति कुत्सायामव्ययम्। पुद्गिलति गीर्यते वा गॄ निगरणे पचाद्यच्। ऋदोरब्वा। अचि विभाषेति वा लः। पुद्गलति वा गल अदने स्रावे वाऽच् इति। इयं च सर्वा व्याख्या रामाश्रमकृतव्याख्यानुपूर्वीतुल्यैवेति वक्तव्यांशस्य तत्रैवोक्तत्वाच्च किंचिदिहोच्यते विस्तरभयादिति। तस्मान्नास्ति कस्यापि मतेऽन्तस्यादिकं पुदित्यव्ययमित्यध्यवसीयत एवेति। अथ पुदस्त्राणात् ततः पुत्रमिहेच्छन्ति परत्र चेति हरिवंशप्रामाण्यादमरटीकायां पुतो छादयति पुच्छ इति क्षीरस्वाम्युक्त्यनुरोधाच्च दान्तस्तान्तो वा पुच्छशब्दसाधनावसरे पूर्वपदटिलोपप्रतिपादकप्रोक्तचरकैयटप्रामाण्याददन्तो वाव्ययभिन्नोऽपि पुच्छब्दः पुतशब्दश्चास्तीत्यन्यदेतत्। चादिगणपठितस्यैवौञ्चादित्वस्याव्ययत्वस्य च मया सप्रमाणमभिहितत्वात्। तदेवं निराकृतेऽपि कश्चिद्वङ्गदेशीयमहात्मा सिद्धान्तकौमुद्याः स्वकृतसरलानामकटीकायां चादिगणगताव्ययविवरणे पुत् कुत्सायामिति व्याजहार स यदि लेखकप्रमादपरंपरया मुद्रकाणां दोषमङ्गीकुर्यात् स्वाभिमतं चौञ्चादित्वं तस्याव्ययस्योररीकुर्यात् तर्हि न तं प्रति किमपि ब्रूमः। यदि तु तदव्ययमन्तस्यादि नौञ्चादीति मतं तर्हि प्रतिपादितपूर्वतत्तद्ग्रन्थविरोधः सिद्धान्तकौमुदीरचयितुरेव भट्टोजिदीक्षितस्य ग्रन्थेन शब्दकौस्तुभेन विरोधश्च दुर्वारः। शब्दकौस्तुभे हि पुच्छशब्दः पुत्कमशब्दः शाकटायनमञ्जौ पुल्कसशब्दश्चानेनैव पुदित्यव्ययेन पुलित्यव्ययेन च साधितः। राधाकान्तदेवोऽपि स्वकृतशब्दकल्पद्रुमाख्यमहाकोशे पुदिति नपुंसकलिङ्गमन्तस्यादि पदं प्रातिपदिकवर्गेऽवोचन्न पुनरव्ययमिति। इदं तु मिश्रणामिश्रणार्थकयुधातोः क्विपि तुकि सिध्यत्येव नैतावता मम क्वापि क्षतिरिति स्वाभिप्रायस्य वर्णितपूर्वत्वात्। अन्येषामपि चादिगणेऽन्तस्यादि पुदित्यव्ययमिति मन्यमानानां निराकृत्यर्थमयमेव मयोदितः पन्थाः सुगमः प्रतिभातीति। तदित्थमव्ययप्रकरणे चादिगणे पुदित्यौञ्चाद्यव्ययं सप्रमाणं सिद्धमेवेत्यलं बहुविलेखनेन विस्तरभयादुपरम्यत इति शम्॥

सन्तः सर्वं यद्दुरुक्तं मयास्मिन्  
यच्चान्यान्याद्वापि नोक्तं कथंचित्।  
तत् क्षन्तव्यं सारभागात्तचित्ता  
बद्ध्वा युष्मानञ्जलिं प्रार्थयेऽहम्॥ १॥

॥ पण्डितविन्ध्येश्वरीप्रसादशर्मणः ॥

---

## ॥ कणादाक्षपादौ ॥

इहतावदतिलौकिका अपि जना न विमतिं दधति यज्ज्ञानं सर्वपुरुषार्थानां तत्साधनानामपिच साधनमिति सर्ववस्तुभ्यो ऽधिकस्पृहणीयं। नतेन विना, दायक्रमाद्वा, कस्यचिदधिकारिविवेचननिपुणताविनाकृतस्य महाराजाधिराजस्यानुग्रहाद्वा, लब्धं निधिपतित्वं भूपतित्वं वा, सुखस्य लेशमपि जनयितुं जनस्यालं। प्रबुद्धाश्च पार्थिवा अपि राष्ट्रनियमनादिव्यापारेषु, निर्ज्ञानं न विनियुञ्जते, नापि कंचिदल्पुपकारकमपि तादृशमनुगृह्णन्ति, अनुगृह्णन्तोपि वा तस्माज्जनादनुग्रहानुरूपं प्रत्यभिनन्दनमलभमाना, अस्यानानुग्रहिणमात्मानं मन्यमाना, न विषीदन्ति। तदेवं लौकिके ऽतिनिकृष्टेऽपि विषये सर्वपुरुषार्थतत्साधनमूलत्वं सर्वसुखभोगानुकूलत्व प्रबुद्धव्यवहाराधिपतिजनानुग्रहहेतुत्वं च बोधविवेकचित्तप्रकाशाद्यपरपर्यायस्य ज्ञानस्य नैसर्गिक्यैव लोकमत्या सिद्धमिति पारमार्थिकेऽपि परमोत्कृष्टविषये, ज्ञानंविना, सुखस्यवा भगवदनुग्रहस्यवा नास्त्येवाशा। भगवदनुग्रहोहि प्रपत्त्याराधनोपासनभक्त्यादिनामकं भगवच्छरणोपसादनं विना दुर्लभः, शरणोपसादनंच, भगवतः षड्गुणैश्वर्यस्य दृढनिश्चयेन, स्वस्य धनदारशरीरबुद्ध्याद्यभिमानपरिहारपूर्वकपरमदैन्यनिर्णयेन च विना, न शक्यं। तावच्च तादृङ् निर्णयोऽपि दुर्लभएव न यावद् भगवद्भक्तसमागमः, खलजनसंगपरिहारः, परमेण चित्तैकाग्र्येण दीर्घकालादरपरिशीलनंच भवति। लौकिकेपि विद्याभ्यासे, तद्विद्यजनसहवासे, क्रीडाविनोदशी-

त्तसंगपरिहारं; चिरादरनिरन्तरमनोयोगंचान्तरेण, समीचीनबोधफललाभो बुद्धिमतामप्यसम्भाव्यएव। तस्माद्, व्यवहारे, परमार्थेवा, ऽभीप्सितफललाभस्त तत्फलसाधकतत्तदुपायपूर्णपरिचयंविना, न, कस्याप्यनुग्रहेण, सिद्ध्यति। इदंतु संभवेद् यद् यथा सम्प्रत्यज्ञानसागरनिमग्नमिमं भारतवर्षीयं जनमुन्नतपदद्रानादिना ऽनुजिघृक्षुर्देवी विजयिनी, ज्ञानप्रकर्षं विना तत्पदप्रदानासम्भवाद्· दत्तस्यापि तस्य दातृस्वीकर्तृसन्तोषानाधायकत्वाज्, ज्ञानप्रकर्षसिद्ध्यनुकूलशिक्षासाधनभूतपाठालयमुद्रायन्त्रादिभिस्तं जनं ज्ञानिनं कर्तुं प्रयतते, तथा परमेश्वरो ऽपि जनानां स्वस्वकर्मकृतां दीनतामवलोक्य, तादृक्कुकर्मनिवृत्त्यनुकूलज्ञानातिरेकसाधकानुपायान् संनिहितान् करोतीति। पश्यत यदितावत् कृतानुग्रहाणामपि गुरुराजपितृमात्रादिनिरभिसंधिहितचिन्तकजनैः सह व्यवहरणं महता ऽवधानेन साध्यं तर्हि कल्पयत सर्वज्ञस्य सर्वकर्तुर्न्यायदयार्जवनिर्दोषतानिधानस्य प्रबोधनवर्द्धनरक्षणाद्यनेकविधभक्तसुखदव्यापारप्रवर्तकस्य भगवतः शरणागमने कियच्चित्तैकाग्र्यं तदर्थंच कियज्ज्ञानमपेक्षितं। यदिहि भगवाननुगृह्यापि सर्वपुरुषार्थमौलिमपवर्गं प्राणिनां करतलामलकं कृत्वापि बोधातिशयेन नैनं जीवं युक्तं कुर्यात् तर्हि सो ऽनुग्रहो ऽनर्घ्यः सचापवर्गोऽपि व्यर्थएव भवेत्। यदि पुनरतिदुर्गतिगतोपि जन्तुरीश्वरेण ज्ञानदानपात्रीक्रियेत· तर्हि स स्वयमेव तां दुर्गतिमतीत्य, भगवद्दिष्टप्रकारेण भगवत्सन्निधिं व्रजेत्। तथाच, यदि पूर्वमेव दैवयोगादीश्वरानुग्रह, स्तर्हि पश्चादात्मपरमात्मनोरशेषविशेषपरिचयपूर्वकं भगवत्सान्निध्यं; यदिच पूर्वमेव कयापि सामग्र्या तादृक् परिचय, स्तर्हि पश्चाद् भगवदनुग्रहपूर्वकं तत्सान्निध्यं; सर्वथापि ज्ञानंविना भगवत्सान्निध्यं न भवेत्, भवदपिवा, पाषाणादीनां महाराजाधिराजकेलिभवनसंसर्गइव, नोचितस्वतुष्ट्यै भवेत्, किन्तु यथा श्रीमतां गृहेषु गृह्यकाणां शुकादीनां तत्रत्यानद्भुतान् रूपरसगंधस्पर्शशब्दानुपभुंजतामपि, क्रीडनकत्वादधिकां कामपि योग्यतामनर्हतां, निंद्या दशा, सुबोधविरहेण पारतन्त्र्यात्, तथा भगवतो मंदिरे स्वर्गे निवसतां, तत्रत्यमतुल्यं सुखं भुंजतामपि, मुक्तानां तद्गृहमंडनीभूतकाष्ठपाषाणादिमपेक्ष्यानतिप्रशस्यएवोत्कर्षो भवेत्। यदिहि स्वर्गवासिनो मुक्ता अनेकानद्भुतांचित्यनवान् पदार्थाननुभवन्तोपि तत्तत्त्वजिज्ञासवो न भवेयुस्तर्हि चेतनधर्माद् बहिर्भवेयुर्नहि चेतनस्यापूर्वं पश्यतो न तज्जिज्ञासोदेति। साचेयं देवानुगृहीतानां जिज्ञासा ज्ञानेनैव निवर्त्या इच्छाया विषयलाभनिवर्त्यतायाः स्वाभाविकत्वात्, एवंच क्रमेण, तेषां स्वात्मपरात्मनोरशेषविशेषबोधः स्यात् जातेचाशेषविशेषबोधे भगवदनुग्रहवशादेव तेषां भगवत्तुल्यं जगत्स्रष्ट्रादिसामर्थ्यमपि न दूरे तथाच कियतापि कालेनेश्वरानुग्रहलब्धसर्वज्ञानक्रियाशक्तयः सम्यक् पाठिताश्छात्राः स्वप्रज्ञादीप्तिवशादाचार्यादिव मुक्ताअपि भगवतो ऽतिरिच्येरन् तथाचसति भगवतः परममैश्वर्यं नाममात्रमवशिष्येत यदित्वस्मादेव भयादीश्वरो मुक्तानात्मनि विषये नम्रतरान् कर्तुं तेषां जिज्ञासां नैव निवारयेत् तर्हि वृथा तेषां भगवदनुग्रहसंपादनायासइति दुष्पुत्रादपुत्रइव जिज्ञासातोत्रप्रहारदूषितात् ज्ञानात् ज्ञानसामान्याभावएव वरमिति प्राप्नुयात्। यदिचेश्वरो ज्ञानातिशयवंचनेन मुक्तानां नम्रतां रक्षेत् तर्हि भारतवर्षे एतेषु दिनेषु प्रचरत् न स्त्रियो लिपिव्याकरणधर्मशास्त्रगणितादिज्ञानं लंभनीया यतस्तास्तथासति ज्ञानकृतविशेषाभावात् पत्यादीन् मान्याननादृत्य वर्तेरन्निति मौर्ख्यं स्वर्गमपि गतमिति स्वीकृतं स्यात्। तस्मात् किमपि ज्ञानमीश्वरानुग्रहेण न लभ्यं नास्तीति पूर्वोक्तो ऽतिप्रसंगः सुदृढएव। तदेतत् प्रसक्तानुप्रसक्तमित्यलमिदानीमेतेन प्रसंगोद्भावनीयेन विवेचितेन।

एवंच भगवदनुग्रहलभ्येप्यपवर्गे तत्संबद्धस्वात्मपरमात्मगताशेषविशेषविज्ञानमत्यावश्यकं तदन्तरेण पूर्णस्य परमेश्वरोत्कर्षस्वात्मगतापकर्षविषयकसंशयविपर्ययानध्यवसायादिभ्रमकलंकविरहितनिश्चयस्यानुत्पत्तेः तंचविना कायवाङ्मनोभिर्भगवच्छरणागमनस्यासंभवात् तच्चान्तरेण भगवदनुग्रहस्य दुःसंपादनत्वात्। असंपादितेच भगवदनुग्रहे क्वनाम मोक्षवार्तापीति।

एतदेवच विज्ञानमात्मानात्मविवेकइत्युच्यते। यश्च पामराणामपि देहेंद्रियादिभ्योऽनात्मभ्य आत्मनो भेदाधिगमः स न विवेकः। अशेषविशेषसाक्षात्कारकृतो भेदसाक्षात्कारो हि सः। तथाहि न परस्य धनमपहरणीयमिति लोकान् शिक्षयन्तो ऽपि यत् परधनमपहरन्ति तत् तेषां तादृशधर्मशास्त्रशाब्दबोधमात्रं न विवेक इत्यनुमापयति शाब्दबोधमात्रं तु परधनविषयकरागातिशयेन तस्य तिरोधीयते तथैव योयं देहादिभ्य आत्मनो भेदावगमः स लोकस्यानुमानिकः शाब्दो वा सर्वथाप्यतिचिरन्तनाविवेकवासनाधीनरागातिशयप्रतिबध्यइति युक्तं तादृशधर्मनिश्चयवतामिवोक्तप्रकारकात्मानात्मभेदज्ञानं पुनःपुनरधर्मइव देहाद्यात्मीकरणे ऽत्याग्रहपूर्वं प्रवर्तनं। अतो यदा भगवत्कृपया जातेन सर्वविशेषसाक्षात्कारमूलकभेदसाक्षात्कारेण दिक्प्रत्यक्षेणेव दिग्भ्रमस्य देहाद्यभिमानस्य निवृत्तिः स्यात् तदैव सर्वसंसारसंतापोपशमस्य मोक्षस्य सिद्धिः स्यादिति।

अथ यदि ज्ञानं मोक्षे ऽप्यावश्यकमुक्तरीत्या प्राप्तं कथं तर्हि नैयायिकैर्वैशेषिकैश्चैकविंशतिदुःखमध्ये ज्ञानं परिगण-

यद्विज्ञानस्यापि निवृत्तिर्मुक्तिकाले ऽभ्युपगता न विरुद्धा । मैवम् । तात्पर्याज्ञानात् । यतो ऽनादिप्रवाहप्रचलितानि यादृशानि ज्ञानेन्द्रियशरीराणि तानि सर्वथा ऽद्यावधि दुःखमेवाजनयन्निति तानि सर्वपुरुषार्थश्रेष्ठे मोक्षे सर्वथा वर्जनीयानीति विचार्य न्यायवैशेषिकाचार्यैस्तथा ऽभिहितमिति ।

मोक्षदशायां किं किमावश्यकं किंचानावश्यकं तदखिलं "जैमिनिबादरायणौ" नामके प्रकरणे विविच्य दर्शयिष्यामः ।

सर्वविचारकानुभवसिद्धं ह्येतद् यत् सांसारिकात्यल्पतुच्छनश्वरपरतंत्रज्ञानेंद्रियशरीरैरवश्यं वियोगो ऽपेक्ष्यइति ।

॥ २ ॥

अनन्ता जीवाः परमाणव आकाशः कालो देशश्च परमेश्वरवदेवानाद्यविनाशिनोऽङ्गीक्रियन्ते नच तावता भगवतः परमं स्वातंत्र्यं लेशेनापि हीयते तेषां सत्तायाः कार्योपयोगितायाश्च भगवदिच्छैकनियम्यत्वात् भगवतइव तेषामुत्पत्तिविरहे ऽपि नियामकान्तराधिष्ठानानपेक्षसर्ववस्तुसत्तापरिपालनसामर्थ्यलक्षणस्वातन्त्र्याभावात् नहि स्वातिरिक्तवस्तुनः सत्ताया अनादितामात्रेण चिकीर्षितोपयोगमात्रेणच कर्तुः स्वातन्त्र्यं बाध्यते जगत्सृष्टेः पूर्वं परमाणूनां जीवानां चानभ्युपगमेपि कालदेशयोः सत्त्वावश्यकत्वेन स्वातन्त्र्यभंगस्याप्रतीकारात् कालदेशयोश्चानभ्युपगमे भगवतएवानाद्यनन्तव्यापकत्वानां विलयप्रसंगात् यथाहि कालदेशयोरनादिरपि सत्ता भगवदिच्छैकमूलिकैवेति न तत्स्वातन्त्र्यक्षतिकरी तथा परमाण्वादीनामपि । यदिह्यनादिजीवादिसत्तया भगवतः स्वातन्त्र्यहानिः शंक्यते तर्ह्यनन्ततयाऽपि जीवादिसत्तया तद्धानिशंकाप्युचितैव भगवदिच्छानुसारित्वाद् यद्यनन्ता न बाधिका तर्हि ततएवानादिरपि सत्ता न तथेति । यदि भगवान् परमाण्वादिसत्तां नेच्छेत् तदापि सा निवृत्तियोग्या नेति स्वातन्त्र्यक्षतिशंकातु यदि परमेश्वरो ऽपूर्वोत्पादितानामपि जीवानां सत्तां नेच्छेत् तदापि सा निवृत्तियोग्यता नेति स्वातन्त्र्यक्षतिशंकया समानसमाधाना । यतो याननन्तस्थायित्वेन भगवान्निच्छति तेषां निवृत्तिं कथमिच्छेदेतदपि यैः स्वेच्छापरिपालितसत्ताकैः परमाण्वादिभिः कार्याण्यपाराणि दुरवगाहानि देवः सृष्टवांस्ताननादिस्वानुग्रहविषयान् निवर्तयितुं कथमिच्छेदित्यनेन तुल्यं ।

अथ परमाण्वादिसत्ताया अनादित्वे भगवतः स्वातन्त्र्यक्षतिर्न बाधिका तथापि तत्र न किमपि प्रमाणमस्ति भगवतो ऽचिन्त्यशक्त्यैवोपादानोपादेययोरुत्पत्तिसंभवादिति मन्यते तदा विभाव्यतां परमेश्वरस्यापि तदानीमेवाचिन्त्यशक्त्यैवोत्पत्तिसंभवात् तस्याप्यनादित्वं न स्यात् । यदिच लोके ऽतितुच्छस्याऽत्यल्पनियमापेक्षस्यापि कार्यस्योत्पत्तेः सर्वस्या उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्पूर्वकत्वदर्शनादस्य विश्वस्यासंख्यातगूढनियमसंततस्योत्पत्तिर्विना कर्तारमनुपपन्नेति जगदुत्पत्तेः पूर्ववर्ती कर्ता सिद्ध्यतीति मन्यते तर्हि भगवता ऽस्मदादिभिश्च सृष्टानां सर्वेषां कार्यद्रव्याणां सूर्यचंद्रतारकक्षितिसमुद्रप्रभृतीनां ग्रामनगरोपवनायतनदुर्गशस्त्रादीनां चावयवपूर्वकत्वं दृष्टमिति निरवयवकार्यद्रव्यासंभवात् कार्यद्रव्याणां च निरवयवचरमावयवकत्वस्यावश्यकत्वात् स चरमावयवो नित्य इत्येव परिशिष्यते यथाच नित्येनापि तेन न भगवत्स्वातन्त्र्यक्षतिस्तथोपपादितमधस्तात् । दृष्टमुल्लंघ्याचिन्त्यशक्तिमात्रोपष्टंभेन सर्वकारणान्यथाकरणे परमेश्वरस्याप्युत्पत्तिः प्रसज्यते धर्माधर्माचरणनिबंधनत्वंच स्वर्गनरकयोः शरणगमननिबन्धनत्वंच भगवदनुग्रहस्य न स्वीकर्तव्यमेव अचिन्त्यशक्त्यैव तस्य सर्वस्योपपत्तेः । आप्तोक्तत्वात् तत् सर्वं तथैव स्वीक्रियतइति यदि तर्हि परमाणूनामनादितापि हेतुतः स्वीकर्तव्यैव कोहि सल्लिंगाप्तवचनयोरपूर्वज्ञापकत्वे विशेषइति । यदिचोपादानापेक्षित्वाद् भगवतः कुलालकुविंदादिसाम्यं प्रसज्यत इति शंक्यते तर्हि सप्रयोजनप्रवृत्तिमत्त्वविवेकत्वादिभिः कुलालादिसाम्यं प्रसज्यतइत्युपादानानपेक्षित्वमिव निष्प्रयोजनप्रवृत्तिमत्त्वाविवेकित्वादिकमपि भगवतः स्वीकर्तव्यमापतेत् तस्मादुपादानापेक्षातोल्येप्युपादानानां परमसूक्ष्मत्वादृश्यत्वापरिगणनीयत्वादिभिरत्यन्तवैधर्म्येणोत्कृष्टत्वात् तेषामधिष्ठातुर्भगवतः कुलालादीनपेक्ष्यात्यधिकमैश्वर्यं स्फुटमेव । एवंसति कथमीश्वरस्याचिन्त्या शक्तिर्दृष्टसदृशत्वादितितु न शंकितुं युक्तं अचिन्त्यत्वस्य जन्यज्ञानाविषयाशेषविशेषत्वरूपस्यापरिगणितप्रभेदापूर्वकार्यकारणप्रबंधविषयकत्वरूपस्यवा केनचिदेकेन धर्मेण दृष्टसादृश्यवत्यामपि भगवच्छक्तावविरुद्धत्वात् ।

॥ ३ ॥

ईश्वरस्तावदपारदयासागरो न्यायिनां मूर्द्धन्यः सर्वस्वेष्टकार्यसमर्थः प्रेक्षावांश्च भूत्वा गुणदोषसंपर्कशून्यानसतोऽपि जीवानुत्पाद्य स्वयमेवच पापपुण्ययोस्तान् स्वतंत्रान् विधाय तान् सर्वात्मना पापान्निवारयितुं दयां न्यायं शक्तिं च दधदपि न निवारयति प्रत्युत तेषां पापमोचने स्वयं समर्थो ऽपि ये तस्योपदेशमतिलंघ्य वर्तन्ते तान् किलापारे नरकज्वलने पातयिष्यतीति न कदाप्युचितविचारकाणां मनः स्पृशति । किं कश्चिद् राजा पिता गुरुर्वा स्वयमेव योऽपराधानुष्ठाने स्वतंत्रीकृतो ऽपराधाच्च निवारितश्च तं दीनं जनं पुत्रं शिष्यं वा तमेवापराधमुद्भाव्योद्भाव्य यावज्जीवं दंडयेदेव नतु कदापि स्वेच्छैकमूलकं तदीयं तीव्रदुःखवेगं पश्यन्नपि दया-

प्रेरितः संस्तं पुनरुद्धरेत्*। नचाप्येतादृशेन कर्मणा सर्वलोकगर्हणीयचरितः स्यात् । कथंकिलोत्पत्तितो बलतो धनतः परिजनतो ज्ञानतश्चेश्वरैकाधीनो जनः सर्वनियंत्रा ऽचिंत्यशक्तिमता स्वतंत्रेण न्यायिना चेश्वरेणैव कुपथाद् व्यावर्तयितुं न शक्यइति बुद्धिमन्तः प्रत्येष्यन्ति । तथात्वे तस्य सर्वसामर्थ्यव्याघातात् । दयावैयर्थ्यात् । न्यायनैष्फल्यात् । सुफलोद्देशेन कृतस्य कर्मणो दुष्टफलपर्यवसानेन विसंवादिप्रवृत्तिकतया परमैश्वर्यविलयाच्च । किंच तेषां मुक्तानां स्वर्वासिनां सदैव नरके ऽतितीव्रतापं साक्षात्कुर्वतः पुनरुद्धाराशाशून्यान् जनान् पश्यतां, मुक्तिसुखं दुर्लभमेव । दीनोद्धरणे स्वतः सामर्थ्याभावात् । अचिन्त्यशक्तिमताचेश्वरेण स्वां शक्तिं दयांचाननुसंधानेनापुनरावृत्तये स्वतोनिर्दोषाणामेव जीवानां स्वकल्पितैरेव दोषैर्नरके पातितत्वेन स्वकृतमेतत्कर्मानुचितत्वेन दृष्टमपि नान्यथाकर्तव्यमिति प्रतिज्ञाग्रहवशादन्यथाकर्तुमनिच्छत ईश्वरस्य तज्जनोद्धरणविषयकप्रार्थनाया नैष्फल्यनिश्चयाच्च । यदिच जीवेभ्यः पापफलं दददीश्वरस्तानुद्धर्तुं न शक्तस्तर्ह्यस्मिन् विषये तस्य न्यायितया दयया परमस्वातन्त्र्येणाचिन्त्ययाच शक्त्या क्व पलायितं । यदिचानन्तमेव फलं पापेन जन्यतइति तेन स्थापितमतस्तद्विरुद्धं कथं तानुद्धरेदिति मन्यते तर्हि तेन स्वीयापारदयाविरुद्धं कथंनु तथा स्थापितं कथं सृष्टिकाले यानिमानिरपराधान् दुःखानर्हान् स्वमाहात्म्याभिनंदनायोत्पादयामि तेषां शरीरबुद्धीन्द्रियप्राणांश्च परमेण वैचित्र्येण भूषयामि तदेतत् सर्वं यथा व्यर्थं परमानर्थफलकं च न भवेत् तथा यतिष्य इति सावधानं न प्रवृत्तं । कथंवा सर्वज्ञस्येदृशः प्रमादोपि शंक्यते यस्य प्रेरणया विना ऽनन्तेष्वपि भौवनेषु पिंडेषु तृणमपि चलितुमपि नप्रभवति । एवंचापूर्वाननपराधानसमर्थान् स्वतःपापपुण्यपरिचयहीनान् सुखदुःखविषयकस्वाभाविकरागद्वेषवतः परतंत्रान् जीवान् सृष्ट्वा समस्तदुःखपापविपरीतसुखैकमयपरमपवित्रस्वभावोपि तेषु पूर्वपूर्वपुरुषक्रमेण पापं तन्मूलकदुःखंच संचार्यासर्वसाधारणेनोपायेन कांश्चिदेवोद्धरिष्यति न सर्वानित्येतद् बुद्धिमतां दयान्यायपवित्रतासर्वैश्वर्ययोग्यं न भाति । जीवानामनादिमिथ्याज्ञानवासनावशतया सुखदुःखाभावोद्देशेन स्वस्वमतिपरिणामानुसारेण कुशलमकुशलंवा कर्म कुर्वतां तदनुसारेण न्यायिना नियामकेन भगवता दत्तं सुखं दुःखं वोपभुंजानानां मध्ये यः सद्गुरुसमागमैकहेतुकसद्विद्यामूलकसदसद्विवेकेन पापहेतून् वर्जयन् भगवन्तं शरणं व्रजेत् स दयालुना तेन ज्ञानोत्कर्षप्रदानादिक्रमेण वितीर्णमपवर्गसुखमनन्तमनुभवेदित्येतु विचारकाणां बुद्धिमतां स्फुटं प्रतिभातीति ।

॥ ४ ॥

यदि तावद् यस्य ग्रन्थस्यैतिहासिकैः प्रमाणैश्चिरन्तनत्वमविकृतत्वं बहुभिर्विचारकैरपक्षपातिभिः परिगृहीतत्वं सिद्ध्यति तस्यार्थे स्वकपोलकल्पनाविजृम्भिते सहस्रशोऽनुपपत्तिग्रस्ते साधकवर्जिते विश्वासं कृत्वा स्वाभाविक्या उपपत्तिजिज्ञासायाः शान्तये परमेश्वरस्तदुपपत्तिं जानातीति कल्पयित्वा वर्तनमुचितं तर्हि स्वतः सिद्धस्य विपरीतबाधकप्रमाणवतो ऽनेकोपपत्तिसिद्धस्यान्यथानुपपत्त्यनुगृहीतस्यार्थस्य प्रतिपादके शब्दे विश्वासं कृत्वा स्वाभाविक्या ऐतिहासिकप्रमाणजिज्ञासायाः शान्तये परमेश्वरस्तस्यैतिहासिकप्रमाणं जानातीति मत्वापि वर्तनमुचितमेव ।

यदि चोपपन्नेऽप्यर्थे ऐतिहासिकप्रमाणविरोधेन बाधः शंक्यते तर्ह्यैतिहासिकप्रमाणवत्यप्यर्थे उपपत्तिविरोधेन बाधः सम्भवत्येव ।

प्रत्युत स्वतः संभविनोऽर्थस्य प्रतिपादकानामितिहासविलोपेपि प्रामाण्यमर्थबलात् स्वतएव सिद्धमितीतिहासादिकं नापेक्षते नहि द्वौद्वौ मिलितौ चत्वारइत्यादेरर्थस्य तत्प्रतिपादकशब्दीयेतिहासविलोपेप्यविश्वासयोग्यता ।

अनुपपन्नस्यचार्थस्य प्रतिपादकानां शब्दानां सत्स्वप्यैतिहासिकप्रमाणेषु विचारकाणां नोचितो विश्वासः । नचैतावता ख्रुष्टीयधर्मग्रन्थानामप्रामाण्यमस्माकमभिप्रेतमिति शंक्यं तस्यापि मीमांसातर्कपरिशोधिते निर्बाधे ख्रुष्टधर्मप्रचारोपजीविजनैरग्राह्यएवार्थे प्रामाण्यस्य व्यवस्थापनीयत्वात् ।

॥ विठ्ठलशास्त्री ॥

## THE THREAD OF GAUTAMA'S APHORISMS.

BY THE LATE DR. BALLANTYNE.

(From the Benares Magazine February 1852)

*(Concluded from page 102.)*

But, thus far, we have been shown an arrangement for hearing only one side of the question,* and how can we be sure that the opposite side is not the right one? [Before making up our minds we must hear both sides—§39—40.]

But an honest enquirer may have heard both sides and still be in perplexity. Is he to be turned adrift? Not at all. Honest discussion, with one who holds the same first principles, is open to him [§41].

There are yet others, besides honest enquirers, that are not utterly to be rejected. A person, not hopelessly irreclaimable, may shabbily *wrangle* for the sake of a seeming victory. [Here, therefore, he defines wrangling, §42.]

* Prov. xviii. 17.

A person, not perhaps hopelessly irreclaimable, may descend to even a lower depth of shabbiness than the wrangler, and may carp at others without undertaking to settle any thing himself. [Here, therefore, he defines cavilling, §43.]

Wranglers and cavillers, in default of good reasons, must take up with bad ones—with what *look* like reasons; and even an honest enquirer may mislead himself by taking the semblance of a reason for a real one. [The various possible semblances of a reason he, therefore, defines and divides, §44—49.]

But, whilst there are fallacies by which a man may deceive himself as well as others, there are other frauds which are employed only dishonestly for the deception of others. [These frauds he defines and divides, §50—57.]

Descending a stage lower, an opponent may employ arguments so futile as to be capable of deceiving no one. It is well to know in what consists the futility of such objections. [This he shows, §58.]

Finally, an opponent, sinking even below the former one, who *knew* what he was opposing though he could make none but a futile opposition), may be unable to understand the proposition [§59—60]. Here GAUTAMA'S patience is exhausted, *but not before*. Against every thing but that invincible combination of the spirit of contradiction with stupidity he seeks to arm himself at all points. An objection the most frivolous—or even futile—provided it be tendered by one who understands the proposition—he does not refuse to deal with. The objection might perplex some honest enquirer, and therefore GAUTAMA, or the follower who has imbibed his spirit, does not consider himself entitled to consult his own ease by scouting it, though he himself may see its futility plainly enough. It is fair to remember this when we meet with ludicrously frivolous objections gravely treated in a Nyáya work. The author is not to be supposed to have *invented* the objection. It was offered to him—offered very possibly for the purpose of vexatiously puzzling and perplexing—and the Naiyáyika will not allow himself to be puzzled and perplexed. The most cavilling opponent is not to be allowed the semblance of a victory; he shall not be allowed to boast even of having put the philosopher out of temper. This single triumph—such as it is—is reserved for the absolute blockhead.

Now, we should like to learn from the undervaluers of the *method* of the Nyáya, how could that method be much improved? You are not to imagine that you have answered this question when you have shown that there are some important matters not here noticed by GAUTAMA. You must be able to show either that there are important matters for which his system provides no place, or that he misarranges the order of procedure. We have explained his order of procedure, according to our own view of it. The question whether there is any thing within the range of conception, for which his system does not furnish its appropriate place, we have already discussed, after a fashion, in an article in a former number "on the Nyáya system of philosophy, and the correspondence of its divisions with those of modern science." On some of the points considered in that and in some subsequent papers we have seen reason to modify our opinion, and with a hasty notice of one of these points we shall conclude the present paper. Our corrections belong chiefly to the section of Inference, which the strictures of an anonymous critic constrained us to look into with more attention than we had done at the time of penning our first article on the subject.

At page 280, Vol. I. of the Magazine we remarked that we did not find in Mr. Colebrooke's Essay any reference to the condensed form of the syllogism exhibited in our text-book. It is not referred to by Mr. Colebrooke; and the reason is sufficiently obvious—viz., that Mr Colebrooke was engaged in giving a summary of the fundamental Aphorisms of GAUTAMA—of those Aphorisms that we have just presented to the reader,—and the consideration of the condensed syllogism did not fall in his way. It is in the works of the commentators that the condensed syllogism makes its appearance; and, when treating of these works, we may have occasion to say something more about it. From the Halls of Oxford, of Edinburgh, and of Germany, queries have reached us that have been elicited by our papers—all too crude as we admit our papers to have been. To these queries we shall strive to give, in due time, satisfactory replies. Meantime we shall not encroach upon the space of the present number of the Magazine further than to revoke our explanation of the terms concerned in Inference—wherever we may have spoken of the term *anumána* as signifying the act of inferring. It signifies—we now find—no such thing. It signifies, not the process but, the instrument employed in the process. This instrument, as explained by our authorities, is 'the consideration of a Sign':—it is, in other words, such knowledge as, when expressed in words, constitutes a *Universal Proposition* embodying the result of a process of Induction. The truths which embody themselves in such propositions may be looked upon as deposited in the memory, like the instruments of a man's trade in his workshop; and as looms produce webs, so do these (Major Premises *in posse*) produce inferences, only when they are brought into *operation*. The operation is, by the Naiyáyikas, technically named *parámarśa*—which signifies the application of a general principle to a particular case, or the recognition of a particular case as falling under some general principle

—in short, syllogizing. If the *anumána* had signified the process, instead of the instrument, the additional step of the *parámarśa* would have been an absurdity; and we apologize to the Naiyáyikas for having been so far misled by the familiar—and familiarly unobjectionable—use of the term *anumána* as to fall, for the time, into the error of supposing them open to the charge of holding any absurdity of the kind.

---

## VAIDIK ECHOES.

### Śushṇa and Cycnos.

Among the most ancient fragments attributed to Hesiod is a piece of 480 verses in which is related the combat between Hercules and Cycnos. This Cycnos is not a Swan, as the name might lead one to suppose: he is a personage whose name is not Greek, and who is often mentioned in the Veda. The hymns of the Indian collection relate the same combat in numerous passages with poesy several features of which re-occur in the fragment of Hesiod. Every one knows that the Greek Hercules is a solar personification identical with, or closely anloogous to the Indra of the Orientals; as regards Cycnos, he is Śushṇa (the dry) or the power which retains the rain within the clouds, and causes drought and sterility. The strife of Hercules and this demon is, consequently, the struggle of the sun against that power, whose defeat will cause the rain to fall. Cycnos, son of Ares, mounted upon a chariot with his father, raised the dust and infested the sacred groves. Apollo sends against him Hercules and his trusty squire Iolaos. The chariot is drawn by the immortal horse Arion* (in Sanskrit Arwan). Hercules is armed with a celestial shield which is to make him invincible. The combat of the two champions takes place in the height of summer. "When the shrill cicala, with dark wings, perched upon a branch, begins to sing summer to men, the cicala whose food and drink is the freshening dew, and who pours forth his song at morning and all day long in the fiercest heat, when the Dog-star scorches the skin; then the son of Zeus, Iolaos, shouted terribly to his horses, and at his voice they whirl the chariot on and raise up the dust of the plain: earth groaned beneath them. The foes too advanced like fire and storm."

The enemies ( themselves upon each other like rocks that roll down from the mountains. The spear of Cycnos cannot pierce the brazen shield: but the lance of Hercules wounds Cycnos in the throat and casts him lifeless to the ground. Here are some passages of a hymn of the Veda taken from among many:

"Indra has taken his quiver and his arrows. Thou hast smitten with thine arm the robber laden with prey. Śushṇa dared to strive against the Gods. Indra, from the height of the air, in the sight of heaven and earth, mounted upon thy car, firm and terrible, thou hast breathed upon this wretched one. He has touched with his thunder-bolt those clouds which descended not from heaven to earth, and which with their magic wings seemed to envelope that robber laden with his spoils. He has caused the milk of the celestial cows to gush forth. The waters poured down as we desired. Indra during several days has destroyed the hope of the robber: he has burst the gate of his cavern where he held the waters shut up; he has broken down his airy fortresses. He has torn Śushṇa in pieces, and at sight of his foe overthrown he has given up his soul to joy."

*From the French of M. Emile Burnouf. Revue des-deux Mondes* 1*st October* 1866.

* The whole history of this mythological horse, the name of which is in the Veda only the general term for a horse, has been localized by the primitive Greeks in the middle of Arcadia. There are the great Aroanian mountains, and the river of the same name which falls into the Ladon, an affluent of the Alpheus; on the bank of the Ladon, from the love of Neptune and Démétér sprang Arion, the primordial horse, who under the Greek name of Chrysaor has been regarded as the symbol of all aquatic animals. In a grotto on the banks of the Alpheus was an ancient wooden statue of Démétér with a horse's head, and bearing on the body the figures of a great number of animals. By discovering the Aryan origin of the name Arion comparative Philology gives us the key of all this legend.

---

## VAIDIK ECHOES.

### Hymns.

When the Aryan peoples quitted their common home in Asia they bore with them the ancient customs which were common to all their race; one of them is found at the bottom of all their traditions, that of sacrificing with fire and of singing while sacrificing. This measured and rhythmical chant is the *hymn*, a word which in Greek has no etymological signification, but which under its Vaidik form *(Sumna)* signifies good and beautiful thought, that is to say the expression of thought *par excellence.* The presence of this word in the most ancient Greek language proves that the Aryans of the Oxus composed hymns before the departure of the Hellenic and Indian migrations. These chants then were composed in the common tongue before they were written in more recent dialects. Time has caused to disappear all the hymns brought or produced by the Grecian migrations, although the sanctuaries of Greece may have preserved several of them till the time of her decay.

India alone has preserved hers, and the Veda is found to be the Aryan record which connects us most closely with our origin: its hymns may be considered as types of the sacred songs of all the peoples of our race and as the real Sacred Scripture of the East and of the West.

*(From the same.)*

## RÁVAṈ DOOMED. *

*Rámáyaṇa, Book I. Bombay Edition.*

Thus to the Lord by whom the worlds were made
The Gods of Heaven in full assembly prayed:
"O BRAHMÁ, mighty by thy tendered grace
Fierce RÁVAṈ, leader of the Giant race,
Torments the Gods, too feeble to withstand
The ceaseless fury of his heavy hand.
From thee well pleased, he gained, in days of old,
That saving gift by which he waxes bold;
And we, obedient to that high behest,
Bear all his outrage, patient and oppressed.
He scourges—impious fiend—earth, hell, and sky;
And INDRA, lord of Gods, would fain defy.
Mad with thy boon, he vexes in his rage
Fiend, Angel, Seraph, Bráhman, Saint, and Sage.
From him the Sun restrains his wonted glow,
Nor dares the Wind upon his face to blow;
And Ocean, necklaced with the wandering wave,
Stills the wild waters till they cease to rave.
O Father lend us thine avenging aid,
And slay this fiend, for we are sore afraid."
    They ceased. Then, pondering in his secret mind,
One way," He said, "to stay this scourge, I find.
Once, at his prayer, I swore his life to guard
From God and Angel, Fiend, and Heavenly Bard:
But the proud Giant, in o'erweening scorn,
Recked not of mortal foe, of woman born.
Man, only man, this hideous pest may slay:
None else can take his charmëd life away."
    When BRAHMÁ's speech the Gods and Sages heard,
Their fainting souls with hope reviving stirred.
Then, crowned with glory like a mighty flame,
Lord VISHṈU timely to the council came:
Shell, mace, and discus in his hands he bore;
And royal raiment, tinged with gold, he wore.
Hailed by the Gods, most glorious to behold,
With shining armlets, forged of burnished gold,
He rode his eagle through the reverent crowd,
Like the sun borne upon a darksome cloud.
Lost in deep thought he stood by BRAHMÁ's side,
While all the Immortals praised his name, and cried:
"O VISHṈU, Lord divine, thine aid we crave,
Friend of the worlds, the ruined Worlds to save.
Divide thy godhead, Lord, and for the sake
Of Gods and men man's nature on thee take.*
Shrined in the bodies of four children, spring
From the three wives of fair AYODHYÁ's king:
High rank with saints that godly prince may claim,
And those sweet queens, with BEAUTY, GRACE, and FAME.
Assume man's nature thus, and slay in fight
This common scourge, who laughs at heavenly might:
This giant RÁVAṈ who, in senseless pride,
Has, trusting to his own right arm, defied
The hosts of Heaven, and ever plagues with woe
Seraphs and Gods above and Saints below.
Crushed are the Blest, who roam through NANDAN's shade,
The Saint, the Seraph, and the Heavenly Maid.
We, with the Sages, Lord, to thee draw nigh,
And crave thy succour that the Fiend may die.
Angel and Bard before thee humbly bow:
Our surest hope, O conquering Lord, art thou.
Arise, O Lord, regard the world below,
And slay in fight the Gods' tremendous foe."
Thus prayed the Children of the Sky; the lord
Supreme of Gods, by all the worlds adored,
Thus to the suppliants in answer spake:
"Fear not, ye sons of Heaven, but comfort take;
RÁVAṈ, your terror, by this hand shall fall,
With son and grandson, lord and captain; all
His friends and counsellors, his kith and kin,
Shall share his ruin as they share his sin.
Thus will I triumph o'er the foe, and then
Dwelling on earth among the sons of men,
The while ten thousand seasons roll away,
Will guard her with mine own imperial sway."
    Then Nymph and angel, and the Minstrel throng
With heavenly voices, raised their choral song:†
And all the region, filled with music, rang
With lauds to MADHU's victor, while they sang:
'Go forth and fight, and strike the monster dead,
The scourge of Saints, immortal INDRA's dread;
The fell fiend RÁVAṈ, ravener‡ abhorred;
Slay him, and all his race, avenging Lord!
Then turn triumphant to thine home on high,
And reign for ever in the ransomed sky."

* The following lines are at present rough-hewn only: the translator will be thankful for criticisms and suggestions.

* Cf. Paradise Lost. Book III. 281.
"Their nature also to thy nature join,
And be thyself man among men on earth."

† Cf. Paradise Lost. Book III. 344.
"No sooner had the Almighty ceased, but all
The multitude of angels, with a shout
Loud as from numbers without number, sweet
As from blest voices, uttering joy, Heaven rung
With jubilee, and loud Hosannas filled
The eternal regions."

‡ *virávaṇam rávaṇam.* Literally RÁVAṈ who causes weeping: both words being formed from the root *ru* (Lat. *raueus rumor*): from which too comes the English word raven.

For a similar play upon the word cf. Paradise Regained.
"And saw the *ravens* with their horned beaks
Food to Elijah bringing, even and morn,
Though *ravenous*, taught to abstain from what they brought."

## ADVERTISEMENTS.

Dr. Ballantyne's publications, procurable from the English Librarian, *Queen's College Benares.*

| | Rs. | As. | P. |
|---|---|---|---|
| Aphorisms of the Sánkhya, Books II. III. IV. Sanskt. and English, ... ... ... ... ... ... | 0 | 12 | 0 |
| " " Books V and VI. do. | 0 | 12 | 0 |
| " " Yoga, Sanskrit and English, Part II. | 0 | 8 | 0 |
| Bhasha Parichchheda and Siddhanta Muktavali Sanskt. and English Part I. ... ... ... ... ... | 0 | 7 | 0 |
| Bacon's Novum Organum, Sanskrit and English Part I. | 0 | 12 | 0 |
| " " with Commentary Fasciculus II., ... ... | 0 | 14 | 0 |
| " " " " III.,... ... | 0 | 8 | 0 |
| " " Sanskrit Version Book I., ... ... ... | 0 | 12 | 10 |
| " " Fasciculus II, ... ... ... ... | 1 | 8 | 0 |
| " " " III, ... ... ... ... | 0 | 7 | 6 |
| " " " IV, ... ... ... ... | 0 | 6 | 0 |
| Elements of English Grammar, Sanskrit and English, ... | 0 | 6 | 0 |
| Synopsis of Science, Sanskrit and English Vol. I,... ... | 1 | 0 | 0 |
| " " II,... ... | 0 | 14 | 0 |
| " " III,... ... | 1 | 0 | 0 |
| " " Sanskrit / " " English } (both included) | 3 | 8 | 0 |
| Discourse on Translation, ... ... ... ... ... | | | |
| Heliographic Rules and Reasons, ... ... ... ... | 0 | 4 | 0 |
| Lectures on the Chemistry of the five Hindu Elements, ... | 1 | 4 | 0 |
| Lectures on the Subdivisions of Knowledge Part I, ... | 0 | 4 | 0 |
| " " II, ... | 0 | 4 | 0 |
| " " III, ... | 0 | 4 | 0 |
| Macbeth with Paraphrase, ... ... ... ... ... | 1 | 8 | 0 |
| "Does the Moon rotate?" ... ... ... ... ... | | | |
| Reprints for the Pandits No. I. ... ... ... ... | | | |
| Harris's Dialogue on Art, ... ... ... | 0 | 4 | 0 |
| " " No. II. Physical Science, ... ... ... | 0 | 8 | 0 |
| " " Part II. Hydrostatics and Pneucs, ... ... | 1 | 1 | 0 |
| " " No. III. Method of Induction (J. S. Mill),... | 0 | 12 | 0 |
| Reprints for the Pandits No IV. Metaphysics and Mental Philosophy Vol. I (from Berkeley), ... ... ... | 0 | 8 | 0 |
| " " " Vol. II. (from Stewart), | 2 | 0 | 0 |
| " " " V. Bacon's Novum Organum, | 0 | 12 | 0 |
| " " Tracts on Metaphysics, Logic and Mental Philosophy (from "An Outline of Metaphysical Enquiries,")... ... ... ... ... ... ... | 0 | 12 | 0 |
| " " VI. Elements of Logic (from Whately), ... | 1 | 2 | 0 |
| " " VIII. Political Economy Vol. I. (from Whately and De Quincy), ... ... ... ... | 0 | 12 | 0 |
| " " VIII. Elements of Rhetoric (from Whately) | 1 | 4 | 0 |
| " " IX. Chemistry Vol. I. (from Griffith and Faraday), ... ... ... ... ... ... | 1 | 8 | 0 |
| " " X. Physical Geography, (Mrs. Somerville), | 1 | 12 | 0 |

DR. BALLANTYNE'S "BIBLE FOR THE PANDITS." Consisting of the first three chapters of Genesis, diffusely and unreservedly commented in Sanskrit and English, with a lengthy introduction in English. Rs. 3-0-0.

LAGHU KAUMUDÍ VYÁKARAN in Sanskrit. The text is taken from DR. BALLANTYNE's last Edition. Rs. 1-2-0.

MÁNAVA DHARMASÁR, or the Ordinances of Manu, compmising the Indian system of duties, abridged and translated from the original Sanskrit by BÁBÚ ŚIVA PRASÁD. 2nd Edition. As. 8-0.

BODH CHATUSPATH CHANDRIKÁ, a Hindí and Sanskrit Primer. As. 4-0.

MAP of the CITY and SUBURBS of BENARES, defining the Mohullas and subdivisions of the Genaral Police jurisdictions; including also the CIVIL STATION and CANTONMENT OF SECROLE. SCALE 220 yards to the inch, Colored Rs. 5-0, Mounted on cloth and bound, book-shape 8 Rs.

## ANNOUNCEMENT.

In the Press, and shortly to be published, in one Vol. 8 vo. price 8 Rupees. A new Edition, corrected and enlarged, of

### THE LAGHU KAUMADI.

A SANSKRIT GRAMMAR.

With an English version, commentary and references by Dr. Ballantyne, late Principal of the Sanskrit College, Benares, re-edited by Ralph Griffith Esq., M. A. Principal of the Sanskrit College, Benares.

"The Translation of the Laghu Kaumudí made by the late Dr. Ballantyne has enabled even beginners to find their way through the Cabyrinth of Native Grammar." *Prof. Max Müller.*

May be procured from Messrs. Trübner & Co., London, the English Publishers.

*Now ready.—Price Rs.* 16.

A TRILINGUAL DICTIONARY; being a comprehensive Lexicon in ENGLISH, URDÚ and HINDÍ, exhibiting the syllabication, pronunciation, and etymology of English words, with their explanation in English, and in Urdú and Hindí in the Roman character, by Mathurá Prasáda Miśra, Second Master Queen's College, Benares.

"*Concentrates in itself the utility of the dictionaries of Webster, Richardson, Smart, Worcester, D'Rozario, Shakespear, Forbes and Monier Williams.*"

This work, containing nearly 1350 demy 8vo. pages of closely printed metter, in Brevier type is too heavy to be sent by book post. It may be procured direct from us, by Bangy Dâk; from any bookseller in Calcutta, Madras or Bombay; or from Messrs. Trübner & Co., London.

*Communications of a literary nature should be addressed to the* EDITOR; *all letters on business, to the Proprietors,* MESSRS. E. J. LAZARUS & Co., *to whom Drafts should be made payable.* ADVERTISEMENTS *will be charged for according to the space occupied.*

The PANDIT may be ordered of the Publishers, or through MESSRS. TRÜBNER and Co., LONDON.

*Annual subscription, in advance, including postage, Rs.* 12.

PRINTED AND PUBLISHED BY E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥

अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 9. Benares February 1st, 1867. Vol. I.

## ॥ प्रकरणपञ्चिकायां प्रमाणपारायणे ॥

### ॥ शब्दपरिच्छेदः ॥

॥ तृतीयः ॥

शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे बुद्धिः । शब्दविज्ञानापेक्षादात्ममनःसन्निकर्षाद्यदसन्निकृष्टार्थविषयं ज्ञानं तच्छास्त्रं नाम प्रमाणं । कः शब्दोऽभिमतः । वर्णाः । तेषामेव श्रोत्रग्राह्यत्वात् । श्रोत्रग्राह्येहि वस्तुनि शब्दपदं वर्त्तते । नच सत्वशब्दत्वयोरतिप्रसङ्गः । सत्तादिसामान्याभावात् । अनुवृत्ताकारावभासिनीहि बुद्धिः सामान्यसिद्धौ निबन्धनं । नच द्रव्यगुणादिष्वनुवृत्ताकारं परामृशन्ती बुद्धिरुदेति । यतो महासामान्यं सत्ताख्यं सिद्ध्येत् नापि ककारखकारादिष्वेक आकारोऽवभासते यतः शब्दत्वमभ्युपगम्येत । सदादिशब्दप्रतीतिस्त्वौपाधिकी । प्रमाणग्रहणयोग्यतौपाधिकः सच्छब्दः । श्रोत्रग्राह्यतौपाधिकश्च शब्दशब्दः ।

ननु वर्णातिरिक्तं पदमपि श्रौत्रमेव । तथाहि । नदीदीनेत्यादिषु वर्णाभेदेपि पदान्यत्वं प्रतीयते । नच वाच्यं वर्णाएव पदं । नदीदीनेत्यादितु क्रमभेदेन पदभेदबुद्धिरिति । वर्णानामक्रमिकत्वात् । देशनिबन्धनोवा क्रमो भवेत्कालनिबन्धनोवा । उभयविधोपि न वर्णेष्वास्पदं लभते । तेषां सर्वगत्वान्नित्यत्वाच्च । बुद्धिस्तु तेषां क्रमवती । तदनुरोधेन वर्णाअपि क्रमवन्तइति प्रत्येकं श्रवणेष्ववभासन्ते । एकत्तणवर्त्तिन्यांतु पदबुद्धावेकस्यां बुद्धिनिबन्धनोपि क्रमो नोपपद्यतइति कुतस्तद्भेदेनापि भेदप्रतिभासोपपत्तिः । किञ्च वर्णा बहव एकविषयाच पदबुद्धिरिति वर्णेभ्यो भिन्नं पदं । यदिच वर्णेभ्यो भिन्नं पदं नावभासते ततस्तेभ्योऽर्थप्रत्ययएव नोपपद्यते । एकैकवर्णप्रतीतौतावदर्थस्य नावगमः । नच सकलवर्णोपलम्भो युगपत्सम्भवति वर्णानां क्रमोच्चारणात् । उच्चारणानुसारित्वाच्चोपलब्धेः । वर्णानां च वाचकत्वे क्रमभेदे वक्तृभेदेचार्थप्रत्ययः स्यात् । तस्माद्वर्णेभ्योऽसम्भवन्नर्थप्रत्ययस्तदतिरेकिस्वनिमित्तपदप्रतीतिं प्रसाधयति ।

उच्यते । नदीदीनेत्यत्रापि वर्णातिरिक्तवस्त्वन्तरावभासो नास्ति । नकारादयएवहि प्रतीयन्ते । बुद्धिभेदस्तु क्रमभेदनिबन्धनः । नचेयमेका बुद्धिर्यतो वर्णानां बुद्धिनिबन्धनोपि क्रमो न स्यात् । भिन्नवर्णविषया भिन्नाएवहि बुद्धयो निरन्तरतयैकतामिवापद्यन्ते । तथाहि । श्रवणेन्द्रियनिबन्धनास्तावद्वर्णोच्चारणानुबन्धिन्यो बुद्धय उच्चारणभेदेनोत्पद्यन्ते । एवं स्मृतिरपि प्रत्येकवर्णोपलम्भप्रतिभावितभावनावशेन भवन्ती न सर्वविषयैकाऽवकल्पते । भावनानां भेदात् । एकपदबुद्धिस्त्वेकार्थप्रतिपत्त्युपायत्वनिबन्धना । अर्थप्रतिपत्तिश्चाप्रत्यक्षंतावन्निमित्तं न शक्नोति कल्पयितुं । तस्य निमित्तत्वानुपपत्तेः । न तस्य सत्तामात्रेण निमित्तता । सर्वदार्थप्रत्ययापत्तेः । प्रत्यक्षं भिन्नपदावभासि न भवतीत्युक्तमेव । तेन वर्णेष्वेव प्रत्यक्षेष्वर्थप्रतिपत्त्युपपत्तये कश्चिद्विशेष आश्रयितुं युक्तः । सर्वपूर्वपूर्वोपलम्भापेक्षत्वादन्त्यवर्णस्य । उपलम्भस्यच क्षणिकतया स्वतो विशेष्टुमशक्यत्वात्पूर्ववर्णोपलम्भजन्यः संस्कारएवाश्रीयते । सच स्मृतिहेतोः संस्काराद्भिन्नएव । स्मृतिहेतुर्हि संस्कारो यदुपलम्भप्रभावितस्तत्रैवोपलम्भान्तरं जनयितुमलं नार्थान्तर इत्यर्थविषया ततः प्रतीतिरनुपपन्नेति तदतिरेकिणः संस्कारस्याश्रयणं । तस्यच कार्यकल्प्यत्वाद्यथाभावे प्रतीतिद

र्शनं तथाभावएवोत्पत्तिरनुमीयते । तेन क्रमविपर्यये व्यक्तिभेदे व्यवधानेच कार्यादर्शनात्तत्रसंस्कारस्यानुदयादर्थप्रत्ययाभावः। यस्ययस्यचार्थस्य प्रतीतौ यस्ययस्य वर्णस्य निमित्तभावस्तस्यतस्य तदर्थप्रतीत्यनुगुणसंस्कारार्पकत्वं स्वाभाविकं । सहायविरहात्तु कार्यानुदयः सहायाप्तेश्च कार्योत्पत्तिरिति तेभ्यएवार्थप्रत्ययः । तस्माच्च प्रत्यक्षतो ऽनुमानतोवा वर्णव्यतिरिक्तपदोपपत्तिरिति वर्णात्मकमेव पदं ।

कः पुनरर्थः । अभिधेयः । अभिधेयएव कः । येनसह शब्दस्यापौरुषेयः सम्बन्धः । अथ कः सम्बन्धः । प्रत्याय्यप्रत्यायकभावः । नतर्ह्यपौरुषेयः सम्बन्धः । स्वभावतः शब्दस्याप्रत्यायकत्वात् । यदिहि स्वभावतएव शब्दोर्थं प्रत्याययेत्ततः प्रथमश्रुतः किं न प्रत्याययेत्ततोवगच्छामो ऽपेक्षते किञ्चिच्छब्दइति । देवदत्तादिपदेषुच पुरुषसङ्केतायत्ता ऽर्थप्रतीतिर्दृष्टेति गवादिष्वपि तदपेक्षैवाश्रीयते । तदपेक्षा चेदर्थावगतिर्न तर्ह्यपौरुषेयं शब्दस्य प्रत्यायकत्वं ।

उच्यते । यद्यपि प्रथमश्रुताच्छब्दादर्थं नावबुध्यन्ते तथापि स्वाभाविकमेव शब्दस्यार्थप्रत्यायकत्वं पुनः सङ्केतापेक्षं । तथाहि । वृद्धयोर्व्यवहरतोरेकस्य वाक्यं श्रुत्वा परस्य प्रवर्त्तमानस्य प्रवृत्त्या बुद्धिमनुमापयति । तस्याश्च शब्दश्रवणानन्तरभावित्वाच्छब्दस्य हेतुतां तावदवधारयति । किन्तु तेषां पार्श्ववर्त्तिनां व्युत्पित्सूनां ततः शब्दात् स्वयमर्थमप्रतियतां पुनरेषा विचिकित्सोदयते यदि प्रत्यायकः शब्दस्ततो ऽस्मानपि किमिति नार्थं प्रतिपादयति अथाप्रत्यायकएव ततो वृद्धमपि कथमवबोधयति । तेषामेवं विचिकित्सतां पुनरेषाकल्पना प्रसरति । नूनमस्ति कश्चिदस्य वृद्धस्य विशेषो यतोर्थमवबुध्यते । कोसौ विशेषइति निर्णीयतां । पुनः शब्दश्रवणे वृद्धव्यवहारावगतार्थप्रत्यायकत्वमात्रेण स्वयमर्थावगमदर्शनादर्थप्रत्यायकत्वावगमएव विशेषइति निर्धारणा जायते । न पुनःसङ्केतप्रतीतिर्वृद्धस्य विशेषइति कल्पना शक्या सङ्केतस्यैव तदानीमप्रतीतेः । व्युत्पन्नेतरशब्दार्थोहि सङ्केतवाक्यादर्थमवबुध्यमानः सङ्केतं प्रतिपद्यते । नान्यथा । नतूत्तरकालं सङ्केतदर्शनात्किमिति सङ्केतभूतमेव प्रत्यायकत्वं नाश्रीयते । न । शब्दस्वभावतएवार्थप्रतीतिरूपकार्यसिद्धेः । यदिहि शब्दमात्रादर्थप्रतीतिर्न सम्पद्यते ततः सङ्केतोपि तत्कालमिति कल्प्यते नान्यथा उपपद्यतेतु शब्दमात्रादेवार्थावगतिः प्राच्येन मार्गेण । नन्वेवंसति देवदत्तादिष्वपि कथं सङ्केतस्य कारणत्वं । उच्यते । प्रत्यक्षपरिदृष्टस्तत्रसङ्केतो नतु कल्पयितव्यः । तेन देवदत्तादिषु तस्यैवार्थप्रतीतिकरणत्वं । गवादिषुतु केवलकार्यदर्शनकल्पनीयो नावकाशं लभतइत्यपौरुषेय एतेषामर्थेन प्रत्याय्यप्रत्यायकलक्षणः सम्बन्धइति सिद्धं ।

असन्निकृष्टइति किमिदं । प्रमाणान्तरेणाप्रतीतइति । यद्येवं कथमसौ शब्दैरवबोध्यते । उक्तं वृद्धव्यवहारावगतसम्बन्धः शब्दो ऽवबोधकइति । यश्चार्थो न प्रमाणान्तरेणावगम्यते कथं तद्विषयो वृद्धव्यवहारो ऽवसीयते । कथंतरांच तद्विषया प्रतीतिरनुमीयते । कथंतरांच वाचकशक्तिः शब्दस्य कल्प्यतइति वाक्यार्थमातृकायामभ्यासो विधीयतामित्यत्रोत्तरं ।

सपुनरसन्निकृष्टो ऽर्थो नियोगार्थएव । नियोगोहि प्रमाणान्तरानवगतमपूर्वमर्थमवबोधयतीति वाक्यार्थमातृकायामुक्तं । नच नियोगएवैकस्तस्यावबोधकः । विषयव्यतिरेकेण तदप्रतीतेः । पदान्तराणामपि तदन्वयिस्वार्थपरतयैव व्युत्पत्तेस्तेन वाक्येनैव नियोगार्थः प्रतीयते । तत्र लिङादिप्रत्ययो नियोगार्थशरीरमेवाभिदधाति । प्रकृतिस्तद्विषयं । पदान्तराणिच विषयविशेषणं नामधेयं नियोज्यंचाभिदधति नियोगार्थप्रतीतौ व्याप्रियन्ते । सन्निपत्योपकारकाङ्गवाक्यानिच यद्यपि नियोगान्तरशून्यानि तथापि प्रधाननियोगान्वितस्वार्थाभिधायकतया तन्नियोगप्रतिपत्तावेव पदान्तरवद्वर्त्तन्ते । विनियुक्तमन्त्रसमाम्नायोपि द्रव्यभूतं नियोगजातं नियोगाङ्गतया समर्पयंस्तद्विशिष्टनियोगावगतावेवोपक्षीयते । नियोगाङ्गतातु योग्यतया प्रयोगकाले नैयोगिककर्मतत्साधनस्मारणेन मन्त्रजातस्य । अनुवादाअपि विधेयस्तुतिमुत्पादयन्तः स्तुतिविषयनियोगप्रतिपत्तिपराएवेति कृत्स्नएव वेदो ऽवबोधे ऽपूर्वे कार्यात्मनि प्रमाणं । अतएव को वेदार्थइति जिज्ञासमानेभ्यश्चोदनासूत्रेण कार्यात्मा वेदार्थइत्युक्तं ।

ननु सिद्धोपि ब्रह्मात्मको वेदान्तानामर्थः प्रतीयते । उच्यते । व्युत्पत्त्यपेक्षः शब्दोर्थमवबोधयति । व्युत्पत्तिश्च वृद्धव्यवहारे व्यवहारश्च कार्यप्रतीतिनिबन्धनः कार्यप्रतिपादकतयैव शब्दव्युत्पत्तिः । तत्रापि कश्चिच्छब्दः साक्षादेव कार्यप्रतिपादकतया व्युत्पद्यते कश्चिच्च कार्यान्वितस्वार्थपरतया

ननु विनापिव्यवहारं सिद्धार्थप्रतिपत्तिपरादपि लौकिकवचनात्सम्भवत्येव व्युत्पत्तिः । यथा पुत्रस्ते जातइति । अत्रहि मुखप्रसादादिभिर्लिङ्गैर्लौकैः श्रोतुर्हर्षोत्पत्तिरनुमीयते । हर्षोत्पत्तिश्च हर्षहेतुमन्तरेण न संभवति प्रियार्थप्रतीतिश्च हर्षहेतुरिति स्वात्मनि प्रतीतं तेन पुत्रस्ते जातइति वाक्येन प्रियोर्थो बोधितइति कल्प्यते । पुत्रजन्मैवास्य प्रियमुत्पन्नमिति प्रमाणान्तरावगतमिति तदभिधायकत्वमेव कल्प्यते । प्रतिपदमावापोद्धाराभ्यां व्यवहारइव स्वार्थविशेषसम्बन्धाध्यवसायः । तथा व्युत्पन्नेतरपदविभक्त्यर्थाः काष्ठैः पचतीति वर्त्तमानोपदेशेपि यत्पाके करणं तत्काष्ठशब्देन प्रतिपाद्यतइत्यवगम्य प्रत्यक्षेण काष्ठानां करणभावमवगच्छन्तः काष्ठशब्दं व्युत्पद्यन्ते । किञ्चास्य शब्दस्यायमर्थइत्यपि व्युत्पत्तिदृश्यते

न तत्र शक्यते वक्तुं कार्यान्वय्येव शब्दस्यार्थइति । अपिच येननामाकार्यान्विताभिधायित्वं तावताच कार्यान्विताभिधानम्याप्युपपत्तेर्न शक्यते विशेषान्विताभिधानशक्तिः कल्पयितुं । लोकेच सिद्धार्थान्येव प्रायशो वाक्यानि प्रश्नोत्तराणि दृश्यन्ते । कुशलं ते कुशलं ममेत्यादीनि ।

अत्रोच्यते। सर्वपुरुषाणांतावद्वृद्धव्यवहारएव प्रथमं व्युत्पत्तिरङ्गीकरणीया । नखलु व्यवहारमन्तरेण सिद्धान्वाख्याने व्युत्पत्तिरवकल्पते । यद्यपि मुखप्रसादादिभिर्हर्षोत्पत्तिरनुमीयते । हर्षोत्पत्त्याच हर्षहेत्ववगमस्तन्निमित्तताच शब्दस्य तथापि पुत्रस्ते जातइति वाक्यस्य पुत्रजन्माख्यहर्षहेतुप्रतिपादकता हर्षहेतूनामानन्त्याद् दुरनुमाना । नच पारिशेष्येण तत्प्रतिपादकत्वाध्यवसायः । भूतभविष्यद्वर्त्तमानानां सन्निहितव्यवहितानां पारिशेष्यावधारणाया अत्यन्तदुःकरत्वात् । व्यवहारः पुनः प्रत्यक्षविशिष्टार्थविषय उपलभ्यमानस्तद्बुद्ध्यनुसारेण तद्गतामेव शब्दस्य वाचकतामनायासेनापादयन् व्युत्पत्तावुपायतां गन्तुमलं । व्यवहारश्चेद्व्युत्पत्त्युपायः कः कार्यान्विताभिधानं शब्दानामपहरेत् । नहि कार्यावगमंविना व्यहारो ऽवकल्पतइत्युक्तं वाक्यार्थमातृकायां । एवं लोके यः सिद्धार्थपरतया पदानां प्रयोगः स लाक्षणिको भविष्यति । कार्यान्वयोहि परस्परपदार्थान्वयव्यभिचारीत्यविवक्षित्वा कार्यान्वयं परस्परपदार्थान्वयविवक्षयापि लोकाः शब्दं प्रयुञ्जते। विवक्षाबलेनच लक्षणया तत्परतापि तत्र निर्वहति । वेदेतु लक्षणानिबन्धनं किञ्चिन्नास्तीति स्वाभाविककार्यपरत्वं नापहर्त्तुं शक्यते । एवं सिद्धपरेपि वाक्ये या व्युत्पत्तिः सापि कार्यपरतां न विहन्ति । सर्वपदानामेवहि स्वाभाविकी वृद्धव्यवहारसिद्धा कार्यपरता । लाक्षणिकीच सिद्धपरतेति । सर्वव्यवहारेषु कार्यान्वयाव्यभिचारात् तदन्विताभिधायिता न शक्यते हातुमिति न सामान्यनार्थान्तरमात्रान्विताभिधानं शक्याश्रयणं अतश्च वेदान्तानामप्यात्मा ज्ञातव्यइत्यपुनरावृत्तये समाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरत्वमेव वर्णनीयं । अथ सिद्धार्थप्रतिपत्तिपरत्वेन व्युत्पत्तेरभावाद्वृद्धव्यवहारावगतायाः पदानामन्विताभिधायितायाएवानुपपत्तेः कार्यपरत्वेच प्रमाणान्तरावगतात्मस्वरूपानुवादकत्वेनैव वर्णनं कर्त्तव्यं । अपिच सिद्धार्थपरत्वेपि शब्दस्य न वेदान्तानां परमानन्दादिरूपत्वे ब्रह्मणः प्रामाण्यमवकल्पते । तत्राहि ब्रह्मस्वरूपानुवादेनानन्दादिरूपविधिरास्थेयः । ब्रह्मस्वरूपंच प्रमाणान्तरसिद्धमेवाश्रयणीयं । ब्रह्मशब्दस्यच लोकेप्रमाणान्तरसिद्धात्मवाचित्वेन सिद्धेर्वेदेपि सएवार्थः । तथाचसति नित्यप्रकाशपरमानन्दरूपविधिः सकलप्रतिपत्तिविरुद्धः । सर्वप्रतिपत्तिषुहि प्रमाणस्मृतिभूतास्वात्मा प्रकाशते । नच तत्र परमानन्दः संवेद्यते । नच सांसारिकदुःखाभिभूतत्वात्तस्याप्रकाशः। अभिभवानुपपत्तेः। अवच्छिन्नंहि दुःखमनवच्छिन्नश्चानन्दइति नाल्पीयसा महतो ऽभिभवः सम्भवति । स्वप्रकाशस्यचाभिभवावरणानभिव्यक्तीनामसम्भवएव । अभिन्नात्मतत्वप्रतिपादनमपि प्रमाणान्तरविरुद्धमेवेत्युक्तं तत्वालोके । सकलविकारशून्यतापि विज्ञानादिविकारोत्पत्तेः प्रमाणान्तरविरुद्धैवेति परस्परान्वयायोग्यतया नानन्दादिप्रतिपत्तिपरत्वं । अजरामरत्वयोस्तु प्रमाणान्तरप्रसिद्धेरेवानुवादत्वादप्रामाण्यमिति ।

नन्वशास्त्रमपि शाब्दमस्ति लौकिकं । तत्किमिति न लक्षितं ।

उच्यते । न शास्त्रव्यतिरिक्तं शाब्दमस्ति शब्दाद्धि यद्विज्ञानमसन्निकृष्टे तच्छास्त्रं स्यात् । नच वेदव्यतिरेकेण तत्सम्भवति लौकिकंहि वाक्यं नार्थे स्वयं निश्चयमापादयति लौकिकवचसामनृतभूयिष्ठत्वादर्थव्यभिचारस्य शङ्कितत्वात् ।

नन्वेवमपि वैदिकमपि वचो नार्थनिश्चायकं स्यात् शब्दोत्थापितस्यार्थज्ञानस्य लोके ऽर्थव्यभिचारित्वात् । अथोच्येत वैदिकाद्वचनात् स्वतस्तावन्निश्चयो जायते । पश्चात्तनस्तु संशयस्तद्विरोधादात्मानं न लभते । यथा स्थाणौ समीपवर्त्तिनि स्थाणुरूपतया निश्चिते नपुनरूर्ध्वता स्थाणुपुरुषसंशयं प्रसूते । उपलब्धौह्यव्यवस्थितायां सन्देहो जायते । यदाच निश्चितो ऽर्थस्तदोपलब्धिर्व्यवस्थितेति संशयो न युक्तः नचाव्यभिचारनिश्चयपूर्वकं शब्दस्य निश्चायकत्वं येन व्यभिचारे निश्चयो न स्यात् किन्तु स्वभावत इन्द्रियवच्छब्दो निश्चयहेतुरिति । तन्न । शब्दजनितं निश्चयमेवोभयथा दृष्ट्वा यः संशयः स निश्चयेनैव न शक्यते निरोद्धुं । वाक्यहेत्वन्तरोत्थोहि संशयो निश्चयेन निरुद्धते । यः पुनस्तत्प्रभवएव नासौ तेन निरुध्यते ।

उच्यते । युक्तस्तावल्लौकिके वचसि सन्देहः । पुरुषाहि प्रायेणानन्वितान्येव पदान्याशयदोषेणवा भ्रमेणवा प्रमादेनवा ऽशक्त्यावा प्रयुञ्जाना दृश्यन्ते । ततश्च यद्यपि तदुक्तानां पदानामन्विताभिधानसामर्थ्यमस्ति तथाप्यनन्वितार्थत्वशङ्कया नान्वयो निश्चीयते । कथंतर्हि लौकिकवाक्येभ्यो व्यवहारप्रवृत्तिः । उच्यते । अर्थसंशयेनापि लोको व्यवहरति । सन्दिग्धायामपि वृष्टौ वृष्ट्यायत्तफले कर्मणि प्रवर्त्तन्ते । अथवास्त्येव निश्चयोपायः । योहि पुरुष एवमवधारितो नायमशक्तो न प्रमादी सम्भवदेतदर्थविषयप्रमाणः सकलाशयदोषरहितश्च नायमविज्ञायार्थमन्वितार्थानि प्रयुङ्क्तइति तद्वाक्यप्रयोगस्यान्वयज्ञानपूर्वकत्वादन्वयज्ञानंतावदनुमीयते । अन्वयज्ञानाच्चान्वयोप्यनुमीयते । ज्ञानंहि ज्ञेयाविनाभावि ज्ञे-

यानुमाने भवत्येव लिङ्गं । तदेवं लौकिकाद्वचसो लिङ्गभूताद्वक्तृज्ञानमनुमीयते । ततो ऽर्थं निश्चित्य व्यवहारः प्रवर्त्तते । एवञ्च निश्चिते ऽन्वये निवृत्तानन्वयाशङ्काद्वाक्यादप्यर्थनिश्चयो जायते । किन्तु तस्यां दशायामनुवादकतैव । अतएव लौकिके वचने न शाब्दं प्रमाणं । अभिप्राये शब्दो लिङ्गं अभिप्रायोप्यर्थे लिङ्गं । शब्दस्त्वर्थे पश्चान्निश्चयं जनयन्नप्यनुवादकत्वान्न प्रमाणं । नन्वशक्तप्रमादिभ्रान्तदुष्टाशयप्रयुक्तानां पदानामनन्वितार्थत्वदर्शनाद्या पुरुषान्तरवचनेष्वनन्वितार्थत्वाशङ्का जायते तन्निवृत्तिमात्रएव पुरुषस्य वक्तुः शक्तत्वाप्रमादित्वाभ्रान्तत्वशुद्धाशयत्वज्ञानं व्याप्रियतां अर्थनिश्चयस्तु वाक्यादेवापास्तसन्देहादस्तु । माभूद्वक्तृज्ञानादनुमितादर्थनिश्चये जाते वाक्यस्यानुवादकत्वमिति । उच्यते । अभ्रान्तत्वंनाम पुरुषस्य यथार्थज्ञानयोगित्वं । आशयदोषविरहश्च यथाविदितार्थविवक्षायोगः । शक्तत्वंच यथाविवक्षितपदप्रयोगसमर्थत्वं । शक्तस्यापि यथाविवक्षिताविक्षेपश्चाप्रमादो यस्यैतच्चतुष्टयमस्ति स प्रत्ययितः । तस्यैतदवगतं । सम्यग्ज्ञाननियतो ऽस्य वाक्यप्रयोगइति । तेन तदीयवाक्यश्रवणे तद्गतसम्यग्ज्ञाननिश्चयो जायतएव । समीचीनंचेदं ज्ञानमुत्पन्नं यदर्थाविसंवादि यस्य यथाप्रतीयमानो ऽर्थोस्ति । तेन समीचीनज्ञाननिश्चयोऽन्तर्भावितार्थनिश्चयएवेति न संशयनिवारणमात्रे पुरुषविशेषविज्ञानं व्याप्रियते किन्त्वर्थनिश्चयएवेति निश्चिते ऽर्थे निवृत्तेच संशये वाक्यमर्थनिश्चयं कुर्वदप्यनुवादकत्वान्न प्रमाणं । ननुतर्हि वक्तृज्ञानस्यान्यतोनवगतस्यावगमकं पौरुषेयं वाक्यं तत्रैव शाब्दं प्रमाणमस्तु । न । तत्रानुमानत्वात् । वक्तृज्ञानेहि निश्चितसम्बन्धं प्रत्ययितवचनं । वक्तातु धर्मी । ज्ञानविशेषयोगिवाक्यप्रयोगिते तस्यैकदेशाविति । अतएवच भगवान्काश्यपो वेदान्पौरुषेयान्मन्यमानः शब्दमनुमानेन्तर्भूतमुवाच । तस्येदं कारणं कार्यमिति लैङ्गिकमुक्त्वा एतेनैव शाब्दमप्युक्तमिति । वक्तृज्ञानंहि कारणं वाक्यंच कार्यं । अतएवान्येनाप्युक्तं । वक्तुरभिप्रायंतु सूचयेयुरिति । सएव तथा प्रतिपाद्यमानतया आश्रयइति । ननु यदि वाक्याद्वक्तृज्ञानानुमानं वक्तृज्ञानाच्चार्थानुमानं तर्ह्यनवगतेर्थे कथं ज्ञानविशेषो ऽनुमातुं शक्यः । अर्थेनैव निराकारस्य ज्ञानस्य विशेषो यथानिर्ज्ञातोर्थो ज्ञाने विशेषमापादयति । उच्यते । अनवगतेप्यर्थे ज्ञानविशेषो ऽनुमातुं शक्यतएव । यादृशार्थप्रतिपादनयोग्यानि पदानि प्रयुक्तानि तादृशार्थविषयं ज्ञानमनुमीयते । नन्वेवं वेदस्य प्रामाण्यमपास्तं । व्युत्पत्त्यपेक्षोहि वेदे शब्दादर्थावगमो वृद्धव्यवहाराच्च व्युत्पत्तिः । वृद्धवाक्यानिचोक्तलिङ्गभूतानि न तर्हि स्वार्थे प्रमाणतया व्युत्पन्नानि । उच्यते । यावद्धि पदानामर्थविशेषवाचकत्वं नाश्रीयते तावद्वक्तृज्ञानविशेषोपि नानुमीयते । विशिष्टाद्धि वाक्याद्विशिष्टं ज्ञानमनुमातव्यं । नचार्थविशेषप्रतिपादकत्वादन्यो वाक्यस्य विशेषोस्तीत्याश्रयणीयमर्थविशेषप्रतिपादनसामर्थ्यमेतेषां । अर्थप्रतिपादनसामर्थ्यावधारणमेवच व्युत्पत्तिस्तावतैवार्थप्रतीतिः । अनुवादकत्वेपिच शब्दानामस्त्येव प्रतिपादकत्वं । वेदेच व्युत्पत्तिवशेनार्थप्रतिपत्तौ जातायां प्रामाण्यमुपपद्यतएव । ननु वेदेपि शङ्कया भवितव्यमित्युक्तं । सत्यमुक्तमयुक्तं तत् । नतावदन्वयनिश्चयानुपपत्तिर्वेदे सम्भवति । अशक्त्यादिकर्तृदोषवशेनह्यनन्वितार्थपदप्रयोगो लोके दृष्टः । नच वेदे कर्त्ता पुरुषोऽस्ति । तेन तदाश्रितास्तावद्दोषा अनन्वितार्थपदवचने हेतवो वेदे शङ्कामपि नावतारयन्तीत्यर्थनिश्चयस्तावज्जायते । नच पौरुषेयवाक्यजन्यनिश्चयस्य व्यभिचाराद्वैदिकेपि निश्चये व्यभिचारशङ्कोचिता । शङ्काया दर्शनमूलत्वात् । यथाभूतेहि यद्दृष्टं तत् तथाभूतएव पुनः शङ्कामवतारयति । अपिच लौकिकस्यापि तत्र व्यभिचारो नास्ति । प्रत्ययितवचनाद्यप्रत्ययितवचनमपि भेदेन न प्रतिपद्यमानः प्रत्ययितवचने दृष्टज्ञानपूर्वकत्वं स्मरन् तच्च स्मरणं ग्रहणाद्विवेकेनानवबुध्यमानो ग्रहणव्यवहारं प्रवर्त्तयति । तत्र न कश्चिद्विचारः ।

ननुच पदसङ्घातात्मकतया वेदाअपि पौरुषेयाएव । पदसङ्घाताहि पौरुषेयाएव दृश्यन्ते भारतादिवत् । तथाच काठकादिसमाख्यापि वेदे प्रवर्त्तते । नचेयं प्रवचननिमित्ता समाख्येति कल्पयितुं युक्तं । साधारणत्वात्प्रवचनस्य । बहवोहि प्रब्रूयुः । कर्त्तापुनरसाधारणो भवति । कृतस्य करणायोगात् । असाधारण्येन व्यपदेशा भवन्ति । यथा वैयासिकी भारतसंहितेति । अतः पौरुषेयत्वेन वेदानां तदर्थस्य प्रमाणान्तरविषयत्वात्तद्विषये वक्तुः प्रमाणाभावादनन्वितार्थत्वाशङ्का तत्पदेषु भवन्ती केन वार्यते ।

उच्यते । पुरुषकृतत्वंतावद्वेदानां साक्षाद्भारतादिवन्न स्मर्यते समाख्यातु पौरुषेयी प्रमाणान्तरानुसारिणी न शक्नोति स्वयमर्थव्यवस्थां कर्त्तुं । यदि विचारयन्तः कृतकतामेव निर्णेष्यामस्ततः करणनिबन्धना समाख्या भविष्यति । अथतु यत्नेनान्विष्यन्तोपि पौरुषेयतां नोपलप्स्यामहे ततः प्रवचननिबन्धनेति वक्ष्यामः । तदपिह्यसाधारणं स्यात् । प्रकृष्टं हि वचनं कस्यचिदेव कुत्रचिदेव तावत्सङ्घातात्मकत्वं न पौरुषेयतामनुमापयितुमलं । वेदार्थविषयवाक्यविरचनासामर्थ्यानुपपत्तेः । परस्परसंहतार्थतयात्तावद्वेदा उन्मत्तप्रणीताइति न शक्यते वक्तुं । उन्मत्तप्रणीतस्यचेयतो ग्रन्थराशेः प्रथममध्ययनं कथं प्रवर्त्तेत । कोहि सचेतस उन्मत्तोक्तमेतावन्तं ग्रन्थराशिं महता क्लेशेनाधीयीरन् धारयेयु रध्यापयेयुश्च । नच बुद्धादिग्रन्थवद्बुद्धिपूर्वकारिणा प्रोत्साहिता महत्यप्यायासे प्रवर्त्तेरन्नतो

बुद्धिपूर्वकारिप्रणीता वेदा इति वाच्यं । नहि बुद्धिपूर्वकारी वेदान् रचयितुमलं । तदर्थस्य बुद्धावारोपयितुमशक्यत्वात् । प्रमाणान्तराविषयोह्यपूर्वात्मा वेदार्थः स प्राग्वेदवचनेभ्यो बुद्धिस्थतामापादयितुमशक्यः । ननु बुद्धादिवचनान्यप्येवमेवापौरुषेयाणि स्युः । न । तेषां साध्यसाधनभावमात्रपरत्वात् । साध्यसाधनभावस्य कल्पयित्वापि बुद्धावारोपयितुं शक्यत्वात् । ज्योतिष्टोमादिषु दृष्टं स्वर्गसाधनत्वं चैत्यवन्दनादावारोपयितुं शक्यते । अपूर्वत्वपूर्वत्वादेवारोपणापि नावतरति । अथ कथं तुल्येपि लिङादिप्रयोगे बुद्धादिवचनानि साध्यसाधनभावमात्रपराणि न वेदवाक्यानि । उच्यते । बुद्धादिवचनानि तावत्साक्षाद्दृष्टकर्तृपुरुषाणि । तेन यदेव पुरुषाः प्रमाणान्तरेण बुद्धिस्थीकर्तुमीशते तद्विवक्षाप्रयुक्तान्येवेति निश्चीयते । पुरुषाश्च नापूर्वं बुद्धौ निवेशयितुमलं । साध्यसाधनभावंत्वन्यत्र दृष्टं बुद्धिस्थीकृत्य विरचयितुं क्षमन्ते । वेदेषुतु साक्षात्कर्त्ता नोपलब्धः । तेन स्वमहिमानुसारेणतावदर्थो बोद्धव्यः । सचापूर्वात्मकः प्रतीयते । प्रतीतेच तस्मिन् शक्तता तद्विषयवाक्यरचने बुद्धिपूर्वकारिणामिति पौरुषेयत्वं नानुमीयते । यएवहि पदसङ्घाताः पौरुषेयैर्विरचयितुं शक्यन्ते तत्रैव पौरुषेयत्वं दृष्टमित्यशक्यविरचनेषु पौरुषेयत्वानुमानं न क्रमते । नच पौरुषेयत्वंविना पदसङ्घातात्मकतैव नोपपद्यते । उच्चारणवशेनहि पदानि संहततामापद्यन्ते । तच्चोच्चारणान्तरपूर्वकंवा स्यात्स्वबुद्धिप्रभवंवा । दृश्यतेह्यनेनापि प्रयुक्तमन्येनाधीयमानं भारतादिवत् । यथाद्यतनाः पुरुषा भारतादिकमुच्चारणान्तरमधीयते तथा वेदानपि सर्वपुरुषाएवेति किमनुपपन्नं । अतः सिद्धमपौरुषेयाइति । अपौरुषेयाश्चेन्नास्ति प्रमाणान्तरापेक्षा प्रत्यक्षवत् । अतः प्रमाणमनपेक्षत्वादित्युक्तं ।

दृष्ट्वा ऽभ्युपेतमथ तंच पतिं पुरस्तात्
सङ्ग्रामकेलिकुतुकेन घनप्रसादम् ।
योद्धुं मदेन मिमिलुः ककुभामधीशा
बाणान्धकारितदिगम्बरगर्भमेत्य ॥ १ ॥
देवद्विषां परिवृढो विकटं विहस्य
बाणावलीभिरभितः कुपितो ववर्ष ।
शैलानिव प्रबलवारिधरो गरिष्ठा-
नम्भस्ततीभिरथ गाढमनारताभिः ॥ २ ॥
जम्भद्विषत्प्रभृतिदिक्पतिचापमुक्ता
बाणाः शिता असुरराजकबाणसङ्घान् ।
अह्नाय तार्क्ष्यनिवहाइव नागपूगान्
सद्यो विचिच्छिदुरलं कणशो रणान्ते ॥ ३ ॥
तैः प्रज्वलत्फलमुखैर्विशिखैः सुरारिं
नामाङ्कितैः पिहितदिग्गगनान्तरालैः ।
प्राच्छादयंस्तृणचयैरिव हव्यवाहं
चिच्छेद सोपि सुरसैन्यशरान् शरौघैः ॥ ४ ॥
दैत्येश्वरो ज्वलितरोषविशेषभीमः
सद्यो मुमोच युधि यान् विशिखान् सहेलम् ।
ते प्रापुरुद्भटभुजङ्गमभीमभावं
बाढं बबन्धुरपि तांस्त्रिदशेन्द्रमुख्यान् ॥ ५ ॥
ते नागपाशविशिखैरसुरेण बद्धाः
श्वासाकुलाकुलमुखा विमुखा रणान्तात् ।
दिङ्नायका बलरिपुप्रमुखाः स्मरारि-
सूनोः समीपगमन् विपदन्तहेतोः ॥ ६ ॥
दृष्टिप्रपातवशतोपि पुरारिसूनो-
स्ते नागपाशघनबन्धविपत्तिदुःखात् ।
इन्द्रादयो मुमुचिरे स्वयमस्य देवाः
सेवां व्यधुश्च पुनरेत्य महाजिगीषोः ॥ ७ ॥
उद्यत्प्रकोपदहनो ऽथ सुरेन्द्रशत्रु-
रह्नाय सारथिमवोचत चण्डवाहुः ।
बद्धा मया सुरपतिप्रमुखाः प्रसह्य
बालस्य धूर्जटिसुतस्य निरीक्षणेन ॥ ८ ॥
मुक्ता बभूवुरधुना तदिमान् विहाय
कर्तास्म्यहं समरभूमिपशूपहारम् ।
तत् स्यन्दनं सपदि वाहय शम्भुसूनुं
द्रष्टास्मि दर्पितभुजाबलमाहवाय ॥ ९ ॥
॥ युग्मम् ॥
तत्स्यन्दनः सपदि सारथिसम्प्रणुन्नः
प्रारब्धवारिधरधीरगभीरघोषः ।
चण्डं चचाल दलिताखिलशत्रुसैन्य-
मांसास्थिशोणितसुपङ्कविलुप्तवेगः ॥ १० ॥
दृष्ट्वा रथं प्रलयवातचलद्गिरीन्द्र-
कल्पं दलद्बलविरामविशेषरौद्रम् ।
अभ्यागतं सुररिपोः सुरराजसैन्यं
क्षोभं जगाम परमं भयवेपमानम् ॥ ११ ॥
प्रक्षुभ्यमानमवलोक्य दिगीशसैन्यं
शम्भोः सुतं समरकेलिकुतूहलोत्कम् ।

उद्दामदो:कलितकार्मुकदण्डचण्ड:
प्रोवाच वाचमुपगम्य स कार्त्तिकेयम् ॥ १२ ॥
रे शम्भुतान्तव शिशो वत मुञ्च मुञ्च
दौर्हृद्यमद्य विरम त्रिदिवेशकार्य्यात् ।
शश्वत् किमद्य भवतो ऽनुचितैश्चरित्रै-
र्बालाब्जकोमलभुजाक्रम भीरुभूते: ॥ १३ ॥
एकस्त्वमेकतनयो ऽसि गिरीशगौर्यो:
किं यासि कालविषयं विषमै: शरैर्मे ।
तत् त्रासतो ऽपसर जीव पितुर्जनन्या:
पूर्णं प्रविश्य वरमङ्कतलं विधेहि ॥ १४ ॥
सम्यक् स्वयं किल विमृश्य गिरीशपुत्र
जम्भद्विषो ऽस्य जहिहि प्रतिपक्षमाशु ।
एष स्वयं पयसि मज्जति दुर्विगाहे
पाषाणनौरिव निमज्जयते पुरा त्वाम् ॥ १५ ॥
इत्थं निशम्य वचनं युधि तारकस्य
कम्प्राधरो विकचकोकनदारुणाक्ष: ।
कोपात् त्रिलोचनसुतो धनुरीक्षमाण:
प्रोवाच वाचमुचितां परिमृज्य शक्तिम् ॥ १६ ॥
दैत्याधिराज भवता यदवादि गर्वात्
तत् सर्वमप्युचित मेव तवैव किन्तु ।
द्रष्टास्मि ते प्रवरवाहुवलं वरिष्ठं
शस्त्रं गृहाण कुरु कार्मुकमाततज्यम् ॥ १७ ॥
इत्युक्तवन्तमवदत् त्रिपुरारिपुत्रं
दैत्य: क्रुधोष्ठमधरं किल निर्विभुज्य ।
युद्धार्थमुद्भटभुजावलिदर्पितोऽसि
वाणान् सहस्व मम शोणितरक्तपृष्ठान् ॥ १८ ॥
दु:प्रेक्षणीयमरिभिर्धनुराततज्यं
सद्योविधाय विषमान् विशिखान् न्यधत्त ।
सक्रोधभीमभुजगेन्द्रनिभं स्वचापं
चण्डप्रभं यशसि जैत्रशरं कुमार: ॥ १९ ॥
कर्णान्तमेत्य दितिजेन विकृष्यमाणं
कोदण्डदण्डमभित: सुषुवे शरौघान्
व्योमाङ्गणे लिपिकरान् स्वकराट्टहासा-
नुद्रेकशेषककुमांपतिवत् करिष्यत् ॥ २० ॥
बाणै: सुरारिधनुष: प्रसृतैरनन्तै-
र्निर्घोषभीषितभटैर्लसदंशुजालै: ।
अन्धीकृताखिलसुरेश्वरसैन्यको ऽसौ
छन्नाकृति: प्रविषयं न जगाम दृष्टे: ॥ २१ ॥
देवेन मन्मथरिपोस्तनयेन गाढ-
माकर्णकृष्टमभितो धनुराततज्यम् ।
बाणानसूत विविधान् युधि यान् विजैत्रै-
स्तै: सायका विविदिरे सहसा सुरारे: ॥ २२ ॥
रेजे सुरारिशरदुर्दिनके तिनस्ते
सद्य: स्वयं निखिलखेचरखिन्नदेहे ।
देवप्रभो: प्रभुरिव स्मरशत्रुसूनु:
प्रद्योतन: सुघनदुर्द्धरधामधाम्न ॥ २३ ॥
तत्राथ दु:सहतरं तरसा तरस्वी
धामाद्धावधिकधीरतर: कुमारे ।
मायामयं समरमाशु महासुरेन्द्रो
मायाप्रपञ्चचतुरो रचयाञ्चकार ॥ २४ ॥
अट्टाय कोपकलुषो विकटं विहस्य
व्यर्थां समर्थ्य वरशस्त्रयुधं कुमारे ।
जिष्णो जगद्विजयदुर्ललित: सहेलं
वायव्यमस्त्रमसुरो धनुषि न्यधत्त ॥ २५ ॥
सन्धानमात्रसममस्य युगान्तकाल-
भूतभ्रमं परुषभीषणघोषघोष: ।
उद्धूतधूलिपटलीपिहिताम्बराङ्ग:
प्रच्छन्नचण्डकिरणो व्यवहत् समीर: ॥ २६ ॥
कुन्दोज्ज्वलानि सकलातपवारणानि
धूतानि तेन मरुता सुरसैनिकानाम् ।
उड्डीयमानवरहंसकुलोपमानि
सङ्ग्रामधूलिमलिने नभसि प्रसस्रु: ॥ २७ ॥
विध्वस्य तेन सुरसैन्यमहापताका
नीता नभस्तलमलं नवमल्लिकाभा: ।
स्वर्गापगाजलमहौघसहस्रलीलां
व्यातेनिरे दिविचरीं चिरविभ्रमेण ॥ २८ ॥
भ्रष्टा: खरेण मरुता रथराजयोपि
दोधूयमाननिपतिष्णुतुरङ्गमध्ये ।
विचस्तसारथिवरप्रकरा: समन्ता-
द्व्यावृत्तिमापुरवनौ सुरवाहिनीनाम् ॥ २९ ॥

धूतानि तेन सुरसैन्यमहागजानां
सद्यः कुलानि विधुराणि दलत्कुथानि ।
पेतुः क्षितौ कुपितवासववज्रलून-
पक्षस्य भूधरकुलस्य तुलां वहन्ति ॥ ३० ॥
हित्वाऽऽयुधानि सुरसैन्यतुरङ्गधारा-
वेगेन तेन विधुता विधुरा रणान्ते ।
शस्त्राभिघातमनवाप्य निपेतुरुर्व्यां
स्वीयेषु वाहनवरेषु पतत्सु सत्सु ॥ ३१ ॥
तेनाहतास्त्रिदशसैन्यपदातयोपि
ग्रस्तायुधाः सुविधुराः परुषं रसन्तः ।
वायोर्द्विवृन्तदलवृन्दमिवेत्य दूरं
निःपेतुरम्बरतलाद्वसुधातलेपि ॥ ३२ ॥
इत्थं विलोक्य सुरसैन्यमशेषमेव
दैत्येश्वरेण विधुरीकृतमस्त्रयोगात् ।
स्वर्लोकनाथकमलाकुशलैकहेतुं
दिव्यं प्रभावमतनोदतनुं स देवः ॥ ३३ ॥
तेनोद्गतं सकलमेव सुरेन्द्रसैन्यं
स्वास्थ्यं प्रपद्य पुनरेव युधे प्रवृत्तम् ।
दृष्ट्वाऽसृजद्दहनदैवतमस्त्रमिद्धु-
मुच्चैःप्रकोपदहनः सहसा सुरारिः ॥ ३४ ॥
तत्कालजातजलदद्युतयो नभोन्ते
तत्रान्धकारितदिशो घनधूमसंघाः ।
सद्यः प्रसप्तुरसितोत्पलदामभासो
दृग्गोचरत्वमखिलं द्युसदां हरन्तः ॥ ३५ ॥
दिक्चक्रवालमिलितैर्मलिनैस्तमोभि-
र्लिप्तं नभस्तलमलं घनवृन्दसान्द्रैः ।
धूमैर्विलोक्य पिहिताः खलु राजहंसा
गन्तुं सरः सपदि मानसमीषुरुच्चैः ॥ ३६ ॥
जज्वाल वह्निरतुलः सुरसैनिकेषु
कल्पान्तकालदहनप्रतिमः समन्तात् ।
आशामुखान्यपिदधन्निखिलानि कीला-
जालैरलं कपिलयन् सकलं नभोपि ॥ ३७ ॥
उज्जागरस्य दहनस्य निरर्गलस्य
ज्वालावलीभिरतुलाभिरनारताभिः ।
कीर्णं पयोदनिकरैरिव धूमसंघै-
र्व्योमाभ्यलक्ष्यत कुलैस्तडितामिवोच्चैः ॥ ३८ ॥
तत्प्रान्ततो वियतिचाद्भुतसञ्चरेण
दीर्घेण तेन दहनेन सुदुःसहेन ।
दन्दह्यमानमनिशं सुरराजसैन्य-
मत्याकुलं शिवसुतस्य समीपमायात् ॥ ३९ ॥
इत्यग्निना घनतरेण ततोऽभिभूतं
तद्दैवसैन्यमखिलं विकलं विलोक्य ।
सस्मेरवक्त्रकमलोऽन्धकशत्रुसूनु-
र्बाणासनेऽथ समधत्त स वारुणास्त्रम् ॥ ४० ॥
घोरान्धकारनिकरप्रतिमो युगान्त-
कालानलप्रबलधूमनिभो नभोऽन्ते ।
गर्ज्जारवैर्विधमयन्नवनीधराणां
शृङ्गाणि मेघनिवहो घनमुज्जगाम ॥ ४१ ॥
विद्युल्लता वियति वारिदवृन्दवर्ग्गे
गम्भीरभीषणरवे कपिशीकृताशा ।
घोरा युगान्तचलितस्य भयङ्करस्य
कालस्य लोलरसनेव चमच्चकार ॥ ४२ ॥
कादम्बिनी विरुरुचे विसकण्ठिकाभि-
रुत्तालकालरजनीव रदावलीभिः ।
व्योम्न्युच्चकैरचिररोचिररोचताग्रे
दृष्टिच्छलाद्विषमकोपविभीषणेव ॥ ४३ ॥
व्योम्नस्तलं पिदधतां ककुभां मुखानि
गर्जारवैरविरतैस्तुदतां मनांसि ।
अम्भोभृतामतितरामनणीयसीभि
र्धारावलीभिरभितो ववृषे समूहैः ॥ ४४ ॥
बह्वीयसाऽधिकतराः सहसा रसेन
घ्नन्त्यस्तटे निजकुलेप्यसुरप्ररूढे ।
मेघान्धकारपटलीपिहिते नभोऽन्ते
नद्यः प्रचेलुरभितः प्रमदाहवाय ॥ ४५ ॥
आप्लावितो बहुभवोऽपिहिताम्बराणां
गम्भीरगर्ज्जनिपतद्विधुरासुराणाम् ।
वृष्ट्या तया जलमुचां वरुणास्त्रजानां
विश्वोदरंभरिरथ प्रशशाम वह्निः ॥ ४६ ॥
दैत्योपि रोषकलुषो निशितैः पुरप्रे-
रकार्मुकप्रधनुरुत्पतितैः स भीमैः ।

तद्भीतिविद्रुतसमस्तसुरेन्द्रसैन्यै-
र्गाढं जघान मकरध्वजशत्रुसूनुम् ॥ ४७ ॥
देवोपि दैत्यविशिखप्रकरं सचापं
बाणैश्चकर्त्त करुणो रणकेलिकारः ।
योगीव योगविनिषक्तमना यमाद्यैः
सांसारिकं विषयवर्गममोघवीर्य्यैः ॥ ४८ ॥
भ्रूभङ्गभीषणमुखो ऽसुरचक्रवर्त्ती
सन्दीप्तकोपदहनो ऽथ रथं विहाय ।
क्रीडत्करालकरवालकरो दधान-
श्चर्माभ्यधावदभितस्त्रिपुरारिपुत्रम् ॥ ४९ ॥
अभ्यापतन्तमसुरेश्वरमीशपुत्रो
दुर्वारबाहुविभवं सुरसैनिकैस्तैः ।
दृष्ट्वा युगान्तदहनप्रतिमां मुमोच
शक्तिं प्रमोदविकसद्वदनारविन्दः ॥ ५० ॥
उद्द्योतिताम्बरदिगन्तरमंशुजालैः
शक्तिः पपात हृदि तस्य महासुरस्य ।
हर्षाश्रुभिः सह समस्तदिगीश्वराणां
शोकोत्थवाष्पसलिलैः सह दानवानाम् ॥ ५१ ॥
शक्त्या ऽथ तारमसुरेश्वरमापतन्तं
कल्पान्तवातहतिभिन्नमिवाद्रिशृङ्गम् ।
दृष्ट्वा प्ररूढपुलकाङ्कितचारुदेहा
देवाः प्रमोदमगमंस्त्रिदिवेशमुख्याः ॥ ५२ ॥
यत्रापतत् स दनुजाधिपतिः परासुः
संवर्त्तवातनिपतच्छिखरीन्द्रकल्पः ।
तत्रादधत् फणिपतिर्धरणीं फणाभि-
स्तद्भूरिभारविधुरामिरधोव्रजन्तीम् ॥ ५३ ॥
स्वर्गापगासलिलसीकरिणी समन्तात्
सौरभ्यलुब्धमधुपावलिसेव्यमाना ।
कल्पद्रुमप्रसववृष्टिरभून्नभस्तः
शम्भोः सुतस्य शिरसि त्रिदशारिशत्रोः ॥ ५४ ॥
पुलकभरविभिन्नचारुदेहा
भुजविभवं बहु तारकस्य शत्रोः ।
सपुरवराणा महेन्द्रमुख्याः
प्रमदमुखद्युतिसम्पदो ऽभ्यनन्दन् ॥ ५५ ॥
इति विषमशरारेः सूनुना जिष्णुना ऽजौ
त्रिभुवनखलशल्ये प्रेरिते दानवेन्द्रे ।
बलरिपुरपि नाकस्याधिपत्यं प्रपद्य
व्यजयत सुरचूडारत्नघृष्टाग्रपादः ॥ ५६ ॥

इति श्रीकुमारसम्भवे महाकाव्ये कवीन्द्रमुकुटमाणिक्य-श्री कालिदासकृतौ तारकासुरवधोनाम सप्तदशः सर्गः ॥१७॥

॥ समाप्तंचेदं कुमारसम्भवम् ॥

---

## ॥ कुमारसम्भवोत्तरखण्डोपसंहरणम् ॥

तदित्थं द्वितीयेऽङ्के प्रक्रान्तं कुमारसम्भवं काव्यं काशीविद्यासुधानिधेर्नवमेऽङ्के पर्याप्तिं गतं तत्रच प्रतिसर्गं द्वित्राणि पद्यानि यद्यप्यलग्नकानि सन्ति तथापि यन्मूलपुस्तकमादायैतन्मुद्रितं तस्यातिजीर्णतया तन्मूलभूतस्य तन्मूलकस्य तत्सजातीयपाठवतोवा पुस्तकान्तरस्यालब्धत्वाल्लब्धानामपि भिन्नपाठानां पुस्तकानां सन्दिग्धस्थलनिर्णये साहाय्यमगतवतां पाठान्तरवैचित्र्यमात्रप्रदर्शनोपयोगित्वात् तानि पद्यानि तादृशवर्णानुपूर्वीमन्त्यैवोपन्यस्तानि येन नवीननिबन्धदर्शनरसिकास्तेषु ससंशयता जिज्ञासवो भूत्वा तदर्थप्रकाशनप्रयत्नफलप्राप्त्या विचारकमण्डलीं तोषयेयुः ।

पुस्तकान्तरलब्धपाठान्तराणां मुद्राप्रमादशोधकानवधानमूलकाशुद्धानांच परिगणनाय प्रकरणान्तरं नेह विरचितं विचारकजनानां पुरतः प्रकाशनीयस्य विषयवैचित्र्यस्याभावात् तद्दर्शने कालक्षेपातिरिक्तफललाभस्यासम्भावितत्वात् ।

यत्पुनः पञ्चमेऽङ्के केनापि कुमारसम्भवरघुवंशयोः शिशुप्रौढदशापन्नैककविविरचितत्वसम्भावनाहेतून् विचारयितुमसमर्थेन गौडेनोपन्यस्तम्

(१) यावत्पर्यन्तं कुमारस्य सम्भवस्तावत्पर्यन्तमेव कुमारसम्भवाख्यं काव्यं ज्ञेयं सप्तमसर्गान्तं । नतु महादेवक्रीडाकुमारोत्पत्तितारकासुरविजयान्तं सप्तदशसर्गान्तं ।

(२) साहित्यग्रन्थेष्वपि कुत्रापि प्रकाशादिषु तदुदाहरणं न ।

(३) क्व कालिदासालङ्कारादिच्छाया क्वचाष्टमसर्गादिरचना ।

(४) यदि तारकासुरविजयान्तं तत् काव्यं भवेत् तदा शिशुपालवधवत् तारकवधाख्यां लभेत ।

(५) तथा मल्लिनाथेनापि सप्तमसर्गान्तमेव व्याख्यातमस्तीति ततः परस्यार्वाचीनरचितत्वं स्पष्टम् ।

(६) सप्तमसर्गान्तरचना व्याकरणव्युत्पत्त्या ऽन्वितवाक्यवती यथोचितवर्णसंघटनावतीचेति सहृदयसंवेद्यमेतत् ।

तत्रोच्यते ।

(१) उपक्रमस्तावदभ्यासहितस्तस्यार्थस्योपसंहारे बीजं यदि तावद् वारंवारमुपक्रान्तोऽर्थो नोपसंह्रियेत कथंकारं तद् वचनं प्रेक्षावन्तः शृणुयुः कथंवा निरुपसंहारादुपक्रमविरुद्धोपसंहाराद्वा वचसो निराकांक्षप्रतिपत्तेराशापि । द्वितीयोहि सर्गः कुमारसम्भवस्योपक्रमग्रन्थः । तथाहि देवानां चतुर्मुखेन-सह संवादमुखेन कविनोपक्रान्तं ।

तस्मिन् विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥ १ ॥
एवं यदात्थ भगवन्नामृष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो ॥ ३१ ॥
त्वया दत्तवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३२ ॥
तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५२ ॥
गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम् ॥ ५३ ॥
सम्पत्स्यते वः कामोऽयं कालः कश्चित् प्रतीक्ष्यताम् ।
नत्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना ॥ ५५ ॥
संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ ५८ ॥
तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।
मोक्ष्यते सुरबन्दीनां वेणीं वीर्यविभूतिभिः ॥ ६२ ॥
उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ६३ ॥

अनेन श्लोकनवकेन चरमप्रयोजनतया तारकवधस्तदुपायतया गोत्रभित्पुरस्करणीयसुरविजयश्रीप्रत्यानयनक्षमदेवसैन्यगोपकसेनान्युत्पत्तिस्तस्याप्युपायतया हिमाचलसुताकरणकसमाधिस्थशम्भुमनोवशीकरणमुपक्रान्तमिति स्पष्टतरं प्रतीयते एवंस्थिते यादृशेन साध्यसाधनभावेन ये पदार्था उपक्रान्तास्तेषां तेन क्रमेणोपसंहारो न्याय्यवचनशीलानामुन्मत्तजनव्यावृत्तो विशेषः । तदनुरूपमेवच कालिदासेनाप्रौढेनापि सता ऽष्टमसर्गसमाप्तिं यावदुमासाधनकशम्भुमनोवशीकरणं ततः सर्गत्रयेण समहोत्सवकुमारसम्भूतिं ततः परेण सर्गद्वयेन कुमारस्य सैनापत्यप्राप्ति मुपसंहृत्य चरमेण सर्गचतुष्टयेन तारकवध उपसंहृत इति न्याय्यवचोरचनाविदग्धेन विदग्धतानुसार्याचरितम् । अतः पूर्वोक्तार्थावधानिनां सहृदयानां कथं सप्तमसर्गएव य उपक्रान्तार्थत्रयमध्ये कस्याप्येकस्योपसंहारस्थानतां नानुभवति स समग्रकाव्यस्योपसंहारस्थानं भवतीत्येषोऽर्थो हृदयं स्प्रष्टुमर्हतीति ।

(२) काव्यप्रकाशेतावत् प्रदर्शितरीत्या सप्तदशसर्गात्मकतया सिद्धात् कुमारसम्भवाद् बहूनि पद्यान्युदाहृतानि दृश्यन्ते यदिचाष्टमसर्गप्रभृतेर्ग्रन्थादुद्धृतं किमपि प्रकाशे न दृश्यते ऽतस्तस्य कालिदासप्रणीतत्वे संशय इति तर्हि किं द्वितीयसर्गस्थं पद्यं कस्मिंश्चित् साहित्यग्रन्थे दृष्टं येन तस्य कालिदासकृतत्वाश्वासः अपि च काव्यप्रकाशग्रन्थस्याप्रमादया निराग्रहया दृशा निरीक्षणे स्फुटमेतत् प्रतीयते यदष्टमसर्गादिर्ग्रन्थः कुमारसम्भवघटकतया मम्मटाचार्यस्याभिमत इति । तथाहि । काव्यप्रकाशे सप्तमोल्लासशेषे मम्मटः । " तत्र रतिहासशोकाद्भुतान्यदिव्योत्तमप्रकृतिवद्दिव्येष्वपि । किन्तु रतिः सम्भोगशृङ्गाररूपोत्तमदेवताविषया न वर्णनीया । तद्वर्णनंहि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितं ।

क्रोधं प्रभो संहर संहरेति
यावद् गिरः खे मरुतां चरन्ति ।
तावत् स वह्निः शिवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥

इत्युक्तवद्भ्रूकुट्यादिविकारवर्जितः सद्यःफलदः क्रोधः स्वर्गपातालगमनगगनसमुद्रोल्लंघनाद्युत्साहश्च दिव्येष्वेव " ॥ अत्र कुमारसम्भवस्याष्टमनवमसर्गौ बुद्धिस्थीकृत्य सम्भोगवर्णनप्रतिषेधः । तृतीयपञ्चमौ बुद्धिविषयीकृत्य विप्रलम्भस्य चतुर्थमभिप्रेत्य शोकस्य सप्तमनवमसर्गान्तौ हासस्य सप्तमस्य त्रिंशत्प्रभृतिश्लोकानद्भुतस्य स्वर्गगमनस्य त्रयोदशं गगनोल्लंघनस्यचाष्टमं बुद्धिस्थीकृत्य वर्णनाभ्यनुज्ञानमाचार्येण कृतमन्यथा क्वान्यत्रोत्तमप्रकृतीनां सम्भोगवर्णनोदाहरणं निरुदाहरणश्च कथं प्रतिषेधोपि ।

(३) कालिदासः खलु शब्दालङ्कारेष्वनुप्रासमर्थालङ्कारेषुचोपमार्थान्तरन्यासौ प्रायेण प्रयुङ्क्ते तेषांच प्रतिश्लोकं सत्त्वं काव्यस्योत्कर्षे न प्रयोजकमपितु वृत्तस्य चमत्कारहेतुषु प्रदेशेषु तेनहि समस्तस्य काव्यस्य शोभा सम्भवति तेचोक्ता अलंकारा अष्टमसर्गप्रभृतावुत्तरग्रन्थेऽपि प्रतिसर्गं वृत्तप्रदेशेषु पूर्वग्रन्थादविशेषेणैवोपलभ्यन्ते तदेतदपि तस्य ग्रन्थस्यापेक्षाबुद्धिपूर्वकदर्शनं विना दुर्ज्ञेयं यतोऽलसाः श्रमद्वेषिणो जना विरलप्रचारतया सम्भवल्लेखकप्रमादकीटोपघाततैलजलसम्पर्कजराभिभवादिकृताशुद्धबाहुल्यसंवलितानि पुस्तकान्यवलोकनमात्रेण तिरस्कुर्वन्तस्तान्येवाशुद्धानि ग्रन्थकारदूषणानि मत्वा ग्रन्थकारानेवोपालभन्ते न यद्वि ते प्रसिद्धनामानः स्युः । तेषां प्रसिद्धत्वेच स ग्रन्थो ग्रन्थांशोवा तेन कविना न कृत इति वदन्तो या जातिर्यावा व्यक्तिः स्वस्य निकृष्टत्वेनाभिमता स्यात् तज्जातीयेन केनापि तयावा व्यक्त्या विरचितोऽयं ग्रन्थ उपेक्षाम

हतीति प्रसिद्धिं कृत्वा तस्य ग्रन्थस्य प्रचारविरलतायाः साहाय्यं कुर्वन्तः सन्तुष्यन्ति ।

(४) अस्य काव्यस्य तारकवधमिति नाम कविना न कृतं कुमारसम्भव इतितु कृतमिति नामकरणविरोधादुत्तरग्रन्थो न कालिदासप्रणीत इति शङ्का न विचारसहा । सप्तमसर्गान्तेपि कुमारोत्पत्तेरवर्णितत्वेन नामकरणविरोधस्य स्पष्टदृश्यत्वात् । वृत्तनाम्ना काव्यमिति पक्षे सर्वेषां वृत्तानां न काव्यनामकरत्वमतिप्रसङ्गात् किन्तु यद् वृत्तं कवेः प्राधान्येनाभिमतं काव्यस्य व्यापकं तदेव काव्यनामकरमित्थंच कुमारोत्पत्तेरेवात्रत्यैकादशसर्गरूपमहाप्रदेशव्यापितया तेनैव काव्यव्यपदेशः प्रधानेन व्यपदेशा भवन्तीति न्यायात् तन्मूलकत्वादेवच वृत्तनाम्ना काव्यमित्युक्तेः ।

(५) मल्लिनाथेन सप्तमसर्गान्तस्य व्याख्यानात् ततोऽधिकं न कालिदासकृतमिति वचनंतूपहासास्पदं मल्लिनाथोहि मम्मटाचार्यादर्वाचीनइति तेन कृतामुत्तरग्रन्थस्य निन्दां श्रद्दधानः श्रद्धापरवशानां लोकानां निन्दातो बिभ्यच्च तं व्याख्यातवान् नहि तेनास्य काव्यस्य सप्तमसर्गान्तत्वं कण्ठरवेणोक्तम् । उक्तत्वेवा पूर्वोक्ते सप्तमसर्गान्तत्वबाधके तस्यापि निरुत्तरत्वप्रसङ्गोऽस्त्येव। किं मल्लिनाथेन शिशुपालवधं व्याख्यातवता चरमौ द्वौ श्लोकौ कविवंशवर्णनपञ्चश्लोकीच न व्याख्याता न दृष्टा येन तदीयव्याख्यानपरिसमाप्तिर्ग्रन्थसमाप्तिसाधकतया मता स्यात् । अमङ्गलोत्कीर्तनात् स्पष्टार्थत्वाच्च न व्याख्यातं तदिति चेदश्लीलार्थत्वस्य साहित्याचार्यैः प्रदर्शितत्वेन स्फुटार्थत्वेनचाव्याख्यानं प्रकृतेपि सम्भवत्येव ।

(६) अष्टमप्रभृतिग्रन्थेपि रसानुसारिणी वर्णघटना दृश्यतएव वाक्यान्यप्यनन्वितार्थानि क्वापि न दृष्टानीति क्वचिद् व्याकरणविरुद्धानि कतिपयानि पदान्यवशिष्यन्ते तत्राधुनिकानां व्याकरणाननुसन्धानमपि मूलं यथाऽत्र देववाची वृन्दारशब्दः प्रयुक्तो व्याकरणे पुनर्वृन्दशब्दादारकन्प्रत्ययेन व्युत्पादितः कोशेचापि तथैव पठित इति परन्तु यद् व्याकरणं वृन्दशब्दादारकन्प्रत्ययं विदधाति तदेव शृङ्गशब्दादपि तमेव प्रत्ययं शास्ति एवं स्थितेऽपि कयाचिद् व्युत्पत्त्या रसविशेषवाची शृङ्गारशब्दोऽपि साधुः साहित्यशास्त्रे प्रकृष्टो यथा तथैव वृन्दारशब्दोपीति न तावता कालिदासकृतत्वव्यतिरेकोऽस्य शक्यशङ्कः अपिच यदि भारविप्रभृतीनां भट्टिमाघादीनां चापशब्दप्रयोगः स्पष्टदृष्टो वैयाकरणैर्निरंकुशाः कवय इत्यभिधायोपेक्षितो ननु तस्य कवरेषा कृतिरेव न भवतीत्यपलपितस्तदाऽनतिप्रौढकालिदासविरचितेपि यदि क्वचित् किमप्यशुद्धं दृश्यते तर्हि तावतैव कालिदासकृतमेतन्न भवतीत्यपलापोऽपचपातिनां विदुषामनुचितएव । विट्ठलशास्त्री ।

# THE SAHITYA-DARPANA,

OR

# MIRROR OF COMPOSITION.

(Continued from page 104.)

TEXT.

No. 653. *This* again may be five-fold, being possible in the two sorts of *the affix 'kyach'* respectively applied in the sense of position and object, in *the affix kyań,'* * and in *the adverbial affix 'ṇamul'* added in an active or passive sense.

COMMENTARY.

*a.* 'The elliptical *Simile,* in the omission of the common attribute'—*these words* are to be supplied *in the present text from the foregoing one.*

*b.* The *kyach, kyań* and *ṇamul are named yiṇ, ṇáyi* and *ṇam* in the technicality of *the grammar* Kalápa.

*c.* For examples in their order :—

अन्तःपुरीयसि रणेषु, सुतीयसि त्वं
पौरं जनं, तव सदा रमणीयते श्रीः ।
दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्र-
सञ्चारमत्र भुवि सञ्चरसि क्षितीश ॥

"Antaḥpuríyasi *(kyach* 1*)* † raṇeshu, sutíyasi *(kyach* 2*)* twań
Pauraṅ janań, tava sadá ramaṇíyate *(kyań)* Śríh :
Drishṭah priyábhiramṛita-dyuti-darśam *(ṇamul)* Indra-
Sańcháram *(ṇamul* 2*)* atra bhuvi sańcharasi kshitíśa."

(In the battle-field thou actest as if thou wert in thy *Zenana* and thou treatest the people of thy city as if they were thy sons ; Fortune behaves, as a wife, towards thee, and looked upon by thy beloved ladies as the Nectar-beamed *moon,* thou walkest upon the earth, O monarch, like the Royal God (Indra) himself.

Here the points of resemblance are omitted, *viz.* the circumstance of being a place for pleasant sports, in *the phrase 'antuhpuríyasi,'* and (the king's) being full of loving-kindness. Similarly in the other *expression of comparison.*

And in these *varieties,* because of the absence of the words *yathá* &c., and *tulya* &c., we have not to consider such specialities as *that of being of* the Direct sort or the like.

Some instance these as cases of the omission of *the affix '-vat'* expressive of comparison. This is not right,

* These two affixes are for forming verbs from nouns, to imply comparison. The words thus formed answer to such expressions in English as 'out-heroding,' 'hectoring' &c.

† Milton's beautiful figure '*Imparadised* in one another's arms' is an instance answering to the '*Kyach*' of the first kind.

for the *affixes kyań* &c., also, being added in the sense of *vat* imply comparison. Nor should it be said that the *affixes kyań* &c., cannot well imply comparison because; as being affixes, they are not independently expressive, and *such words of comparison as* 'iva' &c., are not employed in these cases. For the same might be said of *the affix* '*kalpap*' and others *which are allowed to be expressive of comparison.* Nor *will it avail to argue that* the '*kalpap*' &c., as being equivalent to '*iva*' &c., are expressive of comparison and that the '*Kyań*' &c. are only suggestive *of it,* for it is not certain that even '*iva*' *&c.,* are expressive. Or granting that the '*kalpap*' &c., are expressive, there can be no difference between the affixes of the '-vat' class and those of the 'Kyań' class, according to either of the two opinions touching affixes, viz. (1) 'The inflected word in its integrity is expressive' and (2) 'The base and the affix have each its own signification.' As to the assertion of some that the affixes of the class of '-vat' are directed *by Páṇini* to be employed in the sense of '-iva' and the like, whilst 'kyań' &c. are, in the meaning of 'behaviour'—this too is wrong, for 'kyań' &c., do not simply imply 'behaviour,' but 'similar behaviour.' So the Elliptical is thus tenfold, when the attribute is omitted.

TEXT.

No. 654. It is twofold, in the omission of the object compared to,—being possible in a phrase and a compound.

COMMENTARY.

*a.* For example:

"Naught exists equal to her face in charmingness, or like-to-her-eyes."

Here, objects answering to the face and eyes being hinted at, *but, of course, as inferior to them in charmingness,* we have an instance of the object compared to being omitted.

*b.* And in this very stanza, on our reading *mukhań yathedam*' instead of '*mukhena sadṛiśam*', and '*dṛigiva*' instead of '*nayana-tulyam*', we should have the direct sort: thus though, the two divisions of the present variety being subdivisible into the direct and the indirect, we obtain four sorts, yet after the manner of the ancients we have spoken of it as of two sorts only.

TEXT.

No. 655. In the omission of the *word or affix* expressive of comparison, it is twofold, being possible in a compound or the '*kwip*' affix.*

COMMENTARY.

*a.* For examples in their order:—

"*He* acts the ass *(gardabhati),* loudly and hoarsely screaming before the great."

Here '*kwip*' expressive of comparison is omitted in *gardabhati.*' It should not however be supposed that the object of comparison too is omitted here, inasmuch as it is indicated by the expression 'screaming.'

"The face of the fawn-eyed one is Moon-enchanting."

TEXT.

No. 656. It is twofold, in the omission of the *common* attribute and the object compared to,—*being possible* in a compound and a phrase.

COMMENTARY.

*a.* We shall have examples of these two *varieties* by our reading 'in the world' in place of 'in charmingness' in the sentence beginning 'Naught exists' (see §654. *a*).

TEXT.

No. 657. In the omission of the attribute and the word of comparison, it is twofold, according as it occurs in the '*kwip*' *affix* or a compound.

COMMENTARY.

*a.* For example:—"Her lotus-face shines like the moon (vidhavati)." Here in '*vidhavati*' there is the *grammatical* rejection of the '*kwip*' affix signifying comparison and of the point of resemblance, viz. 'charmingness.' But some, *recognizing a distinct division of the Elliptical Simile arising from the omission of an affix,* instance the present example as an illustration of the same. 'Lotus-face' is an example of the present variety residing in a compound.

TEXT.

No. 658. In the omission of what is compared, it is single, occurring in the '*kyach*' *affix.*

COMMENTARY.

*a.* For example:—

"With eyes flashing at the sight of the foeman's valour, and with his rod-like hand bristling with the sword, he behaves (sahasráyudhíyati) *in the battlefield* as if he wielded a thousand weapons."

Here the object compared, viz. 'himself,' is omitted, for the expression '*sahasráyudhíyati*' is to be interpreted 'behaves HIMSELF like one with a thousand arms.' For the reasons already stated (§653 *e*) there is no omission here of the term of comparison. Here some say, the word '*sahasráyudhíyati*' being derived from '*sahasráyudha,*' or one associated with a thousand arms, and interpreted 'he acts like such a one,' we have here the omission of the object compared, not in the shape of 'himself,' but of the particular action of the hero which is not literally mentioned, but simply figured by the expression '*sahasráyudhíyati.*' This view of the case cannot endure a discussion, since the employment of '*kyach*' in an active sense is opposed to the rule *of Paṇini.*

*(To be continued.)*

* The difference between this and the affix '*kyań*' (§653), which also is added to an object of comparison in the nominative case lies, in the circumstance of the former leaving no sign of itself in the verb formed by its addition; as *gardabhati* 'he asses.' This still more corresponds to the English 'hectoring.'

## THE BIRTH OF RÁMA.

*(Raghuvaṅśa Canto X.)*

With costly sacrifice, with praise, and prayer,
AYODHYÁ's king had claimed from Heaven an heir;
When from the shrine, where burnt the holy flame,
Scaring the priests, a glorious angel came,
With arms that trembled as they scarce could hold
A flood of nectar in a vase of gold:
A weight too vast for even him to bear,
For VISHṆU's self, the first of Gods, was there.
With reverent awe the Lord of KOŚAL's land
Received the nectar from the angel's hand,
As erst Lord INDRA from the milky wave
Took the sweet drink that troubled ocean gave.
Soon as the queens had shared that mystic bowl,
Hope, sure and stedfast, filled each lady's soul.
They saw, in dreams, a glorious host who kept
Their watch around them, as they sweetly slept.
They mounted skyward on the feathered king,
Who spread a glory with each golden wing,
And as he shot through plains of ether drew
The cloudy rack to follow where he flew.
Now LAKSHMÍ, with her consort's mystic gem
Sparkling upon her breast, for love of them
Came from the skies, and her own radiant hand
Their slumbering eyelids with a lotus fanned.
Then from their homes on high—their holy hair
Damp from the lucid stream that wanders there—
Came, in a glorious dream, the star-throned Seven,
Whispering softly of the Lord of Heaven.
Proud waxed the Monarch, as each happy queen
Told the bright visions that her eyes had seen:
No king, he deemed, with him in bliss could vie;
No, nor the Father of the earth and sky.
As many a river lends its silver breast
Where the calm image of the moon may rest,
So in the bosom of each lady lay
That God, divided, who is one for aye.
Soon, like the luminous herb, which, ere 'tis night,
Wins from the setting sun a ray of light,
KAUŚALYÁ gained a son, a lovely star,
To chase the shadow of the night afar:
A babe so bright, that every torch grew dim
In the queen's chamber, when it shone near him,
They named him RÁMA, for the child shall bring
Eternal joy to all who hail him king.
Then the young mother, languid, pale, and worn,
Looked, as she nursed her babe, her newly born,
Like GANGÁ by the autumn heat oppressed,
With one sweet lotus on her island-breast.
And queen KAIKEYÍ bare a noble child,
Named BHARAT, beautiful, and meek, and mild;
By fond affection and obedience, sent
To be his mother's pride and ornament
Like gentle modesty that lends new grace
To each dear winning charm of Beauty's face.
Then queen SUMITRÁ, fairest of the fair,
Twin children, LAKSHMAṆ and SATRUGHNA, bare:
Thus self-control and knowledge spring to light
When fruitful Learning is employed aright.
The babes were born: then sin and sorrow fled,
And joy and virtue reigned supreme instead:
For VISHṆU's self disdained not mortal birth,
And heaven came with him as he came to earth.
Once more the regions, where each guardian lord
Had quailed before the giant he abhorred,
Were cheered with breezes pure from dust and stain,
And freed from terror hailed a gentler reign.
The fire was dimmed by cloudy smoke no more,
And the sun shone untroubled as before.
But RÁVAṆ's Glory poured her sorrows down
In jewels dropping from the giant's crown;
While drums of triumph beaten in the sky
Woke the King's music to a glad reply;
And the first rite to bless the joyful hour
Was the rich down-pour of a fragrant shower
Of blossoms falling, from the heavenly trees,
On the proud monarch's gilded galleries.
Graced with the holy rites, and nursed with care,
As the babes strengthened, fairer and more fair,
So with their growth increased their father's joy—
An elder brother to each darling boy.
Modest by nature, gentle nurture's aid
More modest still the youthful princes made:
Thus, when the sacred oil its influence lends,
In brighter spires the hallowed flame ascends.
With virtues blent in sweet accord to grace
The ancient line of RAGHU's sinless race—
As all the seasons of the year combine
To deck the garden where the Gods recline—
They loved as brothers in their royal home,
But still in pairs they ever loved to roam.
RÁMA and LAKSHMAṆ closer ties allied,
And BHARAT wandered by SATRUGHNA's side,
Linked in eternal love, like wind and flame,
Or the dear moon and Ocean, whence he came.
As when, at summer's close, dark clouds arise,
Bringing sweet comfort to men's longing eyes,
So the fair children won the people's hearts
By gentle graces and attractive arts:
Men deemed that DUTY, PROFIT, LOVE, and BLISS,
Had come incarnate from their world to this.
And with more pride the father's bosom glowed
For the rare virtues and the love they showed,
Than for the pearls, in countless tribute poured
By the four oceans, to delight their lord.

PRINTED AND PUBLISHED BY E. J. LAZARUS AND CO., AT
MEDICAL HALL PRESS, BENARES.

# SUPPLEMENT
# TO THE PANDIT

AIDS FOR CANDIDATES FOR UNIVERSITY EXAMINATIONS.

No. 9. A  Benares February 1st, 1867.  Vol. I.

## BHAṬṬI KÁVYA.

*(Calcutta University B. A. Examination* 1868.*)*

### INTRODUCTION.

The BHAṬṬI KÁVYA is an epic poem composed in the silver age of Sanskrit literature for the purpose of illustrating by numerous examples the rules of Grammar, Poesy, and its sister Rhetoric. Valuable as the work is to the Sanskrit student for its copious illustration of the grammatical treatises of PÁṆINI and VOPADEVA, (to whose *Sútras* constant reference is made in the excellent commentaries on the poem), and curious as a portion of it is as an Art of Poetry teaching by example only, it has additional claims to consideration in its comparative antiquity of composition, and its classic purity and elegance of style; nor is the poem without passages of great descriptive power and general poetic merit. Notwithstanding the prosaic nature of its object, which is not once lost sight of, the BHAṬṬI KÁVYA describes the oft-told adventures of RÁMA, "the subject of all verse." His birth and life, his sufferings and triumphs, are celebrated at length, and in language and style not unworthy of the inspiring theme. The poem is divided into twenty-two Books, containing about fifteen hundred stanzas. Of its object there are two grand divisions, *Śabda-lakshaṇa* or the Illustration of Grammar, and *Kávya-lakshaṇa* or the Illustration of Poesy and its Rhetoric. The Author tells us that he wrote his poem at VALABHÍ in the reign of ŚRÍDHARASENA (काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायां B. XXII 35) most probably ŚRÍDHARASENA I, who was king of Guzerat and reigned at BALLABHI from about A. D. 530 to 545. The Author's name was BHARTṚIHARI son of ŚRÍDHARASWÁMIN, according to the Scholiasts VIDYÁVINODA, and BHARATA compiler of the MUGDHABODHINÍ; but the compiler of the commentary entitled *Jayamaṅgalá* more correctly calls him BHAṬṬI and his father ŚRÍSWÁMIN.

## TRANSLATION.

### BOOK I.

1. There was a prince, the friend of the Gods, a conqueror, versed in the Scriptures, named DAŚARATHA, whom, pre-eminent by his qualities, the Eternal, for the sake of the good of the worlds, sought as father of his own free will.

2. He read the Vedas, sacrificed to the Gods, gave oblations to the Manes, respected his kinsfolk, conquered the class of six *vices*, rejoiced in regal polity and slew his foes uprootingly.

3. He scattered riches as the cloud *pours down* water, he sat on one throne with the mountain-cleaver, he worshipped none other than the Three-eyed *God*, he eclipsed the glories of all archers.

4. Pure, waited on by the assembly of great Bráhmans, excellent gratifier of the Dwellers of the Sky, that King shone for the welfare of the worlds, as the consecrated fire in the sacrifice.

5. He of pure fame, like the Lord of the Hundred Sacrifices, dwelt in AYODHYÁ equal in prosperity to MAHENDRA's City, happy in all the seasons, inhabited by Bráhmans of enlightened understanding.

6. Which *Ayodhyá* the limit, as it were, amid things that are desired, of the skill of Him who sits upon the Lotus, expert in creating, stood as if laughing the city of INDRA to scorn with her upward gleaming jewel-rays.

7. Whose houses were like the peaks of MERU, with divers minerals, and with groves possessing pearls and diamonds and fair jewels, filled with women as with troops of heavenly nymphs.

8. From whose houses flashes of flaming gems stored within, streaming forth by the window-lattices, gleam like the fall of the waters of GAṄGÁ from the slope of the Mountain of Snow.

9. As a Sage *delights* in sciences, that king rejoiced in three excellent queens, virtuous, bringing love, gain, and fame, esteemed in the world, married in season.

कृते ऽथ जातकर्मादौ वृत्ते षष्ठीप्रजागरे ।
विलासवत्यां स्नातायां शुचौ काल उपस्थिते ॥ ७० ॥
प्रशस्ते ऽहनि दैवज्ञैरनुज्ञातो महीपतिः ।
स्नातः सुवर्णं स ददौ पूजयित्वा द्विजोत्तमान् ॥ ७१ ॥
स भूषणानि वासांसि वर्षन् परिजने शिशोः ।
चंद्रापीडइति स्वप्नसदृशं नाम निर्म्ममे ॥ ७२ ॥
शुकनासोपि संपूज्य विप्रान्विप्रजनोचितं ।
वैशंपायनइत्यात्मसूनोर्नाम प्रणीतवान् ॥ ७३ ॥
क्रमेण वर्द्धमानो ऽथ कृतचूडादिमंगलः ।
चंद्रापीडो ऽभवत्पित्रोः परमुत्संगमंडनं ॥ ७४ ॥
आकारेणेंदुतुल्येन मधुरैर्बालवल्गितैः ।
अव्यक्तवर्णैरालापैरहरत्स तयोर्म्मनः ॥ ७५ ॥
प्राप्ते ऽथ सप्तमे वर्षे विद्यागृहमकारयत् ।
चंद्रापीडस्य नगराद्बहिर्बहुगुणं नृपः ॥ ७६ ॥
कृतोपनयनंचैनं काले क्षत्रजनोचिते ।
तत्र न्यवेशयद्राजा विद्याधिगमसिद्धये ॥ ७७ ॥
तर्कव्याकरणाभिज्ञान् धनुर्वेदविशारदान् ।
दंडनीत्यादिनिपुणानाचार्यान् पर्यकल्पयत् ॥ ७८ ॥
शुकनासोपि तं पुत्रमुपनीय यथाविधि ।
राजपुत्रानुगं चक्रे विद्यागृहनिवासिनम् ॥ ७९ ॥
नृपतिस्त्वगमद् द्रष्टुं पुत्रं गुरुगृहे स्थितं ।
प्रार्थितोपि स तन्मात्रा नैनमानाययद् गृहं ॥ ८० ॥
पूर्णषोडशवर्षस्तु राजपुत्रः कुशाग्रधीः ।
सकृदध्यापितो विद्याः पूर्वाभ्यस्ताइवाग्रहीत् ॥ ८१ ॥
सर्ववादेषु वक्ता ऽभूत्सर्वशास्त्रेषु कोविदः ।
प्रौढः कलासु सर्व्वासु दक्षस्सर्वेषु कर्म्मसु ॥ ८२ ॥
सर्वसंव्यवहारेषु सो ऽभूदस्खलितक्रमः ।
सर्वशास्त्रार्थतत्वज्ञः सर्वभाषासु सत्कविः ॥ ८३ ॥
क्रमेण वर्द्धमानश्च स व्यायाममसेवत ।
शुशुभेच तदभ्यासात्प्राप्तसर्वांगसौष्ठवः ॥ ८४ ॥
प्रलंबबाहुः पीनांसः पृथुवक्षास्तनूदरः ।
गंभीरनाभिर्वृत्तोरुतोरणः करिणीगतिः ॥ ८५ ॥
शुकनाससुतस्तस्य प्रतिबिंबइवाभवत् ।
गुणैरशेषैरन्यत्र शरीरप्राणगौरवात् ॥ ८६ ॥

अथ राजा सुतं बुद्ध्वा कृतार्थं गुरुवेश्मनः ।
शुकनासगिरा गेहमानेतुमुपचक्रमे ॥ ८७ ॥
स बलाहकनामानमाहूय ध्वजिनीपतिं ।
पुण्ये ऽह्नि प्राहिणोत्पुत्रमानेतुं कृतमंगलः ॥ ८८ ॥
तथेंद्रायुधनामानं प्रेषयामास वाजिनं ।
जितोच्चैःश्रवसं तैस्तैरनन्यसुलभैर्गुणैः ॥ ८९ ॥
सहस्रं राजपुत्राणां विनीतं बाहुशालिनाम् ।
व्यसर्जयच्च तेनैवसह पुत्रानुवर्त्तिनां ॥ ९० ॥
वलाहकस्ततो गत्वा विद्यागृहकृतास्पदं ।
अद्राक्षीद्राजपुत्रं तं प्रणनामच सादरं ॥ ९१ ॥
आचचक्षे स राजाज्ञां गृहमागम्यतामिति ।
सनामग्रहणंचासौ राजपुत्रान् न्यवेदयत् ॥ ९२ ॥
ततो बलाहकाख्यातशौर्यादिगुणगौरवाः ।
राजपुत्राः प्रणेमुस्तं पुरुहूतमिवाऽमराः ॥ ९३ ॥
पर्याणरत्नज्योतिर्भिर्जनितेंद्रायुधप्रभं ।
इन्द्रायुधं प्रवेश्याथ पुनराह बलाहकः ॥ ९४ ॥
इममारोह सिंधूत्थमश्वरत्नमयोनिजं ।
पारसीकाधिपतिना देवस्योपायनीकृतं ॥ ९५ ॥
चंद्रापीडस्तु तं वीक्ष्य तुरंगममनुत्तमं ।
परं विस्मयमापेदे चिरंचैवं व्यचिंतयत् ॥ ९६ ॥
हृदयं मे ब्रवीतीति नैष सत्यं तुरंगमः ।
कोपि केनापि पापेन नूनं तुरगतां गतः ॥ ९७ ॥
अयोनिजत्ववार्त्तैयमेतदुक्ता च साक्षिणी ।
रंभाकिलाप्सरः कन्या शापेन वडवाऽभवत् ॥ ९८ ॥
गरुत्मतीदमुच्चत्वमुच्चैःश्रवसिवा भवेत् ।
तेजसामाकृतिर्वापि न सामान्येषु वाजिषु ॥ ९९ ॥
इति बुद्ध्वा विकल्प्याथ बलाहकसमर्पितैः ।
कुसुमस्रगलंकारदुकूलैः कृतमंगलः ॥ १०० ॥
गुरूनामंत्र्य दत्ताशीर्ब्राह्मणैर्बंदिभिः स्तुतः ।
वैशंपायनमारूढमालोक्य तुरगांतरम् ॥ १ ॥
योसि सोसि नमस्तुभ्यमारोहातिक्रमस्त्वया ।
मर्षणीयो ऽयमस्माकमारुरोहेति तं वदन् ॥ २ ॥
स इंद्रायुधमारुह्य वैनतेयमिवाऽच्युतः ।
अपित्रिजगतीं कृत्स्नां मेने हस्तगतामिव ॥ ३ ॥

सवैशंपायनस्सो ऽथ निर्गत्य भवनात् ततः ।
राजपुत्रैः परिवृतो विवेश नगरीं ततः ॥ ४ ॥
तमथ पुरतरुण्यो राजमार्गेण यांतं
ददृशुरतुलकांतिं सौधवातायनस्थाः ॥
व्यपगतगुरुलज्जासंभ्रमोत्कंपितांग्यः
स्मरजनितविकारैर्लोचनैरर्च्चयंत्यः ॥ १०५ ॥
इति कादंबरीकथासारे द्वितीयः सर्गः ॥ २ ॥

---

विद्याशिल्पयोरैहिकसुखोत्कर्षानुकूलउत्कर्षइह
भारते वर्षे पुरैव बभूवाहोस्विदद्यत्वेऽप्यस्ति ।

हे सभ्यायूयं भगवता जगत्कर्त्रा बाह्याभ्यन्तररिपुगणाक्रमणविपत्प्रलयजलधिनिमग्नानामेतद्देशीयजनानां भयाभावाय प्रेरितेन निजकृपाकटाक्षेण युरोपीयजनानवतार्य विनिवारितबाह्यविपदोविद्याशिल्पयोरभावनिबन्धनाभ्यन्तरविपन्निवृत्तये बद्धपरिकराः केचिद् युरोपीयमहाजनपरिगृहीतं परेऽर्वपारसीकजनाङ्गीकृतं बहवोवेदोपदिष्टं चैहिकामुष्मिकव्यवहारमार्गं सुविचारवशात् पितृपितामहप्रचरणवशाच्चाश्रिता अविचारिकलहैकरसिकदोषैकदिदृक्षुधर्माधर्मचिन्तनैकव्यवसायदम्भोपजीविजनोत्प्रेक्ष्यमाणान्योन्यविरोधाप्रामाण्यादिकलंकेनापि तत्त्वतोविचारे लेशतोऽपि स्वप्नेऽपि स्वल्पयापि दोषवार्तयाऽप्यस्पृष्टेन स्वस्वमार्गेण पूतशान्तदान्तमृदुनिरीर्ष्यहृदया जनानामैकमत्यं हितबोधं सदाचरणमैहिकामुष्मिकसुखं चेच्छन्तस्तदुपायमन्विष्यमाणा एतद्देशीयजनानां पुराद्यतनकालयोर्विद्यानां शिल्पानां चोत्कर्षमपकर्षं च यथावस्तु जिज्ञासथ ।

सेयं युष्मदीया जिज्ञासा भारतवर्षीयप्राचीनव्यवहारनियमदर्शकाणां स्मृतिपुराणेतिहासग्रन्थानां तथैतद्देशीयप्राचीनव्यवहारस्थितिदर्शकाणां कोशव्याकरणकाव्यनाटककथाख्यायिकाग्रन्थानां तथा विद्याशिल्पोत्कर्षप्रमाणभूतानां गजशास्त्राश्वशास्त्रवैद्यशास्त्रगीतशास्त्रनाट्यशास्त्रवास्तुशास्त्रगणितशास्त्रादीनां विक्रमार्कशालिवाहनराज्यकाले परःसहस्रैर्विचारकवर्यैरहरहर्महता यत्नेन लोकमिमं स्थावरजंगमात्मकं परीक्ष्यपरीक्ष्य वृद्धिमापादितानां प्राचीनव्यवहारप्रतिबिम्बाधारनिर्मलवाङ्मयरत्नदर्पणभूतानां विलोकनेन तथेदानीन्तनजनानुस्रियमाणव्यवहारानुसन्धानद्वाराऽन्तर्बहिश्चैतद्देशदशापरीक्षया च निवृत्ता भविष्यतीति मत्वा प्रोक्तग्रन्थानां यावद् दर्शनं यावच्च विमर्शनं मच्छक्तिसाध्यं तावदनुसृत्य तं विषयं भवतां पुरतोवक्तुमुत्सहे । एवंप्रकारे च ग्रन्थदर्शनाद्देशव्यवहारनिर्णयने ऽत्रत्यविदुषां प्रवर्तनेन तथा तन्निर्णयद्वारा स्वदेशीयव्यवहारपरिशोधने ऽत्रत्यक्षत्रियभूपतीनां प्रवर्तनेन स्वतएव सर्वलोकानुकंपी भगवानेतं मम प्रयत्नमनुगृह्णात्विति चाशासे ।

तथाहि यथेदानीं यः कोपि यथायथेंग्लंडीयभाषायामर्वदेशभाषायां वा व्युत्पन्नो भवेत् स तथातथा तद्भाषानिबद्धानां तद्देशीयविद्याशिल्पग्रन्थानां सम्यगर्थतात्पर्यमवगच्छेदिति दृष्टं तथैव यथायथा संस्कृतभाषायां व्युत्पत्तिरधिका तथातथा तद्भाषानिबद्धानां गजतुरगौषधस्वराभिनयगृहसंख्यानशिष्टाशिष्टव्यवहृतिधर्माधर्मलोकवृत्तसुभाषितादितत्त्वप्रतिपादकग्रन्थानामर्थस्यावगमस्तदुपदेशसामर्थ्यं च भवेदिति स्पष्टमतोयुष्माभिर्विचार्यतां यद् भारते वर्षे यथायथा कालस्य प्राचीनता तथातथा संस्कृतभाषाप्रचाराधिक्यमिति संस्कृतं सर्वविद्याशिल्पानामाधारोऽत्रदेशे जनपदभाषा चेति ज्ञानिवर्यैः परिगृहीतमित्यस्य सुनिश्चितत्वात् संप्रति यावती संस्कृतभाषाव्युत्पत्तिर्यावच्च तन्मूलकं शास्त्रविद्याशिल्पपरिज्ञानं यावन्तश्च तन्मूलकाश्चित्तशुद्धिः शरीरशुद्धिर्वाक्शुद्धिः स्वतन्त्रता भगवद्भक्तिर्भूतदया चेत्यादयोगुणाद्विजजने दृश्यन्ते ततः सहस्रगुणाधिका व्युत्पत्त्यर्थज्ञानमहद्गुणा विक्रमार्कस्य शालिवाहनस्य च राज्यकाले प्रजानामासन्नेवेति विद्यातारतम्येन ज्ञानगुणतारतम्यस्य सर्वदेशसर्वकालसाधारणतया निश्चीयते ।

अपिच क्रियाशक्तिर्ज्ञानशक्तेरधीनेति कृत्वा यस्मिन् काले ज्ञानशक्त्याधिक्यं तत्र प्रजानां क्रियाशक्त्याधिक्यमपि । अतएव *द्विसहस्रवर्षेभ्यः पूर्वं मृच्छकटिकशाकुन्तलविक्रमोर्वशीप्रभृतिनाटकीयवस्तुप्रदर्शने सूत्रधाराणां परमं शिल्पमासीत् विमानादिव्यवहारश्चैतद्देशे भूयान् बभूव तादृशस्य च शिल्पस्येदानीं कस्यापि मनसि कल्पनैव नोदेति प्रत्युत संस्कृतग्रन्थस्थं सर्वं कल्पनामात्रमित्येव पामरामन्यन्ते यथा यः प्रस्तरस्तम्भोऽधुना काशीस्थसंस्कृतपाठालयोदीच्यद्वाराभिमुखोजनपदान्तरादानीयेंग्लंडीययादृशशिल्पयन्त्रोपयोगेन संस्थापितः सएव त्रिशतवर्षेभ्यः पूर्वं देशान्तरीयविद्याशिल्पयोः सहकारमन्तरैव पाठालयोत्तरांगणदृश्यमानायां सुमहत्यां शिलायां गाधिजपुरनिकटे तादृशशिल्पयन्त्रोपयोगेन श्रीमता कीर्तिपालदेवेन संस्थापितोन तु तादृशशिल्पकल्पना कस्याप्याधुनिकस्य मनस्युदेति एतेन विजयनगरादावष्टशतवत्सरेभ्यः पूर्वमनुत्प्रेक्ष्यशिल्पोपयोगेनोत्तमोत्तमपरममहाप्रस्तरमयदेवालयादिनिर्माणं तथा जयपुरात् पूर्वोत्तरदिशि द्विसहस्रवर्षेभ्यः पूर्वं चित्रवाटाख्यदुर्गनिर्माणं च व्याख्यातं । भगवानेतान् प्रजापालनकुशलान् युरोपदेशवासिनोविद्याव्यसनिनोजनान् सततवर्धमानविद्यालक्ष्मीकान् करोतु परन्तु यद्येतएव विद्या

शिल्पोत्कर्षावाप्तसमृद्धीनां प्राचीनार्यजनानां सन्ततिप्रभवा भारतीयसांप्रतजनाइव भोगविलासालस्यैश्वर्यमदपारवश्यबुद्धिशरीरमांद्यादिदोषग्रस्ता भूत्वा व्याकरणाद्यनवधानात् कृतकृत्यताभिमानाच्च स्वदेशभाषां विस्मरेयुस्ततश्च तद्भाषानिबद्धानां विद्याशिल्पग्रन्थानां सिद्धान्तानितिकर्तव्यताश्च न जानीयुरतश्च ते सर्वे ग्रन्थालोपं प्राप्नुयुः क्रमेण च मुद्रायन्त्रं विद्युद्दूरलेखयन्त्रं बाष्पनौर्बाष्पगंत्री कालमानयन्त्रं वायुगुरुत्वमानयन्त्रं वृष्टिज्ञानयन्त्रं क्षेत्रकर्षणयन्त्रं प्रालेयोत्पादनयन्त्रं कार्पासवयनयन्त्रं सूक्ष्मदर्शकयन्त्रं दूरदर्शकयन्त्रं रविकिरणकूर्चिकाचित्रलेखयन्त्रं तथा ज्यौतिषवैद्यकगणितगतिरसायनौषधिखनिजभूगर्भभूपृष्ठजलवायुविद्युदादिविद्या इत्येवमादीन्यात्यन्तिकावश्यकोपयोगानि युरोपदेशीयजनानां वस्तुतत्त्वान्वेषणे परमोत्साहपरमफलावाप्तिसततप्रवृत्त्यादिसद्गुणपताकाभूतानि व्यवहारसाधनानि विशीर्णान्युच्छिन्नानि च स्युस्तदा यदि कश्चित् कतिपयक्षणैरेव कोट्यादिक्रोशान्तरे वृत्तज्ञापने कतिपयमुहूर्तैः सहस्रावधिक्रोशान्तरे स्थलजलवर्त्मना देशान्तरीयवस्तुप्रापणे युगपदेकपुरुषव्यापारमात्रेणानेकशतसहस्रप्रस्थभारोत्तोलने तथैवानेकग्रन्थीयसहस्रावधिपुस्तकानां झटिति मुद्रणे चेत्याद्यद्भुतकार्येषु सामर्थ्यं युरोपीयजनानामासीदिति वदेत् तर्हि तत्कालोत्पन्ना जना उक्तकार्योपायेतिकर्तव्यतानभिज्ञतया तत् तस्य वचनं सर्वथा विश्वासानर्हं पक्षपातमूलकमुपहासार्हं च मन्येरन् यथा सम्प्रति भारतवर्षीयाणां विद्याशिल्पसामर्थ्योत्कर्षकथां परदेशीयास्तत्संसर्गादिहत्याश्चापि बहवो मन्यन्ते प्राचीनेतिहासाच्चेहत्यजनानां पुराकाले प्रकृष्टं नीतिनैपुण्यं शिल्पप्राबल्यं परदेशीयजनमान्यत्वं चानुमीयते ऽतो यथा बेकनेन वस्तुस्वभावविशेषज्ञानात्पूर्वं लोकास्तत्कल्पनामुपहसंतीत्युक्तं तथावस्तुस्वभावविशेषस्य पूर्वपरिचितस्य केनचित् कारणेन विस्मरणेपि तत्कल्पनां लोका उपहसन्तीति मया मन्यते ।

अपिच यदा वयं द्यूतकन्दुकचौर्यपाकगंडूषलेखाद्यतिक्षुद्रविषयेष्वपि सत्फलपर्यवसानं यथा भवेत् तथा नियमदर्शकान् शिल्पग्रन्थान् प्राचीनसंस्कृतग्रन्थदर्शनादवगच्छामस्तदा यदा च द्विसहस्रवर्षेभ्योपि पूर्वं भारतीयविद्याशिल्पोत्कर्षः सर्वदेशान्तरीयविद्याशिल्पोत्कर्षमतिशिश्ये परन्तु भारतीयातिप्राचीनविद्याशिल्पोत्कर्षसदाचरणपाविच्ययोर्ह्रासकालएव सोऽभवदिति च प्रमाणैः पश्यामस्तदापि भारतीयविद्याशिल्पयोरुत्कर्षः पुरा साम्प्रतकालापेक्षयाऽत्यधिक आसीदिति सविस्मयं निश्चिनुमः । एतावन्मया प्राचीनैतद्देशीयस्थितिविषये युष्मासु निवेदितम् ।

अथेदानीन्तनैतद्देशस्थितिविषये किञ्चित् संक्षिप्य दर्शयामि तथाह्येतेषु दिवसेषु भारतवर्षीयाः प्रायेण जन्मनआरभ्य स्वगृहे लोकव्यवहारे [illegible] वेषस्य भाषाणां लिपीनां च व्यवहारवशात् क्रियमाणं परिग्रहं तत्परिग्रहमूलिकामेव च स्वजनानामन्नाच्छादनभोगविलासादिप्राप्तिं स्वदेशीयविद्याधर्मव्यवहारांश्च शब्दतः श्रूयमाणानप्यर्थतोऽननुष्ठीयमानान् दृष्ट्वा स्वदेशे क्वचित्क्वचिदुपलभ्यमानान्यपि सर्वोत्कृष्टानि शिल्पानि केवलं परदेशीयशिल्पमूलकानीति विवेकविरहान्मत्वा भक्ष्यपेयगम्यकार्याद्वैतरुचयः सन्तः स्वस्यैकव्यक्तिपर्यवसितसुखसिद्ध्यएवान्धा इव यं कमपि पंथानमाद्रियन्ते न तु स्वदेशीयजनानां हितं केनोपायेन स्यादिति स्वप्नेपि पश्यन्ति प्रत्युत स्वमृत्युरेव जगत्प्रलय इति प्रलपन्तःसंसर्गिणो जनानपि परकार्याद् व्यावर्तयन्ति । एते तावद् युरोपीयजना एतद्देशीयजनोपकाराय विद्याप्रचारणे बद्धपरिकराः प्रयतमाना अपि यदिष्टं फलं न लभन्ते लभमाना अपि वा पर्वतविदारणान्मूषकलाभवत् परमेण प्रयत्नेनात्यल्पमेव लभन्ते तत् परदेशीयभाषाद्वारेण देशान्तरे विद्याप्रचारणे विलम्बस्य तत्तद्देशीयजनपदभाषाणां चापरिष्कृततया गंभीरविचारैकगम्यविषयव्याख्यानसामर्थ्याभावस्य स्वभावसिद्धस्य फलं । यदि त्विहत्या धनिकाः प्रत्यहं भोगार्थं धर्मार्थं वा क्रियमाणस्य व्ययस्य शतांशमपि निष्कृष्यादौ यत् किमपि युरोपीयजनैरितिहासे ततो विद्यासु ततः शिल्पेऽवगतं स्वभाषया निबद्धं च तस्य सर्वस्य संस्कृतभाषयाऽवतारणे तन्मुद्रणे तदध्यापने तथा लुप्यमानसंस्कृतग्रन्थानां जीर्णोद्धरणपूर्वकतत्त्वपरीक्षया सदसद्विभागपूर्वकस्वदेशीयव्यवहारपरिशोधनानुकूलाभिनवनीतिग्रन्थनिर्माणे प्रोक्तकार्यनिर्वहणसमर्थानां विदुषां स्वस्वोचितकर्मनियोजनद्वारा वृत्तिकल्पने च विनियोजयेयुस्तर्हि संस्कृतभाषायाः सर्वार्थानां सौकर्येण प्रतिपादने समर्थत्वादेतद्देशीयजनस्वभावपरिचितत्वादस्मिन्नपि काले सुप्रचरितव्याकरणकत्वाच्चाविलंबेनैव सर्वेष्टसिद्धिः स्वपरदेशीयविद्याबीजानामेकैकक्षेत्रवापादपूर्वविद्यावृक्षसिद्ध्या चतुर्वर्गफलप्राप्तिः स्यादिति भवन्तः स्वतएवोचितसर्वव्यवहारक्षचिमन्तो विदांकुर्वन्तु ।

स्यादेतत् यदिदमुपन्यस्तं परदेशीयभाषाद्वारेणैतद्देशे विद्याशिल्पवृद्धेरविलम्बेन सर्वसाधारण्येन चाशा नास्ति परदेशीयभाषातत्त्वज्ञानमात्रेणैवैकपुरुषायुषपर्यवसानात् तादृशतत्त्वज्ञानस्य विद्यावर्द्धनकालोपयोगासम्भवात् नापीहत्यप्राकृतभाषाद्वारेण तासां सूक्ष्मविषयप्रकाशनानुकूलशब्दकोशराहित्येन सर्वविधज्ञानप्रचारणसामर्थ्याभावात् भारतवर्षीयसर्वप्रदेशसाधारण्याभावाच्च केवलंत्वेतद्देशीयसर्वभाषामूलभूतसाधुतमव्याकरणपरिशोधितसुप्रसन्नप्रसिद्धसंस्कृतभाषाद्वारेण सर्वेष्टसि-

द्धाशा वर्ततइति । तत् सर्वं ब्राह्मणानामेव संस्कृतज्ञत्वात् संस्कृतस्य वर्द्धने तद्द्वारा परदेशीयविद्याशिल्पेतिहाससंग्रहे च ब्राह्मणानां जीवनोपायवृद्धिः स्यादिति स्वार्थलोभमूलकमिति कृत्वा न प्रामाण्येन ग्राह्यमिति। मैवम् । विना भाषां तावज्ज्ञानवृद्धेराशा नास्त्येवेति यस्याएव भाषाया अनुसरणं तदर्थं क्रियेत तद्भाषाविदां जीवनोपायः सिद्ध्येदेव भाषान्तराणां चैतत्फलसाधनविनियोगयोग्यत्वाभावः प्रतिपादितदिशा स्पष्टः संस्कृतभाषायाः पूर्वोक्तहेतुना तद्योग्यत्वं च स्फुटमिति यदि संप्रति संस्कृतविदोब्राह्मणाएव सन्तीति हेतोस्तेषां कृशवृत्तीनां बुद्धिमतां स्वदेशोत्कर्षसिद्ध्यंगतया जीवनोपायलाभः स्यात् तर्हि ब्राह्मणद्वेषिणोजनान् विहायान्येषां किमप्यनिष्टं न स्यात् नहि संस्कृतभाषाज्ञानं ब्राह्मणैरेव संपादनीयमिति शास्त्रेषु निर्द्धारितं प्रत्युत तस्याएतद्देशभाषारूपाया इदानीन्तनैः पशुप्रायैरलसैरुपेक्षितत्वाद् ब्राह्मणजातिमात्ररुद्धत्वं नहि देशभाषाभावात् प्रच्याविताया अस्याः पुनरपि तत्पदारोपणं ब्राह्मणानां द्विष्टं। तं हि दिवसं धन्यं मन्ये यस्मिन्नेतद् भारतं वर्षं संस्कृतभाषिसर्वजनोपेतं तद्भाषानिबद्धसर्वस्वपरदेशीयविद्याशिल्पेतिहासपरिशीलनतदनुसारिव्यवहरणजनितबाह्याभ्यन्तरशुद्धि परदेशीयैः सविस्मयमीक्ष्यमाणं परस्परसहायताप्रवृत्तैकमतसर्वलोकं च भूत्वा चिरातीतकालभवं निजं भूमंडलमुकुटभावमासाद्य युरोपीयजनानामात्मप्रबोधप्रयत्नसाफल्यं विदधत् कृतज्ञतां विज्ञतां सरलतां साधुतां शुचितां रसिकतां भगवत्परायणतां पराक्रमणशीलतां स्वतन्त्रतां तपस्वितामैहिकामुष्मिककल्याणपात्रतां चात्मनः स्वाभाविकीं पूर्वसिद्धां लभेत ।

विद्यावृद्ध्यनुकूलप्रयत्नकारिणां दक्षिणालाभाभावादपि विद्यावृद्धेः प्रतिबन्धो भवतीत्येतन्न मयैवैकेनोत्प्रेक्षितं किन्तु परीक्षैकमूलकसिद्धान्तपरिग्राहिणा ऽत्यन्तविदुषा त्रिशतवर्षेभ्यः पूर्वमिंग्लंडीयमन्त्रिवर्यपदव्यां वर्तितवता सर्वं युरोपदेशं मिथ्याकल्पनाजालैर्दिङ्मूढमिवेतस्ततो भ्रममाणं स्वप्रयत्नेनाभिनवतत्त्वज्ञानोपायप्रदर्शनानुकूलेन सुमार्गं प्रापितवता बेकनाख्येनापि विद्यावृद्धिप्रतिबन्धकहेतुनिरूपणप्रस्तावे निर्द्धारितमिति ।

नन्विदानीमपि लक्षशोलोका इंग्लंडीयभाषानिबद्धानामर्वेपारसीकादिभाषानिबद्धानां च विद्याशिल्पानामभ्यासशीलास्तद्द्वारोऽभिवृद्धधनपदवीका विलोक्यन्ते तत् कथमुच्यते स्वल्पोऽधुना विद्याशिल्पयोरिहोत्कर्षइति । सत्यं । परन्तु स सर्वोऽप्युत्कर्षो निजनिजतत्तद्भक्तिमात्रपर्यवसितविषयोपभोगोद्देश्यकत्वादेतद्देशस्थप्राचीनजनापेक्षया साम्प्रतकालिकलोकानामुत्कर्षापकर्षविचारेऽत्यन्ततुच्छएव सह्युत्कर्षः साम्प्रतिकैतद्देशीयजनान्तरापेक्षया केषांचित्सांप्रतिकजनानामेव न त्वेतद्देशीयप्राचीनजनापेक्षया सांप्रतिकजनानां । यदि तु सर्वेतिहासग्रन्थापरिचितप्राचीनकालमारभ्याद्ययावदविकृतया संस्कृतभाषया सर्वविधस्वपरदेशीयविद्याशिल्पानामुपनिबन्धनं तथेतिहासग्रन्थानामवतारणं च स्यात् तर्हि झटित्येव सर्ववर्णेषु विद्याशिल्पेतिहासज्ञानप्रचारणेन देशान्तरीयेभ्यएतद्देशीयप्राचीनजनेभ्यश्च साम्प्रतैतद्देशीयजनानां विद्याशिल्पादिविषयकउत्कर्षः सम्भवेत् ।

यदा यस्मिन् देशे तद्देशीयभाषया तत्रत्यपंडितैस्तद्देशीयजनप्रार्थनया नीतिविद्याशिल्पग्रन्थाविरच्यन्ते तदा तस्मिन् देशे नीतिविद्याशिल्पानां सत्त्वं वृद्धिश्च भवति नान्यथा । सैषास्थितिः पुरैव नाद्यत्वे यतस्तदैव शुक्रबृहस्पतिनारदकमंदकचाणक्यादिभिर्विस्तृतानि नीतिशास्त्राणि चरकसुश्रुतवाग्भटप्रभृतिभिश्चिकित्साग्रन्था भास्करगणेशादिभिर्गणितज्यौतिषग्रन्था मंदपालसहदेवशालिहोत्रप्रभृतिभिर्गजतुरगशास्त्राणि च लोकोपयोगाय विरचितानि लोकैः परिगृहीतानि च इदानीन्तु नोक्तप्रकारकग्रन्थानां निर्माणमस्मद्देशीयोजन इच्छति यतोये कतिपये नीतिचिकित्साग्रन्था अवशिष्टाः सन्ति ते तावद् व्यवहारेणात्यन्तासम्बद्धाइति नवीनानां प्रचारस्य कथैव नोदेति । येचेंग्लंडीयादिभाषानिबद्धा विद्याशिल्पग्रन्थाः सार्वलौकिकव्यवहारानुपयुक्ता अपि वृत्तिमात्रेण निमित्तेनेहत्यैः परिशील्यन्ते तेपि तज्ज्ञैः पुरुषैर्विचार्यैहत्यव्यवहारोपयोगिनोन क्रियन्ते । अविज्ञास्त्वविज्ञाएवेति सर्वथा हतप्रायैवैतद्देशोत्कर्षवृद्धीच्छा। येचेदानीं वंगांगमगधमध्यदेशेषु कलिंगकर्नाटकमद्रमहाराष्ट्रसुराष्ट्रगुर्जरपांचालदेशेषु च तत्तद्देशीयभाषयाऽवतारिता इंग्लंडीयविद्याशिल्पग्रन्था दृश्यन्ते ते सर्वे संख्यया बहवो ऽप्यर्थतोऽतिदरिद्राः पुनःपुनरुद्धुष्टसमानस्वल्पसिद्धान्तगर्भा अतएव व्यवहारेऽत्यल्पफला विद्याप्रचाररसिकयुरोपीयजनकर्मकरैस्तद्रुच्यनुसारेण स्वदेशीयजनबोधप्रकारव्यवहारप्रकाराननुसंधायैव निर्मितास्तत्तन्निर्माणप्रवर्तकयुरोपीयजनानामितोदेशादपगमे सत्युपेक्षिता अतश्च यदि युरोपीयजनैरेतद्देशीयजनेषु विद्याप्रचारोत्साहः परित्यज्येत तर्हि सम्भावितात्यन्तविलया इति स्वतोऽस्माकं स्वदेशीयसर्वभाषामूलभूतसंस्कृतविद्याया वर्द्धने तया क्षीयमाणस्वदेशीयविद्यानां जीर्णोद्धरणे तथा तथैव वर्द्धमानपरदेशीयविद्यानां प्राचीनेतिहासानां च संग्रहे धनिकानां विदुषां च परस्परसाहाय्येन प्रवृत्त्यैव भारतवर्षस्योत्कर्षावस्थायाः पुनः प्राप्तिः सम्भाव्यतइति शम् ।

बोद्धारो मत्सरग्रस्ताः
प्रभवः स्मयदूषिताः ।

अबोधोपहताश्चान्ये
जीर्णमंगे सुभाषितम् ॥ १ ॥

अपिच पश्यतैतत् परमाद्भुतं यदिहत्येभ्य इदानीन्तनजनेभ्यो युरोपीयानां व्यवहारप्रकारः केवलं स्वदेशीयप्राचीनव्यवहार परित्यागायैव रोचते न तु युरोपीयजनानामुत्तमोत्तमसम्प्रदायपरिग्रहाय तथाहि युरोपीयाः परमेण विश्वासेन परमेण च प्रेम्णा स्वदेशभाषां स्वपूर्वजानुसृतां व्यवहारपरमार्थयोरीतिं स्वदेशीयजनप्रकाशितविद्याशिल्पग्रन्थान् दृढमभ्यस्य परदेशीयभाषाव्यवहारविद्याशिल्पविषये यत् किमपि स्वदेशीयप्राचीनजनैर्विचार्य व्यवस्थापितं तद् विज्ञायाधिकं विज्ञातुं स्वयं परदेशीयभाषादीनां परिचयं कृत्वा यत् किमपि सदसद् वा जानन्ति तत् सर्वं वर्तमानोत्पत्स्यमानस्वदेशीयजनोपकाराय स्वदेशभाषया निबध्नन्ति तमेतमुत्तमं युरोपीयजनसम्प्रदायं दूरतएवोत्सृज्येदानीन्तनाइहत्याः केवलं तदीयान् बाह्यान् निरनुरोधत्वभक्ष्यपेयाद्यद्भुतरुचित्ववस्त्रवेष्टितसर्वशरीरत्व दशाविशेषीयनिरुष्णीषकञ्चुकधारित्वसर्वप्रदेशोपानद्धारित्वादीन् व्यवहाराननुकुर्वाणास्तेनचात्मानं वस्तुतस्तेन कारणेन तैरुपहस्यमानमपि तेषामनुगृहीतं मन्यमाना वर्धमानेन गर्वेण दुर्गृहीतस्वल्पयुरोपीयभाषाविद्याशिल्पैः कृतार्थतामात्मनोऽभिमत्य स्वदेशीयान् निर्दोषप्राचीनव्यवहारानुसारिणो जनान् युरोपीयजनप्रदर्शितदोषविशेषारोपेण तिरस्कृत्य वयं भारतवर्षीयप्राचीनजनेभ्योऽपिविद्याशिल्पादिभिरुत्कृष्टाः स्म इति चक्षुषीनिमील्य सुखमवतिष्ठन्ते न पुनरयं सर्वोऽप्यस्मद्देशीयः सीदन् जनः परदेशीयजनानां श्रममनपेक्ष्य कीदृशेन साधारणेन सर्वदेशसर्वकालसुलभेन निर्दोषेण चोपायेन विपज्जलधेरुद्धृतः स्यादिति विचारयितुं श्रममनुभवन्ति ।

तच्चेदमस्मद्वचनं तात्पर्यतोन विचार्यमाणं कदाचिदस्मासूक्तविधेहत्यजनद्वेषसम्भावनामुत्पाद्य तन्निन्दापरत्वेन गृहीतं स्यात् परन्तु ते सर्वे जनाः समानदेशसंबंधात् समानभाषासंबंधात् समानपूर्वजपुरुषसंबंधात् समानकालसंबंधाच्च भ्रातरो मित्राणि च तेन विमार्गानुसरणे परस्परहितोपदेशो हिताचरणं च तेषामस्माकं च स्वाभाविकं संबंधिजनकृत्यमिति तैरस्मद्वचनं न निर्भर्त्सनमपि तु प्रबोधनमित्येव भारतवर्षीयजनानामुदयानुकूलस्येश्वरस्य कृपया मन्येतेत्यस्माकमतिमहत्याशा तस्यैव करुणया सफला भविष्यतीति शम् ।

---

## KUMARA-SAMBHAVA,

WITH NOTES IN ENGLISH.

BY

REV. K. M. BANERJEA.

*Calcutta: Thacker Spink & Co., London: Williams and Norgate*, 1867.

It is with real pleasure that we notice another edition of Kálidása's Kumára-Sambhava, one of the most charming narrative or descriptive poems in Sanskrit, and perhaps in any language. Besides the intrinsic attractiveness of the book before as, as containing on good paper and in large neat type, a poem which combines tenderness of feeling with the most exquisite delicacy of fancy, it has the additional interest, published as it is under the auspices of the Calcutta University, of being a tangible mark of the impetus already given to Sanskrit study in India by the recent regulation of that Institution which substitutes the classical language of the Hindoos in place of their vernaculars in the Arts Examinations.

In the Preface, the Editor has drawn an interesting comparison between Sanskrit and Greek Prosody, which, though limited within the range of the metres used in the poem, reflects no small credit upon him as a Greek Scholar. The notes on the text itself, consisting of literal interpretations in English, word for word and phrase for phrase, and indicating with sufficient clearness the construction of the sentences, will not only be a help to candidates for the Calcutta University Examination (for whom the work is specially designed) but to all Sanskrit students, whether European or native, who can understand English. We have to remark, however, with reference to the notes, that they would have been still more useful, had they been accompanied with *regular* explanations of the compounds which are so essential an element of the Sanskrit language, especially of that of the Classical Poems.

Here and there in the renderings we meet with slight slips, but in justice to Kálidása we have to say, in particular, that the Reverend Editor has been incautious in charging the poet's imagination with being 'rather too exuberant' in the following description of unmarried Umá's nourishing the trees—

अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्द्धयत् । V. 14.

the sense of which is, without a doubt, as Stenzler interprets it, that is to say the jars of Umá are represented as her breasts, *not* that her breasts are likened to jars. The Commentary of Mallinátha is quite explicit on this point. Stenzler was indeed wrong, along with the Pandits of the Fort William College, in his rendering of a similar stanza in Canto II of the Raghuvañśa. The denoting of the 'exemplar', as the Editor calls the object compared to, by the *second* word of a compound, is not only not 'opposed to Sanskrit idiom' but is precisely the idiom,* the reverse being true only in the *Báhuvríhi* compound, *when a simile is implied*† as in

* Páṇini II, 1, 56, S. K. (Táránátha's) I, 359.

† When a *metaphor* is intended, the 'exemplar' must follow in the *Bahuvríhi* too, as in III, 39.

घटस्तनी, the epithet of a woman. This very poem furnishes numerous instances of the same. We would particularly call the Editor's attention to III, 39, 27, 30, and VII, 74, the first of which stanzas has four consecutive instances. There is another stanza in Raghuvanśa, XIV, 78, similar to the verses of the Kumára-Sambhava in question, which dropping, as it does, the comparison to the breast, unmistakably conveys the meaning of Kálidása, with whom the figure, like many others, was a favourite one.

We notice a few slips in the Editor's English, such as *Konches* for *conchs* (p. 8.) &c., which we hope to see corrected in a second edition of this very meritorious School-book. Such expressions as 'young lady' and 'jolly woman' offend us in a translation of Kálidása, and we could point out other renderings nearly as objectionable. We hope that in a future edition too the Editor will be able to "pass over the reference to the 'Serpent-damsel' without making the following extract from (his) own Introduction to the *Márkanḍeya Puráṇa*:..............The word *nágas* is evidently the same as the *náchas* of Genesis, and we feel no difficulty in recognizing, in the Brahmanical theology, a confirmation of the Biblical account of the serpent..........." We need hardly say that there cannot, by any possibility, be the slightest connection between the Aryan and the Semitic word; *nága* coming from *naga* which comes from na and gam, no and go, and náchash (not *náchas*) נחש being an onomatopoetic word, signifying the "hisser;" the *sh* in the Hebrew word being its most important radical, the *s* in the Sanskrit word being merely a case-ending.

In spite of a few drawbacks we can strongly recommend this book to the young student.

---

#### LETTER TO THE EDITOR.

My dear Sir,

Can you kindly procure for me the following information? When I was at College, I made a note of a Hindu legend of the human race having been destroyed by the growth of a thick forest all over the world. Certain sages escaped by sheltering themselves in the sea for a time, and when they returned to the land the trees gave way before them. I cannot find any reference to this story in Wilson's Index to the Vishṇu Puráṇa. Can you tell me where it is to be found?

Yours truly,

*8th March*, 1867. WILLIAM WATERFIELD, C. S.
*Allahabad.*

*** Our correspondent will find the legend in the Bhágavata Puráṇa. Book iv. Ch. xxx. Sl. 44.

### RÁMA AND SÍTÁ.

IV.

High on the palace roof KAIKEYÍ's maid,
The crook-back MANTHARÁ, the town surveyed.
She saw the water sprinkled o'er the street,
And flowery heaps and garlands fresh and sweet:
Saw pennons playing in the scented air,
And busy Brahmans bustling here and there.
From every corner, as she gazed around,
She heard a concert of glad music sound;
While every temple shone with purest white,
That the maid marvelled at the festive sight.
She turned to RÁMA's nurse, who, standing by,
Gazed on the scene with rapture-rolling eye,
And cried, "I pray thee, aged matron, say
Does RÁMA's mother scatter gifts to-day?
Have the gods listened to KAUSALYÁ's vow,
And made the frugal queen so lavish now?"
The white-robed nurse, with transport uncontrolled,
All the glad story to the damsel told:
"To-morrow's happy light will see," she cried,
"Prince RÁMA regent by his father's side."
Down from the roof, high as KAILÁSA's head,
In furious haste the crook-back maiden sped:
Planning accursed guile, her soul aflame,
Where queen KAIKEYÍ lay asleep, she came.
"Up, queen!," she cried, "unclose thy heedless eyes,
Huge peril threatens thee, awake! arise!
Art thou still sleeping, still too blind to see
The load of misery that crushes thee?
Boast of thy husband's love, and find too late
His vaunted favour but disguises hate.
Ruin to thee and thine, thy lord has planned
To make Prince RÁMA Regent o'er the land.
In fear and grief and rage thy faithful slave
Has hither fled to warn thee and to save.
Are not my fortunes closely knit with thine?
Thy gain and peril, both, are also mine.
And thou, the scion of a royal race,
Shouldst know the frauds which royal hearts disgrace.
Poor queen, he loves thee not: thy treacherous lord
Can smile upon thee while he bares the sword:
And thy sweet soul, pure from all thought of sin,
Sees not the cruel snares that hem thee in.
Kind flattering words he makes thine empty dower,
But queen KAUSALYÁ has the wealth and power.
Far from thy side thine own dear son he sends
To live an exile with his mother's friends,
And, every rival thus removed away,
He gives to RÁMA all the royal sway.
Alas! deluded lady, thou hast pressed
A deadly serpent to thy foolish breast,
Lavishing love on him who works thee woe,
No loving husband but a mortal foe.
Nay, worse than all by snake or foeman done,

His plot against thee, lady, and thy son.
Come, rouse thee, mistress, while there yet is time,
Ensure thy safety and prevent the crime.
Up from thy careless ease, awake, and be
The saviour of thy son, thyself, and me."
Up rose Kaikeyí radiant with delight,
Like the calm moon upon the autumn night,
And spoke these words in answer, as she gave,
For the glad news, a necklace to the slave:
"Take this, dear damsel, thou hast earned it well:
No happier news thy pleasant tongue could tell.
I joy that Ráma shares his father's throne:
I love Kauśalyá's son e'en as I love mine own."
The handmaid's soul with grief and fury burned;
She cried in anger, as the gift she spurned:
"What! on the sea of whelming ruin tossed,
Canst thou rejoice when all but hope is lost?
Heart-sick I am, yet smile to see thy joy
When peril theatens and will soon destroy.
If thou wert wise thou scarce wouldst hail, I ween,
For king, the offspring of a rival queen.
Soon wilt thou stand in menial habit dressed,
And move obedient to her high behest.
Yea, thou wilt serve with us who serve thee now,
And see thy child before his brother bow.
Then Ráma's wife will triumph, queen of all,
And thy poor daughter be a helpless thrall."
"The virtuous Ráma," thus the dame replied,
"From virtue's path will never turn aside.
Obedient, grateful, pure from stain, and true,
As eldest born he only gains his due.
His lords and brethren many a year will share,
Blest in his rule, his kind paternal care:
And when a hundred years have passed away,
My son, dear Bharat, will enjoy the sway.
I love Prince Ráma as mine own dear son;
I see no fault to stain him, no not one.
Not to his mother could his worship be
More kind and tender than it is to me.
What though he rule, there is no cause of fear,
To him his brethren as his soul are dear:
And though in name his father's place he fill
Bharat will share the royal sceptre still."
Kaikeyí ceased: the impatient maiden sighed,
And thus with tears of grief and spite replied:
"Ah queen, what frenzy has assailed thy mind,
And made thee thus to instant danger blind?
Too blind to mark the seas of grief and woe,
That o'er thy head with whelming fury flow.
For after Ráma Ráma's son will reign,
Nor hope of kingship for thy son remain.
One heir is monarch when a monarch dies,
Else wild confusion in the realm would rise:
And be he good or bad, the power will fall
To him, the eldest born, and lord of all.
Know, tender mother, that thy son must roam,
A poor sad outcast, from his royal home.
Ráma, when king, thy darling son will drive
An exile hence, if haply left alive.
Come take the counsel that is wise and good,
And banish Ráma to the distant wood.
Then we who serve thee well, a faithful train,
Will hail with joy Prince Bharat's happier reign.
How shall he, worthy of a nobler fate,
From birth the object of his brother's hate,
Poor and despised, his weathy tyrant's scorn,
Obey the mandates of the elder born?
Arise, sweet queen, to save thy child, arise!
Prostrate beneath his brother's feet he lies.
Like some young elephant, who, proud to lead
His trooping consorts through the woods to feed,
Meets with a hungry lion in the way,
And sinks in death, his ruthless victor's prey."

*Rámáyaṇa II.* 7—8.

---

ON

## THE RELATIONS OF THE PRIESTS TO THE OTHER CLASSES OF INDIAN SOCIETY IN THE VEDIC AGE.

By J. Muir Esq.

*(Continued from page 152.)*

x. 107, 6. "They call him a rishi, him a *priest*, reverend, a chanter of Sâma verses *(sâma-gâm)*, and reciter of *ukthas*,—he knows the three forms of the brilliant (Agni) —the man who first worshipped with a largess."

x. 117, 7. "A *priest*[1] who speaks is more acceptable than one who does not speak."

(See Dr. Haug's remark on this verse, Ait. Br. Introd. p. 20; also the contexts of the two last passages in my article "Miscellaneous Hymns from the R. and A. Vedas," pp. 32 f.)

x. 125, 5. "I (says Vâch) make him whom I love formidable *(ugram)*, him a *priest*, him a rishi, him a sage *(sumedhâm)*."

II. In the passages which follow the word *brahman* does not seem to signify so much a "sage or poet," as a "worshipper or priest."

i. 10, 1. "The singers *(gâyatriṇah)* sing thee, the hymners *(arkiṇah)* recite a hymn, the *priests (brahmaṇah)*, O Śatakratu, have raised thee up like a pole."

(Compare i. 5, 8; i. 7, 1; viii. 16, 9. See Dr. Haug's remark on this verse, Ait. Br. Introd. p. 20).

[1] The word here seems to indicate an order or profession, as the *silent* priest is still a priest.

i. 33, 9. "Thou, Indra, with the believers, didst blow against the unbelievers, with the *priests* thou didst blow away the Dasyu."

i. 101, 5. "Indra, who is lord of all that moves and breathes, who first found the cows for the *priest*, who hurled down the Dasyu."

i. 108, 7. "When, O adorable Indra and Agni, ye are exhilarated in your own abode, or with a *priest* or prince *(brahmaṇi rājani vā)*,[1] come thence, ye vigorous (deities), and then drink of the poured out soma."

i. 158, 6. "Dîrghatamas, son of Mamatâ, being decrepit in his tenth lustre, (though) a *priest*, becomes the charioteer of (or is borne upon) the waters which are hastening to their goal."

(Prof. Aufrecht understands this to mean that Dîrghatamas is verging towards his end, and thinks there is a play on the word "charioteer" as an employment not befitting a priest).

ii. 39, 1. "Ye (Aśvins) are like two vultures on a tree; like two *priests* singing a hymn at a sacrifice."

iv. 50, 7 ff. "That king overcomes all hostile powers in force and valour who maintains Bṛihaspati in abundance, who praises and magnifies him as (a deity) enjoying the first distinction. 8. He dwells prosperous in his own palace, to him the earth always yields her increase,[2] to him the people bow down of themselves,—that king in whose house a *priest* walks first[3] *(yasmin brahmā rājani pūrva eti)*. 9. Unrivalled, he conquers the riches both of his enemies and his kinsmen—the gods preserve the king who bestows wealth on the *priest* who asks his assistance."[4]

(The benefits resulting from the employment of a domestic priest *(purohita)* are also set forth in A. V. iii. 19, translated in my former article, "Miscellaneous Hymns from the R. and A. Vedas," in the volume of this Journal, p. 33).

iv. 58, 2. "Let us proclaim the name of butter *(ghṛta)*, let us at this sacrifice hold it (in mind) with prostrations. May the *priest* (Agni?) hear the praise which is chanted. The four-horned bright-coloured (god) has sent this forth."

[1] A distinction of orders or professions appears to be here recognized. In the following verse (v. 54, 7) a *rishi* and a prince are distinguished much in the same way as a *priest* and king are in i. 108, 7: "That man, whether rishi or prince, whom ye, O Maruts, support, is neither conquered nor killed, he neither decays nor is distressed, nor is injured; his riches do not decline, nor his support." Compare v. 14, where it is said, "Ye, O Maruts, give riches with desirable men, ye protect a rishi who is skilled in hymns *(sâma-vipra)*; ye give a horse and food to Bharata, ye make a king prosperous." In iii. 43, 5, reference is found to Visvâmitra, or the author, being made by Indra both a prince and a rishi.

[2] Compare R. V. v. 37, 4 f.

[3] Compare viii. 69, 4; x. 39, 11; x. 107, 5; and the word *purohita*, used of a ministering priest as one *placed in front*. Prof. Aufrecht, however, would translate the last words, "under whose rule the *priest* receives the first or principal portion."

[4] See on this passage Roth's Art. on Brahma and the Brâhmans, *Journ. Germ. Or Soc.*, i. 77 ff. See also Aitareya Brâhmaṇa viii. 26.

v. 29, 3. "And, ye Maruts, *priests*, may Indra drink of this my soma which has been poured out," etc.

v. 31, 4. "The men[1] have fashioned a car for thy (Indra's) horse, and Tvashtṛ a gleaming thunderbolt, O god greatly-invoked. The *priests*, magnifying Indra, have strengthened him for the slaughter of Ahi."

v. 32, 12. "I hear of thee thus rightly prospering and bestowing wealth on, the sages *(viprebhyah)*. What do the *priests*, thy friends, obtain who have reposed their wishes on thee, O Indra?"

v. 40, 8. "Applying the stones (for pressing soma), performing worship, honouring the gods with praise and obeisance, the *priest* Atri placed the eye of the sun in the sky, and swept away the magical arts of Svarbhânu."

vii. 7, 5. "The chosen bearer (of oblations), Agni, the *priest*, having arrived, has sat down in a mortal's abode, the upholder."

vii. 33, 11. "And thou, O Vasishṭha, art a son of Mitra and Varuṇa (or a Maitravaruṇa-priest), born, O *priest*, from the soul of Urvaṣí. All the gods placed in the vessel thee, the drop which had fallen through divine contemplation."

vii. 42, 1. "The *priests*, the Angirases, have arrived," etc.

viii. 7, 20. "Where now, bountiful (Maruts), are ye exhilarated, with the sacrificial grass spread beneath you? What *priest* is serving you?"

viii. 17, 2 f. "Thy tawny steeds with flowing manes, yoked by prayer *(brahma-yujā)*,[2] bring thee hither, Indra; listen to our prayers. 3. We *priests*, offerers of soma, bringing oblations, continually invoke the drinker of soma."

viii. 31, 1. "That *priest* is beloved of Indra who worships, sacrifices, pours out libations, and cooks offerings."

viii. 32, 16. "There is not now any debt due by the active *priests* who pour out libations. Soma has not been drunk without an equivalent."

viii. 33, 10. "Look downward, not upward; keep thy feet close together; let them not see those parts which should be covered; thou, a *priest*, hast become a woman."

viii. 45, 39. "I seize these thy tawny steeds, yoked by our hymn *(vacho-yujā)* to a splendid chariot, since thou didst give (wealth) to the *priests*."

viii. 53, 7. "Where is that vigorous, youthful, large-necked, unconquered (Indra?) What *priest* serves him?"

viii. 66, 5. "Indra clove the Gandharva in the bottomless mists, for the prosperity of the *priests*."

[1] Ṛbhus?

[2] Compare viii. 45, 39, below.

viii. 81, 30. "Be not, O lord of riches (Indra), sluggish like a *priest.*[1] Be exhilarated by the libation mixed with milk."

viii. 85, 5. "When, Indra, thou seizest in thine arms the thunderbolt which brings down pride, in order to slay Ahi, the (aerial) hills and the cows utter their voice, and the *priests* draw near to thee."

ix. 96, 6. "Soma, resounding, overflows the filter, he who is *priest* among the gods, leader among poets, rishi among the wise, buffalo among wild beasts, falcon among kites, an axe among the woods."

ix. 112, 1. "Various are the thoughts and endeavours of us different men. The carpenter seeks something broken, the doctor a patient, the *priest* some one to offer libations.[2]

ix. 113, 6. "O pure Soma, in the place where the priest, uttering a metrical hymn, is exalted at the soma sacrifice through (the sound of) the crushing-stone, producing pleasure with soma, O Indu (soma) flow for Indra."

x. 28, 11. (The word *brahmaṇah* occurs in this verse, but the sense is not clear).

x. 71, 11. (See translation of this verse below, where the entire hymn is given).

x. 85, 29. "Put away that which requires expiation (?) Distribute money to the *priests.* 35. Behold the forms of Súryá. But the *priest* purifies them."

x. 141, 3. "With hymns we invoke to our aid king Soma, Agni, the Ádityas, Vishṇu, Súrya, and Bṛhaspati, the *priest.*

III. In the following passages the word *brahman* appears to designate the special class of priest so called, in contradistinction to *hotri, udgátri,* and *adhvaryu.*

ii. 1, 2 (=x. 91, 10). "Thine, Agni, is the office of *hotri,* thine the regulated office of *potri,* thine the office of *neshṭri,* though art the *agnidh* of the pious man, thine is the office of *prasástri,* thou actest as *adhvaryu,* thou art the *brahman,* and the lord of the house in our abode. 2. Thou, Agni, art Indra, the chief of the virtuous, thou art Vishṇu, the wide-stepping, the adorable, thou, O Brahmaṇaspati, art the *priest (brahmá),* the possessor of wealth, thou, O sustainer, art associated with the ceremonial."

iv. 9, 3. "He (Agni) is led round the house, a joyous *hotri* at the ceremonies, and sits a *potri.* 4. And Agni is a wife (*i. e.* a mistress of the house) at the sacrifice, and a master of the house in our abode, and he sits a *bráhmán.*"

x. 52, 2. "I have sat down an adorable *hotri;* all the gods, the Maruts, stimulate me. Day by day ye Aṣvins, I have acted as your *adhvaryu;* the *brahman* is he who kindles the fire: this is your invocation."

I shall now bring forward the whole of the texts in which the word Bráhmăṇa, meaning a son, or descendant, of a *brăhmăn,* occurs in the Rig-veda.[1] They are the following:

i. 164, 45. "Speech consists of four defined grades. These are known by those Bráhmans who are wise. They do not reveal the three which are esoteric. Men speak the fourth grade of speech."

This text is quoted and commented upon in Nirukta xiii. 9.

vi. 75, 10. "May the Bráhman fathers, drinkers of soma, may the auspicious, the sinless, heaven and earth, may Púshan preserve us," etc. etc.

vii. 103, 1 (=Nirukta 9, 6). "After lying quiet for a year, those rite-fulfilling Bráhmans[2] the frogs have (now) uttered their voice, which has been inspired by Parjanya...7. Like Bráhmans at the Atirátra soma rite, like (those Bráhmans) speaking round about the full pond (or soma-bowl[3]) you frogs surround (the pond) on this day of the year, which is that of the autumnal rains. 8. These soma-offering Bráhmans (the frogs) have uttered their voice, performing their annual devotion *(brahma);* these adhvaryu priests sweating with their boiled oblations (or in the hot season) come forth from their retreats like persons who have been concealed."

x. 16, 6. "Whatever part of thee any black bird, or ant, or serpent, or wild beast has mutilated, may Agni cure thee of all that, and Soma who has entered into the Bráhmans."[4]

x. 71, 1.[5] "When, O Bṛhaspati, men first sent forth

[1] Dr. Haug (Introd. to Ait, Br. p. 20) refers to Ait. Br. v. 34, as illustrating this reproach. See p. 376 of his translation. This verse clearly shows that the priests formed a professional body.

[2] This verse also distinctly proves that the priesthood already formed a profession. Verse 3 of the same hymn is as follows: "I am a poet, my father a physician, my mother a grinder of corn." Unfortunately there is nothing further said which could throw light on the relations in which the different professions and classes of society stood to each other.

[1] There are two more texts in which the word *bráhmana* is found, viz., i. 15, 5, and ii. 36, 5, on which see the following note. The word *brahmaputra,* son of a brahman, is found in ii. 43, 2: "Thou O bird, singest a sáma verse like an *udgátri;* thou singest praises like the son of a *brahman* at the libations."

[2] In the Nighantus, iii. 13. these words *brahmaṇá vrata-cháriṇah* are referred to as conveying the sense of a simile, though they are unaccompanied by a particle of similitude. In his Illustrations of the Nirukta, p. 126. Roth thus remarks on this passage: "This is the only place in the first nine mandalas of the R. V. in which the word Bráhmaṇa is found with its later sense, whilst the the tenth mandala offers a number of instances. This is one of the proofs that many of the hymns in this book were composed considerably later (than the rest of the R. V.). The word *bráhmaṇa* has another signification in i. 15, 5; ii. 36, 5; and vi. 75, 10. (In the first of these texts, Roth assigns to the word the sense of the Bráhman's soma-vessel. See his Lexicon. *s. v.* It does not appear what meaning he would give to the word in vi. 75, 10. He has in this passage overlooked R. V. i. 164, 45, which, however, is duly adduced in his Lexicon). See Wilson's translation of the hymn; as also Müller's, in his Anc. Sansk. Lit. p. 494 f.

[3] *Saras.* See R. V. viii. 66, 4, quoted in Nirukta v. 11, where Yáska says, "The ritualists inform us that at the mid-day oblation there are thirty *uktha* platters destined for one deity, which are then drunk at one draught. These are here called *saras.*" (Compare Roth's Illustrations on the passage.) See also R. V. vi. 17, 11, and viii. 7. 10, with Sáyana's explanations of all three passages).

[4] Compare A. V. vii. 115, 1 ff—xii. 5, 6.

[5] I cannot pretend that I am satisfied with the translation I have attempted of this very difficult hymn. Verses 4 and 5 are explained in Sáyana's Introduction to the Rig-veda, pp. 30 f., of Müller's edition.

the earliest utterance of speech, giving a name (to things), then all that was treasured within them, most excellent and pure, was disclosed through love.

2. (=Nirukta iv. 10). "Wherever the wise,—as if cleansing meal with a sieve,—have uttered speech with intelligence, there friends recognize acts of friendliness; good fortune[3] dwells in their speech.[1]

3. "Through sacrifice they came upon the track of speech, and found her entered into the rishis. Taking, they divided her into many parts:[2] the seven poets celebrate her in concert."

4. (=Nir. i. 19.) "And one man, seeing, sees not speech, and another, hearing, hears her not;[3] while to a third she discloses her form, as a loving well-dressed wife does to her husband."

5. (=Nir. i. 20.) "They say that one man has a sure defence in (her[4]) friendship; he is not evercome even in the conflict (of discussion). But that person consorts with a vain delusion who has listened to speech without fruit or flower."

6. "He who abandons a friend who understands friendship, has no portion whatever in speech. All that he hears, he hears in vain, for he knows not the path of righteousness."

7. "Friends gifted both with eyes and ears have proved unequal in mental efforts. Some have been (as waters) reaching to the face or armpit, while others have been seen like ponds in which one might bathe."

8. (=Nir. xiii. 13.) "When Bráhmans who are friends strive (?) together in efforts of the mind produced by the heart,[5] they leave one man behind through their acquirements, whilst others walk about boasting to be priests." (This is the sense Prof. Aufrecht suggests for the word *ohabráhmáṇah*. Prof. Roth *s. v.* thinks it may mean "real *priests*." The author of Nirukta xiii 13, explains it as meaning "reasoning *priests*," or "those of whom reasoning is the sacred science.")

9. "The men who range neither near nor far, who are neither (reflecting) Bráhmans nor yet pious worshippers at libations,—these, having acquired speech, weave their web imperfectly, (like) a female weaver,[6] being destitute of skill."

[1] I quote here as somewhat akin to this hymn another from the A. V. vi. 108, being a prayer for wisdom or intelligence. 1. "Come to us, wisdom, the first, with cows and horses, (come) thou with the rays of the sun; thou art to us an object of worship. 2. To (obtain) the succour of the gods, I invoke wisdom the first, full of prayer, inspired by prayer, praised by rishis, imbibed by Brahmachárins 3. We introduce within me that wisdom which Ṛbhus know, that wisdom which divine beings *(asuráh)* know, that excellent wisdom which rishis know. 4. Make me, O Agni, wise to-day with that wisdom which the wise rishis —the makers of things existing—know. 5. We introduce wisdom in the evening, wisdom in the morning, wisdom at noon, wisdom with the rays of the sun, and with speech" *(vachasá)*.

[2] Compare x. 125, 3; i. 164, 45; (x. 90, 11); and A. V. xii. 1, 45.

[3] Compare Isaiah vi. 9, 10; and Matthew xiii. 14, 15.

[4] *Yák-sakhye*, Yáska.

[5] Compare i. 171, 2; ii. 35, 2; vi. 16, 47.

[6] Such is the sense which Prof. Aufrecht thinks may, with probability, be assigned to *siris*, a word which occurs only here.

10. "All friends rejoice at the arrival of a renowned friend who rules the assembly; for such a one, repelling evil, and bestowing nourishment upon them, is thoroughly prepared for the conflict (of discussion)."

11. (Nir. i. 8.) "One man possesses a store of verses *(ṛchám)*; a second sings a hymn *(gáyatra)* during (the chanting of) the *śakvarís*; one who is a *priest (brahman)* declares the science of being *(játa-vidyám)*, whilst another prescribes the order of the ceremonial.[1]

R. V. x. 88, 19 (=Nir. vii. 31). "As long as the fair-winged Dawns do not array themselves in light, O Mátariṣvan, so long the Bráhman coming to the sacrifice, keeps (the fire), sitting below the hotri-priest."

(See Prof. Roth's translation of this verse in his Illustrations of the Nirukta, p. 113).

x. 90, 11 (=A. V. xix. 5, 6; Váj. S. xxxi.). "When they divided Purusha, into how many parts did they distribute him? What was his mouth? what were his arms? what were called his thighs and feet? 12. The Bráhman was his mouth, the Rájanya was made his arms, that which was the Vaiṣya was his thighs, the Śúdra sprang from his feet."

(See the translation of this entire hymn in Sanskrit Texts, i. 6 ff.; and in my paper on "The Progress of the Vedic Religion," in Journal Roy. As. Soc. vol. i. new series, pp. 353 ff.).

x. 97, 22. "The plants converse with king Soma,[2] (and say), "for whomsoever a Bráhman acts (*kṛṇoti*, officiates), him, O king, we deliver."

x. 109, 1. "These (deities), the boundless, liquid Mátariṣvan (Air), the fiercely-flaming, ardently-burning, beneficent (Fire), and the divine primeval Waters, first exclaimed against the outrage on a *priest (brahma-kilbishe)*. 2. King Soma,[3] unenvious, first gave back the priest's wife; Varuṇa and Mitra were the inviters; Agni, the invoker, brought her, taking her hand. 3. When restored, she had to be received back by the hand, and they then proclaimed aloud, 'This is the *priest's* wife; she was not committed to a messenger to be sent:—in this way it is that the kingdom of a ruler (or Kshattriya) remains secured to him.[4] 4. Those ancient deities, the Rishis, who sat down to perform austerities, spoke thus of her, 'Terrible is the wife of the Bráhman; when approached, she plants confusion in the highest heaven.[5] 5. The Brahmachárin[6] (religious student) con-

[1] According to Yáska (Nir. i. 8), these four persons are respectively the *hotri, udgátri, brahman* and *adhvaryu* priests. The brahman, he says, being possessed of all science, ought to know everything; and gives utterance to his knowledge as occasion arises for it *(játe játe)*. See Dr. Haug's remarks on this verse. Ait. Br. Introd. p. 20.

[2] Compare *oshadhîh Soma-rájnîh*, "the plants whose king is Soma," in *vv.* 18 and 19 of this hymn.

[3] Compare R. V. x. 85, 8 f., 40 f.; and my contributions to Vedic Mythology, No. ii., p. 2 f.

[4] I am indebted to Prof. Aufrecht for this explanation of the verse.

[5] See R. V. i. 164, 34, 35, above.

[6] See my paper on the Progress of the Vedic religion, pp. 374 ff.

tinues to perform observances. He becomes one member[1] of the gods. Through him Bṛhaspati obtained his wife, as the gods obtained the ladle which was brought by Soma. 6. The gods gave her back, and men gave her back; kings, performing righteousness, gave back the *priest's* wife. 7. Giving back the *priest's* wife, freeing themselves from sin against the gods, (these kings) enjoy the abundance of the earth, and possess a free range of movement."

This hymn is repeated in the Atharva-veda, with the addition of ten more verses, which I subjoin.

Atharva-veda, v. 17.

(*vv.* 1-3=*vv.* 1-3 of R. V. x. 109).

4. "That calamity which falls upon the village, of which they say, 'this is a star with dishevelled hair,' is in truth the *priest's* wife, who ruins the kingdom which is visited by a hare attended with meteors."

(*vv.* 5-6=*vv.* 5-4 of R. V. x. 109).

7. "Whenever any miscarriages take place, or any moving things are destroyed, whenever men slay each other, it is the *priest's* wife who kills them. 8. And when a woman has had ten former husbands not Bráhmans, if a *priest (brahmá)* take her hand (*i.e.* marry her), it is he alone who is her husband. 9. It is a Bráhman only that is a husband, and not a Rájanya, or a Vaiṣya. That (truth) the Sun goes forward proclaiming to the five classes of men *(panchabhyo mánanebhyah.*"

(*vv.* 10-11=*vv.* 6-7 of R. V. x. 109).

12. "His (the king's) wife does not repose opulent *(śatavâhí)* and handsome upon her bed, in that kingdom where a *priest's* wife is foolishly shut up. 13. A son with large ears *(vikarṇah)* and broad head is not born in the house in that kingdom, etc. 14. A charioteer with golden neckchain does not march before the king's hosts (?)[2] in that kingdom, etc. 15. A white horse with black ears does not make a show, yoked to his (the king's) chariot in that kingdom, etc. 16. There is no pond with blossoming lotuses in his (the king's) grounds in that kingdom where, etc. 17. His (the king's) brindled cow is not milked by his milkmen in that kingdom, etc. 18. His (the king's) milch cow does not thrive, nor does his ox endure the yoke, in that country where a Bráhman passes the night wretchedly without his wife."

I will now refer to a number of texts in which liberality to the authors of the hymns is mentioned with approbation.

Of these passages i. 125; i. 126; v. 27; v. 30, 12 ff.; v. 33, 8 ff.; v. 61, 10; vi. 27, 8; and vi. 47, 22 ff., may

[1] See A. V. x. 7, 1 ff., 9, 26.

[2] The word here in the orginal is *súnánám*, with which it is difficult to make any sense. Should we read *senánám*?

be consulted in Prof. Wilson's translation; and a version of R. V. x. 107 will be found in my article, "Miscellaneous Hymns from the Rig and Atharva Vedas," p. 32 f. The following are further instances:[1]—

vii. 18, 22 ff. "Earning two hundred cows and two cars with mares, the gift of Sudás the grandson of Devavat and son of Pijavana, I walk about, as a priest does round a house, offering praises. 23. The four robust richly caparisoned brown[2] horses of Sudás, the son of Pijavana, standing on the earth, carry me, son to son,[3] onward to renown in perpetuity." (See the translation of these verses in Roth's Litt. u. Geschichte des Weda, p. 100.) In i. 126, 3, and vi. 27, 8, also, the word *vadhúmantah* is used as here, and is probably to be taken in the first of these passages of mares, and in latter of cows, *vinśatim gá vadhúmanto,* being "twenty bulls with their cows." The same sense of cows or mares is probably to be understood in viii. 19, 36. That the preceding passages refer to the females of bulls or horses is made likely by comparing viii. 57, 17, which will be quoted below. In viii. 46, 37, however, reference is distinctly made to the gift of a woman *(yoshaṇá)*.

viii. 3, 21. "(The horse?) which Indra, the Maruts, and Pákasthâman, the son of Kurayáṇa, gave to me, the most brilliant of all, like (the sun) careering in the sky. 22. Pákasthâman gave me a tawny (horse) well broken in, and filling his traces, an indication of riches. 23. Like to which other ten swift steeds also bear the yoke, like those which carried the son of Tugra to his home. 24. Soul, food, body, raiment, the giver of vigour, and ornament—(all this Pákasthâmân is). I celebrate him as the fourth liberal bestower of a tawny horse."

[1] The fourth volume of Professor Wilson's Rig-veda, edited by Mr. Cowell, having been published since this paper was written, the reader may compare his version of such of the following passages as are included in it with mine.

[2] The word here rendered is *smaddishṭayah.* In his explanation of this passage Sáyaṇa considers it to mean *praśastátisarjanasraddhádidánángayuktáh i. e.* "possessing the approved constituents of a gift, viz., generosity, faith," etc. It occurs in three other texts, viz., in iii. 45, 5, as an epithet of Indra, where Sáyaṇa takes it to signify *bhadravákya,* "speaking auspicious words;" in vi. 63, 9. where he takes it as—*praśastu-darsanán,* "of approved look;" and in x. 62 9, Prof. Aufrecht considers the word to mean "strong," "robust" a sense which suits the context of iii. 45, 5 (where it cannot possibly bear the interpretation assigned by Sáyaṇa on vii. 18, 23), and apparently also that of x. 62, 9. From the etymology (apparently *smat* for *sumat,* "good" or "well," and *dishti,* "pleasure" or "good luck,") one would suppose it ought to mean "blessed" or "fortunate," a sense which might also suit the context of iii. 45, 5.

[3] *Tokam tokáya.* The sense is obscure.

*(To be continued.)*

*Communications of a literary nature should be addressed to the* EDITOR: *all letters on business, to the Proprietors,* MESSRS. E. J. LAZARUS & Co., *to whom Drafts should be made payable.* ADVERTISEMENTS *will be charged for according to the space occupied.*

The PANDIT may be ordered of the Publishers, or through MESSRS. TRÜBNER and Co., LONDON.

*Annual subscription, in advance, including postage, Rs.* 12.

PRINTED AND PUBLISHED BY E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥

अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 12. Benares May 1st, 1867. Vol. I.


## ॥ प्रकरणपञ्चिकायां प्रमाणपारायणे ॥

### ॥ अभावसंभवैतिह्यप्रामाण्यनिराकरणं नाम ॥

॥ षष्ठः परिच्छेदः ॥

ये पुनरभावाख्यं षष्ठं प्रमाणमिच्छन्ति तत्प्रतिबोधनाय सम्प्रति यत्न आरभ्यते । तथाहि । सर्वं प्रमाणं प्रमेयाविनाभावि । नचाभावाख्यस्य प्रमाणस्य प्रमेयं किंचित् प्रतीतिबलसिद्धम् । एवमभावाख्यमपि प्रमाणं न शक्नोति स्वसामर्थ्येनैव प्रमेयमुपकल्पयितुं । तथाहि । इह भूतले घटो नास्तीति तावदस्ति प्रतीतिः सा तावद्भूतलमात्रविषया न भवति सत्यपि घटे प्रसङ्गात् । अथ केवलभूतलविषयेत्युच्यते । तत्रापि चिन्तनीयं । किमिदं कैवल्यं । यदि तावद्भूतलस्वरूपमेव तदा सत्यपि घटे तस्यानपायान्नास्तीति धीः स्यात् । अथ भूतलधर्मः कैवल्यम् । अस्ति तर्हि प्रमेयं कैवल्यं । तत्रेदं विचारणीयं । किं तत् प्रत्यक्षादिबोध्यमुत प्रमाणान्तरप्रमेयमिति । तत्र प्रत्यक्षप्रमेयं तावन्न भवति । इन्द्रियव्यापारमन्तरेण प्रतीतेः । नन्विदमयुक्तं । व्यापृतेन्द्रिय एव हीह भूतले घटो नास्तीत्यवबुध्यते नान्धादिः । अत्रोच्यते । क्वचित् कस्यचिदभावः प्रतीयते तेन यत्राभावः प्रत्येतव्यस्तद्ग्रहणायेन्द्रियव्यापारापेक्षा नाभावग्रहणाय । कथं पुनरयं विभागोऽवसीयते । उच्यते । भावग्रहणमात्रोपरतेन्द्रियव्यापारस्याप्यभावप्रतीतिदर्शनाद्भावमात्र एवेन्द्रियव्यापारापेक्षेति विज्ञायते । तथाहि । स्वरूपमात्रेण गृहादिकं प्रतिपन्नवतो देशान्तरगतस्यापि तत्र भावान्तरसत्तां जिज्ञासमानस्याभावावगमो जायते नच शक्यते वक्तुं गृहीत एव तत्रापि प्रागेवाभाव इति । भावान्तरस्यैव तदानीं बुद्ध्यावनारोहात् । तेनेन्द्रियव्यापारानपेक्षाऽभावप्रतीतिर्नैन्द्रियकीति न प्रत्यक्षमेयं कैवल्यं । नच वाच्यं प्रवृत्तिनिवृत्ती द्वे गती सर्वप्रमाणानां तत्र प्रवर्तमानं प्रमाणं भावसाधकं निवर्तमानं त्वभावसिद्धिनिबन्धनमिति । या निवृत्तिः प्रमाणस्य स्वतस्तावदवगतिरूपा न भवति सा कथमभावसिद्धिमाविर्भावयति । प्रवृत्तिस्तु प्रमाणानामवगमात्मिका तावद्व्यवस्थापयितुमलम् । अथ प्रमाणनिवृत्तिरवगत्यन्तरं जनयित्वाऽभावं व्यवस्थापयति । आयातं तर्हि प्रमाणान्तरं । भवतु प्रत्यक्षात् प्रमाणान्तरम् । अनुमानात् तु भेदो नास्ति । दृश्यस्य हि सत्ता दर्शनेन व्याप्ता । दर्शनं निवर्तमानं दृश्यमपि निवर्तयति । व्यापकनिवृत्तिर्हि व्याप्यनिवृत्त्या व्याप्ता । व्याप्याच्च व्यापकावगतिरनुमानमेव भवति । तदिदमयुक्तं । सर्वत्र हि व्याप्यं व्यापकं चावगम्य व्याप्तिरवसीयते । इह च व्याप्या च व्यापिका च निवृत्तिरेव । सा चाभावात्मिका न भावग्राहकप्रमाणावसेयेति न व्याप्त्यवधारणं संभवतीति कथमनुमानता । लिङ्गभूतप्रमाणनिवृत्त्यनवक्लृप्तेश्चानुमानत्वासंभवः । तस्माद्भावग्राहकप्रमाणाननुवृत्तिरेवाभावावगमं प्रसूते । तच्चाभावाख्यं प्रमाणं । यद्भावग्रहणयोग्यं तन्निवृत्तिरेवाभावमवबोधयतीति नातिप्रसङ्गदोषोऽत्र जायते । अतोऽभावाख्यमपि प्रमाणं स्वमहिम्नैव विषयमुपकल्पयति भावग्राहकप्रत्यक्षादिप्रमाणपञ्चकवत् । अपिच कण्टकादिविरहिणि भूतलादौ यो निःशङ्कः पादन्यासादिव्यवहारः प्रवर्तते स तावद्भूतलमात्रपरिच्छेदनिबन्धनो नाभ्युपगमनीयः । कण्टकादिसंयोगिन्यपि प्रसङ्गात् । अथ केवलभूतलादिपरिच्छेदनिबन्धन इत्युच्यते । तत्रापि

विकल्पनीयं । किं केवलस्य भूतलादेः परिच्छेदाद्व्यवहारप्रवृत्तिः । अथ केवलाद्भूतलपरिच्छेदादिति । तत्राद्यिमपक्षपरिग्रहे भूतलादिस्वरूपातिरिक्तकैवल्यपरिच्छेदाभ्युपगमादङ्गीकृतमभावस्य प्रमेयत्वं । पश्चिमपक्षावलम्बने तु भूतलमात्रपरिच्छेदे जाते श्लक्ष्णेषु कण्टकादिष्वनवगतेषु व्यवहारो यदि प्रवर्तते तदा सूक्ष्मकण्टकजिज्ञासा निष्फला भवेत् । प्रयत्नपूर्विकयापि हि जिज्ञासया केवलभूतलपरिच्छेद एव लब्धव्यः । स चेद्विनापि प्रयत्नं लब्धो निष्फलं प्रयत्नपूर्वकं सूक्ष्मकण्टकाद्यन्वेषणं । कैवल्यपरिच्छेदपूर्वके तु व्यवहारे कैवल्यपरिच्छेदस्य प्रयत्नमन्तरेणाशक्यत्वाद्युक्त एव प्रयत्नः । दृश्यादर्शनं ह्यभावावगमकारणं । नच सूक्ष्माः कण्टकादयः प्रयत्नमन्तरेण दृश्यतामापाद्यन्त इति दृश्यत्वापत्तये युक्तैव प्रयत्नपूर्विका जिज्ञासा । अपिच शशादीनां शृङ्गाद्यनुमानं स्यादभावस्यापरिच्छेद्यत्वात् । अभावस्य तु प्रमेयत्वे बाधितविषयत्वेनानुमाननिरोधो युक्त इति । उच्यते । द्वयी भूतलादिभावानामवगतिः । एका तावद्भावान्तरसंसृष्टविषया । अपरा च तदेकविषया । यापि च सा तदेकविषया बुद्धिः । सा च द्वेधा । तदन्येषु भावान्तरेषु तत्सङ्गिषु दृश्येष्वदृश्येषु च । तत्र येयं दृश्येषु प्रतियोगिषु बुद्धिः सैव तेषां प्रतियोगिनामभाव इत्युच्यते । योऽपि हि प्रमेयमभावमाह सोऽपि प्रतियोगिषु दृश्येषु तदेकविषयां बुद्धिं तावदवश्यमभ्युपैति न हि संसृष्टविषयबुद्ध्युदयेनाप्यदृश्ये प्रतियोगिन्यभावोऽवगम्यते । किंच दृश्यादर्शनमभावावगमे प्रमाणं । नच प्रमाणमन्तरेण प्रमेयसिद्धिरस्तीति यत्राभावोऽभ्युपगमनीयस्तत्रावश्यं दृश्यादर्शनमाश्रयणीयं । तुल्योपलम्भयोग्यस्य चार्थान्तरदर्शनेन दृश्यानुपलम्भोऽवधार्यते । अतो दृश्यप्रतियोगिविषया तदेकोपलब्धिरेव वरमभावोऽस्तु । ननु यद्यभावो नास्ति कथं तर्हि यत्र प्राक्संसृष्टबुद्धिरासीत् तत्र तदेकविषया बुद्धिराविर्भवति प्रध्वंसाभावाभ्युपगमे तु सा स्यात् । अपिच विनापि तदेकविषयां बुद्धिमभावावगतिरस्ति । अनुमानाद्येकविषयाणां भावानामनुमानाद्यभावेऽभावो दृश्यते । तत्र तुल्योपलम्भयोग्यभावान्तरैकविषया बुद्धिर्नास्त्यथ चाभावोऽवगम्यत इति तदेकविषयबुद्धिव्यतिरेकेणाप्यभावोऽवगम्यते । अत्राभिधीयते । यस्यापि मते प्रध्वंसाभावः स्वीक्रियते तमपि प्रति पर्यनुयोगोऽयं शक्यते यस्य यत्र भाव आसीत् कथं तस्य तत्राभाव इति । स चेत् पर्यनुयुक्तो ब्रूते यत् कारणोपनिपातवशेन तस्मिन्नेवाभावो जायते ततो वयमपि वदितुं शक्ताः । कारणोपनिपातादेव तदेकविषया बुद्धिराविर्भवतीति । यथैव स वादी प्रध्वंसाभावस्य कारणमाह तथैव तदेकविषयाया बुद्धेरपि वयं वदितुं क्षमाः । अथोच्यते । मुद्गराभिघातादिः क्षणिकोऽभावस्य कारणं स कथं कालान्तरे तदेकविषयां बुद्धिं जनयति । हन्त तर्हि कपालाद्युत्पत्तिस्तदेकविषयबुद्धिकारणमस्तु । एतेन देशान्तरनीते वस्तुनि तदेकविषया बुद्धिर्व्याख्याता । अत्रापि देशान्तरं नीतस्य तत्र स्थितिरेव तदेकविषयबुद्धिनिमित्तमित्याश्रयणीयं । ननु च भवतु स्वकारणोपनिपातात् तदेकविषया बुद्धिः संसृष्टविषयापि तु किमिति न स्यात् । तस्याः कारणविनाशात् सा न स्यादिति चेत् । अङ्गीकृतस्तर्हि नाशापरपर्यायोऽभावः । उच्यते । न वयमपि संसृष्टबुद्धेः कारणविनाशमभावं ब्रूमः किंतु भावान्तरोदय एव कारणविनाश इति ब्रूमः । ननु निरन्वयविनाशानां बुद्ध्यादीनां कस्य भावान्तरस्योदयो विनाशः । उच्यते । धर्मिणः स्वरूपमात्रेणावसानं तत्र भावान्तरं । ननु किमिदं स्वरूपमात्रं । न तावत् स्वरूपमेव तस्य धर्मोदयकालेऽप्यविनाशात् । तस्माद्धर्माभाव एव धर्मिणः स्वरूपमात्रमित्यङ्गीकरणीयम् । उच्यते । न भावातिरिक्तोऽभावोऽङ्गीक्रियते भाव एव त्वेकाकी सद्वितीयश्चेति द्वयीमवस्थामनुभवति । तत्रैकाकी भावः स्वरूपमात्रमुच्यते । योऽपि चाभावाख्यं तत्त्वान्तरमभ्युपैति तेनापि तावदेकाकिभावोपलम्भनमाश्रित्याभावप्रमितिरङ्गीकरणीया । न ह्यप्रतीते भावेऽभावः प्रतीयते । तत्र कीदृशस्य तावद्भावस्य प्रतीतिरभावावगतौ निमित्तमिति चिन्तनीयं । किं सद्वितीयस्याथ भावविशिष्टस्याथवा भावाभावानपेक्षस्यैकाकिन इति । तत्र न तावत् सद्वितीयस्य भावपुरःसरमभावज्ञानं संभवति विद्यमानस्यैवाभावावगमप्रसङ्गात् । नाप्यभावविशिष्टभावावसायनिमित्ताभावावगतिः । आत्माश्रयदोषप्रसङ्गात् । अभावं हि प्रतीत्य तद्विशिष्टं भावमवसायाभावः प्रतिपत्तव्य इत्यभावावगतिरेवाभावबोधोदये कारणमिति व्यक्तमात्माश्रयत्वं । किंचाभावप्रतीत्यनुप्रवेशिन्यां भावावगतौ नाभावाख्यं प्रमाणान्तरं स्यात् ।

स्वरूपमात्रदृष्टं हि वेश्माद्यर्थं स्मरन् पुनः ।
तत्रान्येनास्तितां पृष्टस्तदेव प्रतिपद्यते ॥

इत्यभावस्य प्रमाणान्तरत्वे युक्तिः । प्राक्तनस्वरूपावगतावेव चेदभावोऽपि प्रतीतो न प्रमेयमवशिष्यते । प्रमेयानवशेषे न प्रमाणान्तरमवकल्पते । तस्मादेकाकिभावप्रतीतेरेकाकिन्येवाभावप्रतीतिर्निमित्तमित्यास्थेयम् । अतोऽप्रतीतेऽप्यभावे स्वरूपमात्रं प्रतीयत इतीतरेतराभावो मात्रशब्देन प्रतिपद्यत इति । अतो भावान्तरोदयादेव तदेकविषयबुद्ध्युदयः । संसृष्टबुद्ध्यनुदयोऽपि स एवेति न किंचिद्दूषणं । यच्च तदेकविषयबुद्धिव्यतिरेकेणाप्यभावोऽवगम्यत इत्युक्तम् । अत्रोच्यते । न प्रत्यक्षरूपैव तदेकविषयबुद्धिरभावरूपेष्यते किंत्वनुमानाद्यात्मिकापि तदेकविषया बुद्धिरुत्पद्यते । सैवाभावो व्यपदिश्यते । ननु च तदेकविषया यदि बुद्धिरभावः कथं तर्हि घटाभावादिव्यवहारः । न हि तस्याः

कश्चिदपि घटादिभिः सह संबन्धोऽस्ति। उच्यते। न तदेकविषयबुद्धिमात्रमभावोऽभिधीयते किंतु दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः सा तदभावो व्यपदिश्यते। तेन यस्मिन् प्रतियोगिनि दृश्ये या तदेकविषया बुद्धिः सा तदभाव इति विशेषव्यपदेशः प्रवर्तते। तेनेह भूतले घटो नास्तीति किमुक्तं भवति दृश्येऽपि घटे भूतलमात्रमुपलभ्यत इति । तदेकविषया च संवित्तिः स्वप्रकाशतया न प्रमाणान्तरमपेक्षते । किंच प्रमाणान्तरवादिनापि प्रमाणान्तराभावः सत्त्वमात्रेणाभावबुद्धिजनको नाभ्युपगमनीयः किंतु विदितत्वेन। तथाहि । कस्यचिद्वस्तुनः क्वचिद्दृष्टस्य पुनस्तस्मिन्नेव दृश्यमानस्य दर्शनकालभाविनमभावं प्रतिपद्यते नासीदयमिहेति । तदा च तत्र दर्शनाभावो निवृत्तः कथमभावावगमं जनयेत् । यदि सत्तयाऽभावबोधस्ततो भवेत्। बुद्ध्युपारूढस्य हि जनकत्वेऽतीतस्यापि सम्प्रत्यनुसंधीयमानस्य घटत एवाभावबोधोपपादकत्वं । तथा चक्षुरादिकं सत्तामात्रेण स्वकार्यकारि नचातिवृत्तं स्वकार्यं जनयति लिङ्गं च बुद्धिविषयापन्नं लैङ्गिकावबोधे जनकमतीतमपि स्मर्यमाणं स्वकालवृत्तिलैङ्गिकमनुमापयति तथेदं द्रष्टव्यम्। एवं चातिपतितस्यापि प्रमाणाभावस्याभावावगमकत्वाद् बुद्ध्यारूढस्य जनकत्वमङ्गीकरणीयं । तत्र यदि प्रमाणाभावस्तु यः सोऽभावरूपस्तदा तस्याप्यवगतिर्विदितादेव कारणादङ्गीकरणीयेत्यनवस्था । यदि तु भावान्तरसंवित्तिरेव प्रमाणाभावोऽभ्युपगम्यते ततस्तस्याः स्वयंप्रकाशतया नानवस्थापद्यते । तथा च सति भावान्तरसंवित्तिरेव स्वयंप्रकाशा प्रमाणाभावरूपा प्रमेयाभावोऽस्तु किमपरेण प्रमेयाभावेन नास्तीत्यादिशब्दप्रयोगोऽपि तस्यामेव स्वयंप्रकाशायां भावान्तरोपलब्धौ युज्येत न पुनर्नास्तीत्यादिबुद्धिराविर्भवति । बोध्यान्तरानवभासात् । योऽपि पदन्यासादिव्यवहारः सोऽपि दृश्ये प्रतियोगिनि तदेकविषयबुद्धिनिबन्धन इति दृश्यत्वापत्तये युक्तैव सूक्ष्मजिज्ञासा। तथाविधप्रतिपत्त्युदय एव चाभाव इति जाते तस्मिन्ननुमानं भावसाधकं न प्रवर्तते । ननु यथा प्रमाणाभाव एवावश्यंभावितया प्रमेयाभावोऽङ्गीक्रियते तथा प्रमाणसद्भाव एव तर्हि प्रमेयसद्भावः स्यात् । प्रमेयसद्भाववादिनापि हि प्रमाणसद्भावोऽवश्याश्रयणीय इति प्राप्तो बाह्यार्थापलापः । नैतदेवं । प्रमेयस्य हि बहिरर्थस्य स्वरूपान्तरप्रतिभासात् । प्रमितिर्हि प्रमित्येकरूपतयैवावभासते । प्रमेयं नीलाद्याकारतया। अभावस्य तु स्वरूपावगतिर्नास्तीति न प्रमाणाभावादन्यः प्रमेयाभावः। प्रमाणाभावोऽपि च स्वरूपान्तरानवगमादेव न भावान्तरप्रमितेर्भिद्यते । भावान्तरप्रमितिश्च स्वयंप्रकाशरूपा न प्रमेयतामनुभवतीति प्रमेयमभावाख्यस्य प्रमाणस्य नोपपद्यते । प्रमेयासद्भावाच्च न प्रमाणान्तरमवकल्पत इति स्थितं ।

यत् पुनः संभवाख्यं प्रमाणमिच्छन्ति । शतादिसंख्यापरिच्छिन्नेषु वस्तुष्वन्तरगतानां विंशत्यादिसंख्याग्राहकं तदनुमानान्न भिद्यते । तथाहि । ये महासंख्यायोगिनस्तेषामवयवेष्ववान्तरसंख्यायोगो दृश्यते तेनावयवानामवान्तरसंख्यायोगनियतसंबन्धा महासंख्या अवयववर्तिनीमवान्तरसंख्यामनुमापयतीति व्यक्तमनुमानत्वं ।

ऐतिह्यमप्यप्रतीयमानमूलभूतप्रमाणान्तरपरंपरावचनमात्रं न प्रमाणतां प्रतिपद्यते। लोकेऽपि प्रत्यक्षादिप्रमाणव्यतिरिक्तः कश्चिन्नोपलक्ष्यते प्रतिभावितार्थनिश्चयसमर्थ इति न प्रमाणतां प्रतिपत्तुमर्हतीति पञ्चैव प्रमाणानीति । ननु यदिन्द्रियपथातिवर्तिनि ह्रस्वज्ञानं तत् प्रमाणान्तरं भवितुमर्हति । तथाहि। तत् तावन्न प्रत्यक्षं । केवलह्रस्वदर्शने ह्रस्वबुद्ध्यभावात् । दीर्घदर्शनह्रस्वदर्शनपूर्वकं भवतु प्रत्यक्षं। तत्प्रतीतौ पुनरजातायां यदिन्द्रियातिपतिते स्वरूपमात्रेणावसिते ह्रस्वज्ञानं तन्न प्रत्यक्षं । नापि तदनुमानं। ह्रस्वदीर्घयोः परस्परसंबन्धनियमाभावात् । न शास्त्रम् । अपूर्वार्थत्वाभावात् । नोपमानम् । असादृश्यविषयत्वात् । नचार्थापत्तिः । ह्रस्वकल्पनायामसत्यां कस्यचिद्दीर्घत्वानुपपत्त्यापादकस्याभावात् । उच्यते । परिमाणविशेषा एते यदणुत्वं महत्त्वं दीर्घत्वमिति। परिमाणं च प्रत्यक्षद्रव्यवर्ति प्रत्यक्षमिष्यते । तदाह भगवान् काश्यपः । संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे च रूपिद्रव्यसमवायाच्चाक्षुषाणीति । तेन दीर्घमप्रतियतः परिमाणविशेषज्ञानं ह्रस्वे वस्तुनि जातमेव किंतु ह्रस्वशब्दस्तत्र न प्रवृत्तः । तत्प्रवृत्ते*र्दीर्घप्रतीतिसापेक्षत्वात् । अल्पदेशव्यापि हि ह्रस्वमुच्यतेऽधिकदेशव्यापि च दीर्घं । हस्तादिसंख्याल्पत्वमहत्त्वाभ्यां च देशस्याल्पत्वं महत्त्वं च । पूर्वापरभावनियमेन च संख्याल्पत्वमहत्त्वे अवधार्यते । तेन पूर्वसंख्यापरिच्छिन्नहस्तादिसंख्याव्यापि ह्रस्वशब्देनोच्यते । परसंख्यापरिच्छिन्नहस्तादिप्रमेयदेशव्यापिदीर्घशब्दवाच्यवस्तुप्रतीतिसापेक्षा ह्रस्वशब्दप्रवृत्तिः । तथा च ययोरल्पान्तरत्वेन साक्षादूनाधिकदेशव्यापिता न प्रतीयते तत्र दीर्घह्रस्वशब्दौ न प्रवर्तेते । हस्तादिना तु परिच्छिद्य तत्संख्याल्पत्वमहत्त्वे अवधार्य तौ प्रयुज्येते । संख्यानां च परस्परं पूर्वापरभावः प्रत्यक्षसिद्ध एवेति न प्रमाणान्तरं व्याप्रियत इति ।

तस्माद्यथोदितलक्षणविषयफलानि पञ्चैव प्रमाणानीति सिद्धम् ॥ :: ॥ :: ॥ :: ॥

इति महामहोपाध्यायश्रीशालिकनाथकृतौ प्रमाणपारायणे षष्ठः परिच्छेदः ॥

समाप्तं चेदं प्रमाणपारायणं नाम पञ्चमं प्रकरणम् :: ॥

---

* तत्प्रतीते- इति क्वचित् पाठः

## ॥ अमृतकला नाम ॥

॥ प्रकरणपञ्चिकायां षष्ठं प्रकरणम् ॥

स्वरूपसंख्यार्थफलेषु वादिभि-
र्यतो विवादा बहुधा वितेनिरे ।
अतो वयं तत्प्रतिबोधसिद्धये
प्रमाणपारायणमारभामहे[1] ॥ १ ॥

अनुभूतिः प्रमाणं सा स्मृतेरन्या स्मृतिः पुनः ।
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥ २ ॥
न प्रमाणं स्मृतिः पूर्वप्रतिपत्तेरपेक्षणात् ।
अन्योन्यनिरपेक्षास्तु धारावाहिकबुद्धयः ॥ ३ ॥
तच पञ्चविधं मानं प्रत्यक्षमनुमा तथा ।
शास्त्रं तथोपमानार्थापत्ती इति गुरोर्मतं ॥ ४ ॥
साक्षात्प्रतीतिः प्रत्यक्षं मेयमातृप्रमासु सा ।
मेयेष्विन्द्रिययोगोत्था द्रव्यजातिगुणेषु सा ॥ ५ ॥
सविकल्पाऽविकल्पा च प्रत्यक्षा बुद्धिरिष्यते ।
आद्या विशिष्टविषया स्वरूपविषयेतरा ॥ ६ ॥
सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।
साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन संमता ॥ ७ ॥
मानत्वे संविदां बाह्यं हानादानादिकं फलं ।
ज्ञानस्य तु फलं सैव व्यवहारोपयोगिनी ॥ ८ ॥
आपेक्षिकं च करणं मन इन्द्रियमेव वा ।
तदर्थसंनिकर्षो वा मनश्चेत् पूर्वकं फलं ॥ ९ ॥
ज्ञातसंबन्धनियमस्यैकदेशस्य दर्शनात् ।
एकदेशान्तरे बुद्धिरनुमानमबाधिते ॥ १० ॥
यः कश्चिद्येन यस्येह संबन्धो निरुपाधिकः ।
प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः ॥ ११ ॥
प्रमेयमनुमानस्य दृष्टादृष्टस्वलक्षणं ।
प्रत्यक्षवच्च कर्तव्या प्रमाणफलवर्णना ॥ १२ ॥
शास्त्रं शब्दविदा यदसंनिकृष्टार्थविज्ञानं[2] ।
सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानम्[1] ॥ १३ ॥
सादृश्याद्दृश्यमानाद्यत् प्रतियोगिनि जायते ।
सादृश्यविषयं ज्ञानमुपमानं तदुच्यते ॥ १४ ॥
विना कल्पनयार्थेन दृष्टेनानुपपन्नतां ।
नयता दृष्टमर्थं या सार्थापत्तिस्तु कल्पना ॥ १५ ॥
अभावेन गृहे भावो बहिष्कल्पनया विना ।
नयतानुपपन्नत्वं कल्प्यमानो बहिर्यथा ॥ १६ ॥
गम्यस्यानुपपन्नत्वमिह कल्पनया विना ।
मानान्तरविरोधेन संदेहापत्तिलक्षणं ॥ १७ ॥
देशेन हि विनाभावो न कदाचन दृश्यते ।
विनाभावेन सिद्धोऽपि तेन संदेहमार्च्छति ॥ १८ ॥
तत्संदेहव्युदासाय कल्पना या प्रवर्तते ।
संदेहापादकादर्थादर्थापत्तिरसौ स्मृता ॥ १९ ॥
गमकस्यानुमाने तु विपक्षासत्त्वलक्षणं ।
गम्यतेऽनुपपन्नत्वं विना गम्येन वस्तुना ॥ २० ॥
तत्सामग्रीविभेदेन भिन्ने एते परस्परम् ।
अर्थापत्त्यनुमानाख्ये प्रमाणे इति निश्चितम् ॥ २१ ॥
अभावाख्यं प्रमाणं ये षष्ठमाहुर्मनीषिणः ।
तेषां प्राभाकरैरेवं प्रत्यादेशोऽयमुच्यते ॥ २२ ॥
प्रमाणं खलु कस्यापि प्रमेयस्यावबोधकं ।
तस्याभावस्य किं तावत् प्रमेयमिति चिन्त्यतां ॥ २३ ॥
ननु नास्तीति बुद्धौ तु बोध्यं यदुपकल्पितम् ।
अभावस्य प्रमाणस्य तत् प्रमेयं भविष्यति ॥ २४ ॥
भूतलेऽत्र घटो नास्तीत्येषा या जायते मतिः ।
सा न भूतलमात्रे स्यात् प्रसक्तेर्घटवत्यपि ॥ २५ ॥
केवले भूतले चेत् स्यात् कैवल्यं तच कीदृशं ।
स्वरूपमात्रं नो तावद्धर्मान्तरमथोच्यते ॥ २६ ॥
प्रमेयान्तरमेवात्र तावताङ्गीकृतं भवेत् ।
तच्च नेन्द्रियविज्ञानं तद्व्यापारानपेक्षणात् ॥ २७ ॥
स्वरूपमात्रदृष्टे हि भावे दूरगतोऽपि सन् ।
कथंचिज्जातजिज्ञासो नास्तित्वं प्रतिपद्यते ॥ २८ ॥
तेन यद्यपि नास्तित्वं बुध्यते व्यापृतेन्द्रियः ।
भावांशमात्रे तथापि प्रत्यक्षस्य प्रमाणता ॥ २९ ॥

---

१ प्रमाणपारायणनामकप्रकरणस्य समासभूतमिदं प्रकरण-मित्यस्यापि प्रमाणपारायणमिति नामान्तरं पुनः प्रथ-मपद्यापन्यासादवसीयत इति ।

२ शब्दविज्ञानापेक्षादात्ममनःसंनिकर्षाद्यदसंनिकृष्टार्थ-विषयं ज्ञानं तच्छास्त्रं नाम प्रमाणम् ।

१ दृष्टगोः पुरुषस्य गवयं तत्सदृशं पश्यतो यद्गोविषयं गवयसादृश्यज्ञानं तदुपमानं नाम प्रमाणम् ।

नास्तित्वं च प्रमाणानामनुत्पत्त्यैव गम्यते ।
नास्तित्वप्रतिपत्तिर्हि तां विना नास्ति कुत्रचित् ॥ ३० ॥
योग्यप्रमाणानुत्पत्तेः कारणत्वपरिग्रहात् ।
अतिप्रसङ्गदोषोऽपि नावकाशमुपाश्नुते ॥ ३१ ॥
अनुत्पत्तिश्च न ज्ञाता सती कारणमक्षवत् ।
तेन लिङ्गत्वशङ्कापि दूरादेव निराकृता ॥ ३२ ॥
अनुत्पत्तिश्च विज्ञानहेतुश्चेल्लिङ्गवद्भवेत् ।
अनवस्था प्रसज्येत नास्तित्वं नापि सिध्यति ॥ ३३ ॥
किंच पादविहारादिव्यवहारश्च भूतले ।
न भूतलपरिच्छेदमात्रेणैव प्रवर्तते ॥ ३४ ॥
प्रसङ्गस्तत्र दुर्वारः कण्टकाद्यन्वितेऽपि हि ।
अथ केवलभूभागपरिच्छेदात् प्रवर्तते ॥ ३५ ॥
विकल्प्यं तत्र कैवल्यं ग्राह्यस्य ग्रहणस्य वा ।
ग्राह्यस्य चेत् पुरैवोक्तो दोषस्तर्हि प्रसज्यते ॥ ३६ ॥
ग्रहस्य चेत् तदा सूक्ष्मजिज्ञासा निष्फला भवेत् ।
जाता हि केवला संविद्वस्तुनो भूतलादिनः ॥ ३७ ॥
एका संसृष्टविषया तन्मात्रविषया परा ।
तन्मात्रविषया या च द्विधा सापि प्रभज्यते ॥ ३८ ॥
प्रतियोगिन्यदृश्ये च दृश्ये च प्रतियोगिनि ।
तत्र तन्मात्रधीर्येयं दृश्ये च प्रतियोगिनि ॥ ३९ ॥
नास्तित्वं सैव भूभागे घटादिप्रतियोगिनः ।
ननु संसृष्टबुद्ध्या यः पुरस्तादवधारितः ॥ ४० ॥
कथं तन्मात्रधीस्तत्र जाता भावेन तस्य चेत् ।
शक्यते तदभावेऽपि वक्तुं यो यत्र सन्नभूत् ॥ ४१ ॥
तस्याभावः कथं तत्र ब्रूयाच्चेत् तत्र कारणं ।
तन्मात्रधिय एवास्तु वरं तत्कारणं ततः ॥ ४२ ॥
तस्याः सम्प्रतिपन्नत्वाद्वादिनोरुभयोरपि ।
चक्षुर्वदपरामृष्टं न कारणमदर्शनं ॥ ४३ ॥
स्वापावस्थागतस्यापि कारणत्वप्रसङ्गतः ।
विशेषापादिका तस्य न निषेध्यस्य दृश्यता ॥ ४४ ॥
भावरूपविशेषो हि नाभावस्योपपद्यते ।
अदर्शने निवृत्तेऽपि पुनर्भावस्य कस्यचित् ॥ ४५ ॥
प्राङ्नास्तित्वं व्यपदिशन्त्यदृष्टस्य पुरा क्वचित् ।
दृश्यस्यादर्शनं तेन ज्ञातं सदवबोधकं ॥ ४६ ॥
दृश्यादर्शनतस्तस्य ज्ञानं चेदव्यवस्थितं ।
यदि तन्मात्रसंवित्तिरूपं तु स्याददर्शनं ॥ ४७ ॥
तदा तस्याः स्वसंवित्तेरनवस्था निवर्तते ।
तेनावश्याभ्युपेतव्यो विमर्शो दृश्यगोचरः ॥ ४८ ॥
अदर्शनमभावो हि तन्मात्रानुभवात्मकं ।
तन्मात्रानुभवश्चायं यददर्शनरूपतः ॥ ४९ ॥
विमृश्यते भूतलादौ तदभावः प्रपद्यते ।
तन्मात्रानुभवश्चायं न मेयः फलभावतः ॥ ५० ॥
किंच स्वयंप्रकाशोऽसाविति न्यायविदो विदुः ।
नास्तीति शब्दस्तत्रैव स्वयंवेद्ये प्रवर्तते ॥ ५१ ॥
तेन नास्तीति विज्ञानन्यायेन न समागतं ।
मेयाभावे ततो मानमभावाख्यं कथं भवेत् ॥ ५२ ॥
घटसत्ता न लभ्या हि नासत्ता चोदितक्रमात् ।
अभावव्यवहारोऽपि निःशङ्कगमनादिकः ॥ ५३ ॥
तन्मात्रानुभवेनैव यथोक्तेन प्रवर्तते ।
यदा यत्र च दृश्यत्वे सत्यप्यनुपलम्भनं ॥ ५४ ॥
तदभावव्यवहृतिस्तदानीं संप्रवर्तते ।
सूक्ष्मसंभवजिज्ञासाप्यतः सार्थकतां गता ॥ ५५ ॥
तां विना न हि दृश्यत्वं सूक्ष्मसत्ताधिरोहति ।
व्यवहारप्रवृत्तिश्च दृश्या दृष्टिनिबन्धना ॥ ५६ ॥
तेन दृश्यत्वसिद्ध्यर्थं सार्थकं सूक्ष्मवीक्षणं ।
नन्वेवं लक्षणग्रन्थस्यार्थस्तर्ह्यस्य कीदृशः ॥ ५७ ॥
मीमांसार्णवसंभूतं पीयतां समयामृतं ।
प्रत्यक्षाद्यपरिच्छेद्यमभावाख्यं चतुर्विधं ॥ ५८ ॥
प्रमेयं साधयन् मानमभावाख्यं वदन्ति ये ।
तन्निराकरणार्थोऽयं यत्नो भाष्यकृता कृतः ॥ ५९ ॥
अभावोऽसंनिकृष्टस्य नास्तीत्यस्यावबोधकः ।
प्रमाणान्न भवतीति प्रमाणाभावतोच्यते ॥ ६० ॥
किं निराकरणस्येह फलमित्यथ चेन्मतं ।
उच्यते लक्षणग्रन्थः प्रत्यक्षादेः समर्थ्यते ॥ ६१ ॥
प्रमाणं कार्यगम्यं हि सर्वत्रेति विनिश्चितं ।
निश्चयश्च प्रमाणस्य कार्यमित्यपि संमतं ॥ ६२ ॥
निश्चयश्चेदमेवेति संवित्तिः सर्ववस्तुषु ।
सच वस्त्वन्तराभावसंवित्त्यानुगमे सति ॥ ६३ ॥
प्रमाणानुदयात् तत्र यद्यभावोऽवसीयते ।
तदा तेन सहैव स्यात् प्रत्यक्षादेः प्रमाणता ॥ ६४ ॥

लक्षणं क्रियमाणं हि तथाभूतस्य युज्यते ।
न कृतं च तथा तेन न कृतं साधु लक्षणम् ॥ ६५ ॥
इमां शङ्कां निराकर्तुं निराकरणमुच्यते ।
कथं पुनरियं शङ्का भवत्यत्र निराकृता ॥ ६६ ॥
अभावाख्यो नाम योऽस्ति यदयं प्रार्थ्यते पुनः ।
प्रमाणानामनुत्पादः साधु तल्लक्षणं कृतं ॥ ६७ ॥
इति पूर्वप्रमाणानां लक्षणानि समादधत् ।
भाष्यकार इमं ग्रन्थं चक्रे नाभावलक्षणं ॥ ६८ ॥
नन्वेवमपि पञ्चाह शब्दं हित्वा कथं पुनः ।
भाष्यकारः प्रमाणानि त्रित्राक्षेपं न संदधत् ॥ ६९ ॥
उच्यते व्यवहारस्य हेतुभूतप्रसिद्धये ।
एवमाहोभयात्मापि व्यवहारः प्रतिष्ठितः ॥ ७० ॥
तत्र भावव्यवहृतिः पञ्चस्वेवोपलभ्यते ।
अभावव्यवहारस्तु दृश्यादृष्टिविमर्शतः ॥ ७१ ॥
सा हि भूभागसद्भावमात्रावच्छेदबन्धना ।
यदा भावव्यवहृतिरिति प्रागेव दर्शितम् ॥ ७२ ॥
मीमांसाजलराशे-
रशेषनयरत्ननिकषनिजधाम्नः ।
इति शालिकनाथ इमा-
ममृतस्य कलामुदाहरद्धीरः ॥ ७३ ॥

इति प्रकरणपञ्चिकायाममृतकला
नाम षष्ठं प्रकरणं समाप्तम् ॥

---

स प्राप्य नृपतिद्वारमवतीर्य तुरंगमात् ।
राजधानीं ससेनानीः सवैशम्पायनोऽविशत् ॥ १ ॥
प्रविश्य च सभामध्ये हर्षबाष्पार्द्रचक्षुः ।
न्यस्तजानुः क्षितौ मूर्ध्ना ववन्दे चरणौ पितुः ॥ २ ॥
आलिलिङ्ग सुतं राजा चुचुम्ब शिरसि क्षणं ।
गृहीतुमैच्छदुत्सङ्गे स तु भूमावुपाविशत् ॥ ३ ॥
द्रष्टुं पुनः पुनः प्रष्टुमतृप्तेनापि भूभुजा ।
विसृष्टोऽथ मुहुः स्थित्वा मातरं वन्दितुं ययौ ॥ ४ ॥
तां सुतालोकनानन्दक्षरत्क्षीरपयोधरां ।
प्रणम्य जननीः सर्वा नन्दयामास वन्दनैः ॥ ५ ॥
अभिनन्द्य कृतं ताभिरवतारणमङ्गलं ।
शुकनासमथ द्रष्टुमायासीत् तस्य मन्दिरं ॥ ६ ॥
द्वारि वाजिनमुत्सृज्य प्रविश्य प्रश्रयेण तं ।
पितृवत् प्रणनामासौ मौलिना मेदिनीं स्पृशन् ॥ ७ ॥
नमन्तमेनमुत्थाप्य स्वयमुत्थाय सादरं ।
शुकनासस्तु जग्राह कण्ठे पुलकिताननः ॥ ८ ॥
कृतयत्नोऽपि नाध्यास्त चारुचामीकरासनं ।
चन्द्रापीडः क्षितावेव तस्य न्यविशताग्रतः ॥ ९ ॥
शुकनासं च मुञ्चन्तमासनं स्वं न्यवारयत् ।
तत्र क्षणमिव स्थित्वा द्रष्टुं प्रागान्मनोरमां ॥ १० ॥
सप्रश्रयं प्रणम्याथ तां विलासवतीमिव ।
ततोऽवाप्तविचित्राशीर्मङ्गलो निरियाय सः ॥ ११ ॥
चन्द्रापीडस्य यादृक्षो दर्शनालिङ्गनक्रमः ।
स वैशम्पायनस्यापि तादृगेव गृहद्वये ॥ १२ ॥
न कश्चन सुतस्नेहविशेषश्च तयोरभूत् ।
मन्त्रिणो राजपुत्रे वा मन्त्रिपुत्रे नृपस्य च ॥ १३ ॥
सर्वोपकरणोपेतं पित्रा पूर्वं प्रकल्पितं ।
जगाम चन्द्रापीडोऽथ कुमारभवनं महत् ॥ १४ ॥
सुसंनिवेशमालोक्य तत्र रेमे चिराय सः ।
स्थितिमिन्द्रायुधस्यापि स्वावासे पर्यकल्पयत् ॥ १५ ॥
ततः स्नातानुलिप्ताङ्गं कृताहारं सुखस्थितं ।
मात्रा विसृष्ट आगत्य कञ्चुकी तमभाषत ॥ १६ ॥
इयं हि पत्रलेखाख्या काम्बोजेश्वरकन्यका* ।
केनापि दैवयोगेन परिभ्रष्टा पितुर्गृहात् ॥ १७ ॥
बालैव† वर्धिता देव्या स्वयमन्तःपुरे निजे ।
योग्या सकलविस्रम्भभूमिस्ते पार्श्ववर्तिनी ॥ १८ ॥
मत्वेति देव्या प्रहिता कुमार प्रतिगृह्यतां ।
इत्युक्त्वोपाहरत् कन्यां विनीतां प्रियदर्शनां ॥ १९ ॥
सा तु तेनार्पिता कन्या ततःप्रभृति तं तथा ।
असेवत यथा चास्य निजं चित्तमिवाभवत् ॥ २० ॥
चकार तां च ताम्बूलकरङ्कस्याधिकारिणीं ।
तुतोष च गुणैरस्याः शीलाचारनयादिभिः ॥ २१ ॥
कियत्स्वपि व्यतीतेषु दिवसेष्वथ पार्थिवः ।
यौवराज्यविधौ सूनोः संविधानमशिश्रियत् ॥ २२ ॥
संमन्त्र्य शुकनासेन सह विस्रम्भनिर्भरं ।

---

* कुन्तलेश्वर— इति पाठान्तरम् ।
† बाल्येऽपि इति पाठान्तरम् ।

संभारसंग्रहारम्भमकरोत् कृतमङ्गलः ॥ २३ ॥
संनिकृष्टाभिषेकं च दर्शनार्थमुपागतं ।
चन्द्रापीडमथोवाच शुकनासः सविस्तरं ॥ २४ ॥
तात विज्ञातशास्त्रस्य विनयाचारशीलिनः* ।
नाल्पमप्युपदेष्टव्यमस्तिस्थिरमतेस्तव ॥ २५ ॥
किंतु लोकोत्तरा लक्ष्मीरभिराममिदं वपुः ।
नवं वयः परा शक्तिरिति दुर्विषहो भरः ॥ २६ ॥
लक्ष्मीर्नाम परं पुंसामन्यथाभावकारणं ।
विरलास्ते विकाराय न येषां तत्परिग्रहः ॥ २७ ॥
पुष्णाति तीक्ष्णमूष्माणं हिनस्ति व्यक्तवादितां ।
करोति भक्तविद्वेषमसमः श्रीकृतो ज्वरः ॥ २८ ॥
न पश्यन्ति न शृण्वन्ति नापेक्षन्ते† हिताहितं ।
न विद्मः किं विचेष्टन्ते कष्टं श्रीविप्लुता नराः ॥ २९ ॥
क्रमागतो नचै‡तस्यामाश्वासः कोऽपि विद्यते ।
ह्योऽपि यत्रोषिता लक्ष्मीस्तत्राद्येव न दृश्यते ॥ ३० ॥
वातरक्ताभिभूतेव भिन्नपादेव कण्टकैः ।
लक्ष्मीर्निधातुं शक्नोति न क्वचिन्निर्भरं§पदं ॥ ३१ ॥
श्रीः सपत्नीमिव द्वेष्टि दृष्टिं सत्पथवर्तिनीं ।
तां विना यत्र तत्रैव पतन्त्यन्धा इवेश्वराः ॥ ३२ ॥
सत्पथस्योपदेष्टारस्तेषां प्रविरला नराः ।
धूर्तैरेते हि भुज्यन्ते हृदयानुप्रवेशिभिः ॥ ३३ ॥
आपातरमणीयेषु विषयेषु निरर्गलं ।
तैरेव हि प्रवर्त्यन्ते मुखमाधुर्यपण्डितैः ॥ ३४ ॥
धूर्तप्रतारिताश्चैव विषयासक्तचेतसः ।
अकस्मात् प्रलयं यान्ति गीतिरक्ता मृगा इव ॥ ३५ ॥
विषयेष्वतिकष्टोऽयं विषयः स्त्रीति नाम यः ।
जीवत्यन्यैः किलाकृष्टस्तेनाकृष्टो न जीवति ॥ ३६ ॥
खलेष्वकृतविस्रम्भो विषयेष्वनिमग्नधीः ।
साधुष्वभिमतो‖नित्यं महतीं श्रियमश्नुते ॥ ३७ ॥
स त्वं न वञ्च्यसे धूर्तैर्न साधुभिरुपेक्ष्यसे ।
यथा न बाध्यसे*कामैः प्रयतेथास्तथा सदा ॥ ३८ ॥
कामं भवान् प्रकृत्यैव धीरः पित्रा च संस्कृतः ।
त्वद्गुणेष्वतिसंतोषो मुखरीकुरुते स्म मां ॥ ३९ ॥
युवराजधुरं पित्रा कल्पितामुद्वहन् स्थिरां ।
विजितामपि चानेन पुनर्जय वसुंधरां ॥ ४० ॥
इत्युक्त्वा विररामासौ तत्कल्याणपरायणः ।
चन्द्रापीडस्तु तद्वाग्भिरलंकृत इवाभवत् ॥ ४१ ॥
अथ पुण्येऽहनि स्नातं विधिवत् कृतमङ्गलं ।
यौवराज्ये प्रियं पुत्रमभ्यषिञ्चन्महीपतिः ॥ ४२ ॥
अभिषेकोत्सवस्तस्य जन्मलाभोत्सवादपि ।
अधिकः सर्वलोकस्य बभूवानन्दवर्धनः ॥ ४३ ॥
सर्वाभ्यो दिग्भ्य आजग्मुर्गृहीतोपायना नृपाः ।
द्विजाश्च तुतुषुः प्राप्तगोभूकनकदक्षिणाः ॥ ४४ ॥
अन्यत्राहनि दैवज्ञः श्लाघ्ययोगगुणान्विते ।
ददौ दिग्विजये यात्रां युवराज्ञो†नृपाज्ञया ॥ ४५ ॥
कृतप्रस्थानहोमोऽसौ विधिज्ञेन पुरोधसा ।
शस्त्रास्त्रचक्रमभ्यर्च्य शास्त्रोक्तैर्मन्त्रविस्तरैः ॥ ४६ ॥
गीतस्वस्त्ययनो विप्रैः प्रचुरस्वर्णतोषितैः ।
यत्नरुद्धास्रया मात्रा कृतप्रस्थानमङ्गलः ॥ ४७ ॥
शंखदुन्दुभिनिर्घोषमुखरीकृतदिङ्मुखः ।
स्तुतस्तारं पतद्भिश्च सूतमागधवन्दिभिः ॥ ४८ ॥
स्रग्विलेपनधूपादिसंभारार्चितदैवतः ।
पितरौ शुकनासं च प्रणम्य निरगाद्गृहात् ॥ ४९ ॥
इन्द्रायुधमथारुह्य पौरजानपदाशिषः ।
शृण्वन्नगर्याः पूर्वेण द्वारेण निरियाय सः ॥ ५० ॥
ततोऽनुगम्यमानोऽसौ बलाहकनिवेदितैः ।
सहस्रसंख्यैः क्षितिपैरुल्लसच्छत्रचामरैः ॥ ५१ ॥
वैशम्पायनमेकत्र पार्श्वे श्वेताश्ववर्तिनं ।
अन्यत्र पत्रलेखां च पश्यन्नश्वतरीस्थितां ॥ ५२ ॥
तस्मिन्नहनि स स्तोकं प्रस्थायोच्छ्रिततोरणं ।
चित्रं निवासमध्यास्त शिप्राकूले प्रकल्पितम् ॥ ५३ ॥
अथापरेद्युरुत्थायाशेषाभरणभूषितः ।
प्रावर्तत प्रबन्धेन प्रस्थातुमतुलोद्यमः ॥ ५४ ॥

---

* —शालिनः इति पाठान्तरम् ।
† न विदन्ति इति पाठान्तरम् ।
‡ —तेतिनै— इति पाठान्तरम् ।
§ —निर्भयं· पाठान्तरम् ।
‖ —मुखो· इति पाठान्तरम् ।

* नाक्रम्यसे इति पाठान्तरम् ।
† —राजे इति क्वचित् सुपाठः ।

पीडयन्निव सैन्येन पातालतलवासिनः ।
रजसा च तदुत्थेन स्थगयन् गगनस्थितान् ॥ ५५ ॥
नमयन्ननतान्* भूपानानतान् परिपालयन् ।
अवश्यानुत्खनन् कांश्चिदुत्खातान् प्रतिरोपयन् ॥ ५६ ॥
विश्वासयन्नविश्वस्तान् संरक्षन् शरणागतान् ।
दस्यूनुत्सादयन् दण्डैः साधून् संमानयन् धनैः ॥ ५७ ॥
ब्राह्मणेभ्यो ददद् ग्रामान् कुर्वन् देवकुलावलीः ।
नवानि निजचिह्नानि तत्र तत्र प्रवर्तयन् ॥ ५८ ॥
वर्षत्रितयमात्रेण समग्रामर्णवावधिं ।
स बभ्राम प्रबन्धेन मान्धातेव वसुंधरां ॥ ५९ ॥
जिगाय प्रथमं प्राचीं दिशं तदनु दक्षिणां ।
ततः प्रतीचीं पश्चाच्च प्रतापनिधिरुत्तराम् ॥ ६० ॥
अथ हेमजटाख्यानां किरातानां निकेतनं ।
स सुवर्णपुरं नाम जित्वा जग्राह हेलया ॥ ६१ ॥
या च कैलाससीमान्तभूर्नितान्तमनोरमा ।
तस्यां दिग्विजयश्रान्तः कियतोऽध्यास्त वासरान् ॥६२॥
एकदा तु स तत्स्थानादारुह्येन्द्रायुधं वने ।
मृगयानिर्गतोऽपश्यत् किंनर्या सह किंनरम् ॥ ६३ ॥
आलोक्य कौतुकाकृष्टदृष्टिरश्वमुखौ च तौ ।
आदित्सुः प्रेरयामास तावेव प्रति वाजिनम् ॥ ६४ ॥
अपूर्वपुरुषालोकत्रासात् कैलासकन्दरं ।
प्रवेष्टुकामौ सहसा वेगेनानुससार तौ ॥ ६५ ॥
पार्ष्णिप्रहरणाभ्यासग्राहितोदग्ररंहसा ।
पञ्चयोजनमाना भूस्तेनाश्वेन व्यलङ्घ्यत ॥ ६६ ॥
तौ च पर्वतमारूढावग्रतस्तस्य किंनरौ ।
ततस्तद्ग्रहणे काङ्क्षां हृदयादुत्ससर्ज सः ॥ ६७ ॥
अशक्तोदनुसर्तुं च कश्चित् परिजनो न तं ।
तार्क्ष्येणाप्यनुगम्येत धावन्निन्द्रायुधः कुतः ॥ ६८ ॥
अथ वल्गां समाकृष्य श्रमस्वेदार्द्रविग्रहं ।
दृष्ट्वैकाकिनमात्मानं श्वसन्तं च तुरंगमम् ॥ ६९ ॥
निर्वर्णयंस्तमुद्देशं मानुषाणामगोचरं ।
विहस्यैवात्मनात्मानं सानुतापमचिन्तयत् ॥ ७० ॥
अहो किमपि मे मौर्ख्यमस्थानाभिनिवेशिनः ।

—नुवतान् इति पुस्तकान्तरपाठः ।
मृत्सा इति पाठान्तरम् ।

यदात्मा बालकेनेव व्यर्थमायासितो मया ॥ ७१ ॥
अगृहीतेन को वार्थः कोऽर्थः प्राप्तेन वामुना ।
किंनरद्वितयेनेति मया मूढेन नेक्षितं ॥ ७२ ॥
पन्था निरूपितो नायमाविष्टेनैव धावता ।
नचात्र लभ्यते मर्त्यो मम मार्गस्य देशकः ॥ ७३ ॥
श्रूयते किल वर्षस्य भारतस्यावसानभूः ।
कैलाससंनिकृष्टेयमिह मर्त्यस्य का कथा ॥ ७४ ॥
वने पर्णतृणाकीर्णे पादमुद्राश्च वाजिनः ।
न स्युर्यदनुसारेण यास्यामि शिविरं शनैः ॥ ७५ ॥
केवलं दक्षिणामाशां पुरस्कृत्य यथा तथा ।
गन्तव्यं किंतु मध्याह्नसमयोऽयमुपस्थितः ॥ ७६ ॥
अनुभूतोऽतिमात्रं च खेदस्तदिह साम्प्रतं ।
लब्ध्वा कुतोऽप्यपस्ताभिर्यास्यामि विगतश्रमः ॥७७॥
इत्थं विचिन्त्य पानीयमन्वेषितुमितस्ततः ।
परिभ्रमन् घनस्निग्धं शाखिनां खण्डमैक्षत ॥ ७८ ॥
ततस्तदनुकूलेन पथा गच्छन् समीरणैः ।
आह्लाद्यत नवोत्फुल्लकमलामोदवाहिभिः ॥ ७९ ॥
मत्तद्विपमदासिक्तमृणालदलदन्तुरं ।
स पन्थानमथापश्यदम्भसामनुमापकम् ॥ ८० ॥
तेन गत्वागखण्डस्य मध्ये जलधिसंनिभं ।
अदृष्टपारपर्यन्तमालुलोके महत् सरः ॥ ८१ ॥
तदालोकनमात्रेण दूरादपगतश्रमः ।
प्राप्य तत्पुलिनोपान्तं वाजिनोऽवततार सः ॥ ८२ ॥
कृत्वापनीतपर्याणं तं स्थलीलुठितोत्थितं ।
गृहीतशाड्वलग्रासमाप्लुताधूतकेसरम् ॥ ८३ ॥
उत्तार्य सरसस्तीरतरौ संयम्य वाजिनं ।
छित्त्वासिधेनु१लूनानि तृणान्येतस्य चाग्रतः ॥ ८४ ॥
स्वयं सस्नौ पपौ वारि बुभुजे बिसकन्दलीम् ।
उत्तरीयशिरोधानो निषसाद शिलातले ॥ ८५ ॥
ततो मुहूर्तविश्रान्त उत्तरस्मिन् सरस्तटे ।
समुच्चरन्तं शुश्राव गीतध्वनिममानुषं ॥ ८६ ॥
तस्यां दिशि दृढासक्तचक्षुरुत्क्षिप्तकन्धरः ।
तमादौ निबिडश्रोत्रशुक्तिरिन्द्रायुधोऽशृणोत् ॥ ८७ ॥
कुतोऽत्र विजने गीतमित्याविष्कृतकौतुकः ।

१ असिधेनुरिका ।

उत्थाय चन्द्रापीडोऽथ तामेव दिशमभ्यगात् ॥ ८८ ॥
गीतश्रवणलुब्धेन सलीलमभिधावता ।
अपृष्टेनापि मार्गोऽस्य मार्गेणैव न्यवेद्यत ॥ ८९ ॥
गत्वा प्रासादमैक्षिष्ट स्फाटिकं नातिदूरतः ।
हसन्तमिव कैलासलक्ष्मीविभवमंशुभिः ॥ ९० ॥
देवं चतुर्मुखं तत्र रत्नपीठप्रतिष्ठितं ।
भगवन्तमुमाक्रान्तं ददर्श प्रणनाम च ॥ ९१ ॥
तस्याथ दक्षिणां मूर्तिमाश्रित्य विहितासना ।
उत्सङ्गनिहितां वीणां वादयन्ती कलस्वनां ॥ ९२ ॥
देहप्रभावितानेन कुन्दगौरेण सर्पता ।
साक्षाल्लक्ष्मीरिव क्षीरजलधेर्मध्यवर्तिनी ॥ ९३ ॥
कोपाग्निशमितानङ्गप्रत्युज्जीवनवाञ्छया ।
रतिः प्रसादयन्तीव तपसा पार्वतीप्रियं ॥ ९४ ॥
नवेऽपि वयसि प्राप्तवैराग्याभ्यासवासना ।
व्यलोकि कन्यका तेन धृतपाशुपतव्रता ॥ ९५ ॥
चन्द्रापीडश्च तां दृष्ट्वा विस्मयाविष्टमानसः ।
केयं स्यात् कन्यका नास्या दिव्यतां प्रति संशयः ॥ ९६ ॥
नान्तर्धानमियं गच्छेन्न वा गगनमुत्पतेत् ।
न मौनमवलम्बेत मर्त्यसंदर्शनेन वा ॥ ९७ ॥
इत्यादि चिन्तयन्नास्त स्तम्भावासितविग्रहः ।
गीतावसानसमयप्रतीक्षणपरायणः ॥ ९८ ॥
साथ गीतं समापय्य विनिधाय च वल्लकीं ।
प्रणम्य चन्द्रचूडाय चन्द्रापीडमभाषत ॥ ९९ ॥
अतिथे स्वागतं तुभ्यं सौम्य विश्रम्यतामिह ।
प्राप्तोऽसि स्वामिमां भूमिमित आगम्यतामिति ॥ १०० ॥
चन्द्रापीडस्तदाकर्ण्य बह्वात्मानममन्यत ।
व्रजन्तीमनुवव्राज देवतावत् प्रणम्य तां ॥ १ ॥
विवेश नातिदूरेऽथ निजासनगुहा*मसौ ।
स्थिताजिनकुशालाबुपात्रदण्डकमण्डलुं ॥ २ ॥
तत्र दर्भासनासीनमुपविष्टा मृगाजिने ।
पप्रच्छ चन्द्रापीडं सा स्वरूपागमनादिकं ॥ ३ ॥
स तु सर्वं यथावृत्तमाचचक्षे सविस्तरं ।
सा च विज्ञाय वृत्तान्तं निर्जगाम बहिर्मुहुः ॥ ४ ॥

* —अमगुहा— इति पाठान्तरम् ।

गृहीतभिक्षापात्रा च क्षणमास्त तरोरधः ।
आपूर्यत स्वयं शीर्णैः फलैस्तदमृतोपमैः ॥ ५ ॥
ततस्तदुपभोगाय चन्द्रापीडं न्ययुङ्क्त सा ।
अन्वतिष्ठद्वचस्तस्याः स च विस्मयमानधीः ॥ ६ ॥
तस्मिन्नथ कृताहारे गिरिप्रस्रवणान्तिके ।
गत्वा सापि फलाहारप्रक्रियामाचमाचरत् ॥ ७ ॥
आगत्य च पुनस्तस्मिन्नुपविश्य मृगाजिने ।
तारापीडोज्जयिन्यादिकथया क्षणमास्त सा ॥ ८ ॥
अपि नाम स्ववृत्तान्तं मद्दुदेषापि वर्णयेत् ।
पृष्टेत्येवं क्षणं दध्यौ चन्द्रापीडः सकौतुकः ॥ ९ ॥
दृष्ट्वा चास्याः प्रकृतिमधुरामाकृतिं भावशुद्धिं
दाक्षिण्यं च प्रकृतिसरलं लब्धवाक्यावकाशः ।
आत्मोदन्तं नियतमखिलं वक्ष्यति प्रार्थितेयं
चन्द्रापीडः क्षणमितिकृतप्रश्नसंप्रत्ययोऽभूत् ॥ ११० ॥
इति कादम्बरीकथासारे तृतीयः सर्गः ॥ ३ ॥

श्रीः

अप्येतद्विश्वमालोक्य जलबुद्बुदवच्चलम् ।
यन्मायामोहितप्रज्ञा रागवन्तः पुनर्वयम् ॥ १ ॥
भवामस्तत्र तन्मायां जेतुं विश्वविमोहिनीम् ।
शरण्यं भवभीतानामीश्वरं तमुपास्महे ॥ २ ॥

॥ अथ विट्ठलशास्त्रिणो जीवनवृत्तान्तः ॥

आसीत् कोङ्कणेषु कल्याणग्रामनिवासी जोसीत्युपनामको महाराष्ट्रब्राह्मणो बालकृष्णो नाम विट्ठलशास्त्रिणः पिता । सोऽस्मिन् विट्ठलशास्त्रिण्यष्टवर्षदेशीय एव सदारपुत्रः काशीमाजगाम । अवात्सीच्चात्र स कथमप्युपार्जितस्वल्पधनो वर्षद्वयं सुखेन । ततो दैवोपहतस्य तस्य भार्यायां प्रसूतिमारुतेन मुक्तजीवितायां सोऽपत्यप्रेम्णा सुतसंवर्धनपरोऽपि प्रत्ययभार्यामरणजनितशोकातिशयः स्वयमपि वर्षद्वयाभ्यन्तर एव परलोकमगात् । एवमुपरते ताते मातरि चोपशान्तायामयं विट्ठलशास्त्री तदानीं द्वादशवर्षवयस्को निराश्रयः परमबुद्धिमत्तयाभ्यासशालितया चाल्पेनैव कालेनाधीतऋग्वेदसंहिताब्राह्मणस्ततः समुद्भूतकाव्यरसास्वादरुचिः काव्यकोषकौमुद्यादिव्युत्पत्तिजनकान् ग्रन्थानधीत्य पर्वतीयभवानीशंकरशास्त्रिणः समीपे वासवदत्ताकादम्बर्यादिगद्यग्रन्थान् काव्यप्रकाशादिसाहित्यशास्त्रीयग्रन्थांश्चाध्यैष्ट । ततो न्यायशास्त्रं पिपठिषुस्तच्छास्त्रेऽतिप्रवीणस्यान्ध्रदेशीयभाऊशास्त्रिणः समीपे तच्छास्त्रं सम्यगधीतवान् । एवं संस्कृतेऽधीत्ययमिङ्गलण्डीयभाषोपनिब-

द्वयन्यार्थजिज्ञासुर्नगर एव द्वित्रांस्तद्भाषाग्रन्थानितस्ततोऽधीत्य तत्र सम्यग्व्युत्पत्तिमुपलिप्सुस्तदानीं पाठशालाध्यक्षस्य प्रभोर्ब्यालण्टैनाख्यस्याभ्यनुज्ञया संस्कृतेङ्गलण्डीयवर्गं प्रविवेश । तत्र प्रविष्टः स दशवर्षाणीङ्गलण्डीयभाषामधीयानस्तद्भाषास्थान् कतिपयबेकनाचार्यप्रणीतनोवमार्गननसंज्ञकादिशास्त्रीयग्रन्थान् संस्कृतभाषायां व्यतनोत् । एवं यान् शास्त्रसंग्रहादिनूतनग्रन्थान् प्रभुर्ब्यालण्टैनाख्यः संस्कृते प्राणैषीत् तेषु सर्वेष्वयं विठ्ठलशास्त्री बलवत् तत्साहाय्यमकरोत् । तेनास्मिन्नतिप्रीणानः स प्रभुस्त्रिपञ्चाशदुत्तराष्टादशशततमे ख्रीष्टशकेऽमुं न्यायशास्त्राध्यापकसहकारिपदे न्ययुङ्क्त । ततस्त्रीणि वर्षाणि तत्कार्यं सम्यक् कुर्वाणेऽस्मिन् परमप्रीतः स एव प्रभुः षट्पञ्चाशदुत्तराष्टादशशततमे ख्रीष्टशकेऽमुं प्रधानसांख्यशास्त्राध्यापकपदे न्ययौक्षीत् । ततश्चाल्पैरेव वर्षैः प्रभौ ब्यालण्टैनाख्ये स्वदेशं गतवति पाठशालाध्यक्षमार्यग्रिफिथसाहिबाख्यमप्ययं तैस्तैः पाठनादिभिः स्वकर्मभिरत्यन्तं समतोषयत् । एवं सांख्यशास्त्राध्यापकपदवीमारूढ उपचीयमानकीर्तिर्मध्यमे वयसि वर्तमानः सर्ववस्तूनामानुकूल्येनात्मानं सुखिनं मन्यमानो दैवोपहतो गतसंवत्सरारम्भे सहसैवातितीव्रज्वरेण व्याप्ततनुश्चिकित्सकैरलं चिकित्सितोऽपि महतीं पीडामन्वभवत् । ततो महता क्लेशेन कथमपि प्रशमिततीव्रज्वरोऽतिदुर्बलतया स्वकार्यकरणेऽक्षमोऽपि पाठशालायां प्रत्यहमाजगाम । ततश्च पुनरनेकविधैः प्लीहादिभी रोगैर्मृत्योः पाशैरतितरां बद्धोऽयमेकोनचत्वारिंशद्वर्षवयस्कोऽनपत्यः सप्तषष्ट्युत्तराष्टादशशततमे ख्रीष्टशके मार्चसंज्ञकमासस्य षड्विंशे दिने सूर्यास्तानन्तरमल्पेनैव कालेन स्वमित्राण्यत्यन्तं खेदयन् परलोकमगात् ।

एवं परलोकं गतवत्यस्मिन्नतितरां खिन्नोऽप्यहमस्य सुहृदो जीवनवृत्तमीदृग्विलक्षणपुरुषवृत्तजिज्ञासूनां विदेशीयानां भारतवर्षीयाणां च जनानां कर्णपथं निनीषुस्तत् संक्षेपतो व्यलिखम् ।

गोविन्ददेवशास्त्री

---

## RÁMA AND SÍTÁ.

### V.

Then flashed the fury from KAIKEYI's eyes,
As thus she spake with long and burning sighs:
"Yea, I will set upon the throne my son,
And banish RÁMA ere the day be done.
But aid me, damsel, and some plan declare
That never RÁMA, but my son, be heir."
"Hast thou forgotten?" thus the maid replied,
"Or dost thou love thy secret thoughts to hide?
Or dost thou wish, gay queen, to hear me tell
An ancient story which thou knowest well?
Then I will speak: Lady, be thine to hear,
And mark my story with attentive ear.
In days of yore the Gods thy husband chose
To aid their arms against their demon foes.
Thou, of thy love, didst follow where he led,
And thou wast near him when he fought and bled.
Thy care preserved him, when in desperate strife
He sank exhausted, and restored his life.
Grateful for this, thy loving husband sware
To grant two boons, thy first and second prayer.
Then come, remind him of the promised vow,
And let thy double suit be granted now.
For thine own son, thy well-loved BHARAT, claim
The right of heirship and the Regent's name,
And pray that RÁMA in the woods may roam,
Twice seven long years an exile from his home.
Once more attend: the gloomy chamber seek,
Rage in thine eye and tears upon thy cheek;
With robes disordered and dishevelled hair,
Fall on the cold ground and lie prostrate there.
When the king comes, still sad and speechless lie,
Give him no answer, lift not up thine eye.
Well do I know that thou hast ever been,
And more than ever art, his favourite queen.
For thy dear sake he'd dare, O well-loved dame,
To cast his body to the burning flame:
Such death were welcome, but he ne'er will brook
To anger thee or bear thine angry look.
Fain will he offer gems and pearls and gold:
Turn from his gifts, be silent, stern and cold.
Then to his mind those promised boons recall,
And claim them boldly: he will grant thee all.
When he has raised his darling from the floor,
And sworn again to grant as first he swore,
Then for thy son demand the royal sway,
And drive Prince RÁMA to the woods away.
For twice seven years if absent he remain,
The people's love may stablish BHARAT's reign.
Cast shame away: the king is well inclined,
And this the hour to move his easy mind."
Then queen KAIKEYI, full of joy and pride,
Thus to her maid in gladsome tone replied:
"Good is the plan thy ready wits devise,
Sagest of crook-backed damsels, deep and wise!
Without thy constant care, thy faithful aid,
Unknown to me the king his plot had laid.
The crook-backed race are hideous to the sight,
Deformed, malicious, born for guile and spite:
Far other thou, with features formed to please,
A lovely lotus bending to the breeze.
Thy hump, dear damsel, too, becomes thee well,
For there the arts of noble warriors dwell;
And when KAUSALYA's son makes way for mine,
Around that hump a chain of gold shall shine.
Yes, I will deck thee on that happy day
When RÁMA banished takes my fears away:
With finest gold these hands thy hump shall deck,
And fling rich pearls around thy graceful neck.

A precious frontlet, wrought with utmost care,
Bound on thy brow, shall make thy face more fair,
And thou shalt move along in bright attire,
Each woman's envy and each man's desire:
Fair as a lovely Goddess shalt thou be,
And challenge the sweet moon to rival thee."
Her lady's praise with joy the damsel heard,
And thus again with wiles her spirit stirred,
As the queen lay upon her sumptuous bed
Like sacred fire upon the altar fed:
"Mistress, arise, the glorious plot complete:
Let the king find thee in thy sad retreat.
No prudent builder will the bridge delay
Till the wild waters shall have rolled away."
She ceased. The lady of the glorious eyes
Rose from her couch as MANTHARA bade her rise,
And sought the mourner's cell, in beauty's pride
Sure of his love who gave and ne'er denied.
There on the ground, obedient to the girl,
She threw her necklace and each matchless pearl,
And all the lustre to her beauty lent
By sparkling chain and golden ornament.
Like a fair nymph upon the ground she fell;
And, "Soon," she cried, "thy task will be to tell
That BHARAT rules as heir in RÁMA's stead,
Or that the monarch's darling queen is dead."
Slôw and majestic, as the Lord of Night,
When his fûll glory fears the Dragon's might,
Glides through the calm fields of the autumn sky,
Where clouds with fleecy skirts are floating by,
So to KAIKEYI's palace, rich and vast,
King DASARATHA in his glory passed.
There stalked flamingoes mixt with swans and cranes,
And gorgeous peacocks spread their jewelled trains;
There screamed the parrot in his home of wire,
There breathed the music of the flute and lyre.
There many a damsel waited in the shade,
Here sat a dwarf, and there a crook-back maid
Lay in the shadow of the woven bower
Where glowed the champac and asoca flower.
There many a porch, above the waving wood,
On ivory columns wrought with silver, stood.
There trees that aye with fruit and blossom glowed
O'er limpid waters hung their tempting load.
Here seats of silver and of gold were placed,
Here cates and viands lured the dainty taste.
Not e'en the Gods who dwell at ease, I ween,
Could boast a brighter home than that fair queen.
With longing eyes the monarch looked around,
But no KAIKEYI in her bower he found;
Yet 'twas the time at which the royal dame
Was ever there to greet him as he came.
Then, moved by love and racked with anxious thought,
News of his darling from her maids he sought.
"My lord," a trembling damsel thus replied,
"The queen in anger to the cell has hied."
Then sick at heart, his senses all astray,
The monarch hastened where the lady lay
Upon the cold bare ground, in mean attire,
While grief consumed her as a burning fire.
There the old king beheld his youthful wife,
Most fair, most wicked, dearer than his life,
Prostrate and speechless, lovely and forlorn,
Like a sweet creeper by the roots uptorn,
Or a frail nymph of heaven, or Goddess, hurled
From glorious Swarga to this nether world.
As bends an elephant to heal the smart
Of his mate wounded by a venomed dart,
Soothes her with tender touch, and tries in vain
To check the flowing blood and stay her pain;
So the sad husband tried each kind caress
To still the fury of the queen's distress:
"I know not, darling", thus he spake, with sighs,
To the fair lady of the lotus eyes,
"The sudden cause of all this wrath and woe,
Why thou art angry, why thine eyes o'erflow.
Who has offended thee, or dared to slight
My love, my lady and my sole delight?
Tell me, my dearest, art thou faint or ill?
I have physicians of unrivalled skill,
One for each varied malady and pain,
Come, speak, KAIKEYI, and be well again.
Wouldst thou for foe or friend have dole or meed?
The guiltless punished or the guilty freed?
The low exalted or the proud disgraced?
The poor made wealthy or the rich abased?
Tell but thy secret wish, dear love, I pray;
My lords and I thy slightest word obey.
By all the merit that my life has won
I swear, my darling; speak, and it is done.
The whole broad earth whereon the sunbeams shine,
And all her flocks and corn and gold are mine;
Choose what thou wilt: no bounds shall bar thy choice.
But let me hear again thine own dear voice,
And all thy grief and pain shall pass away
Like hoar frost shrinking from the God of Day."
The queen replied: "No insult has distressed,
No fault of others has enraged my breast.
One earnest wish I have, if thou wilt swear,
Bound by a mighty oath, to grant my prayer."
She ceased. The king, by his great love betrayed,
Leapt, like a roedeer, to the snare she laid.
With a fond smile beneath his darling's head
He placed his hand, and raised her up, and said:
"Hast thou not learnt, my foolish love, till now,
That on this earth there is none dear as thou
To me, save only Ráma? By his life
I swear to grant thee what thou wilt, dear wife:
I swear by him most worthy long to live,
Blest with all blessings that the Gods can give,

